## चतुर्थोऽध्यायः ।

मार्कण्डेयः — तत्राज्ञायुक्तमद्वैधं दीप्तं गम्भीरशब्दवत् ।
क्वचिनिरुक्त संयुक्तं वाक्यमेतत्स्वयंभुवः ॥ १ ॥

यत्किंचिन्मिश्रसंयुक्तं युक्तं नाम [1]विभक्तिभिः ।
प्रत्यक्षाभिहितं यच्च [2]तद्दशीणां वचःस्मृतम् ॥ २ ॥

नै[3]गमैर्विविधैश्शब्दै[4]र्विपातबहुलं च यत् ।
न चापि सुमहद्वाक्यमृची[ ? चि ]कानाँ वचः स्मृतम् ॥ ३ ॥

अविस्पष्टपदं ज्ञेयमृषिपुत्रवचो नृप ।
भूतभव्यभवज्ञानं जन्मदुःखविकुत्सतम् ॥ ४ ॥

मित्राणां तद्भवेद्वाक्यं [5]गर्भेष्वर्थ प्रवर्तनम्
आज्ञायुक्तं [6]तु वचनं तथा हेतुविवर्जितम् ।

राजर्षीणां तु विज्ञेयं बह्वर्थं बहुविस्तरम् ।
बह्वभिधानं [7]बह्वर्थं देवतानां प्रकीर्तितम् ॥ ६ ॥

बह्वभिधानमल्पार्थं दानवानां प्रकीर्तितम् ।
अल्पाभिधानमल्पार्थं गन्धर्वाणां तथा भवेत् ॥ ७ ॥

दुर्बोधं विषमं चैव राक्षसानां प्रकीर्तितम् ।
गूढाक्षरं तु यक्षाणां किन्नरैरुक्तवत्तथा ॥ ८ ॥

नागानामतिविस्पष्टं पुनरुक्तसमन्वितम् ।
रागद्वेषसमायुक्तं हेतुमत्पौरुषं भवेत् ॥ ९ ॥

[8]मन्त्रास्तु विविधाः प्रोक्ताऋग्यजुः[9]सामलक्षणाः ।
स्तुतिर्निन्दा प्रशंसा च आक्रोशः [10]प्रेष एव च ॥ १० ॥

---

१. B. विभक्तितः. २. V.A.B. तादशीनां. ३. C. नागमैः ४. A. —र्निगातं बहुलं. ५. V. गर्भेषु च प्रवर्तनम्. ६. V. च. ७. V. बह्वर्थं. ८. V.B.C. मन्त्रा नवविधाः प्रोक्ताः ९. B. सामलक्षणा. १०. V.A. प्रेष्य. B. पुष्य.

[1]प्रश्नोऽनुज्ञा तथाख्यानमाशास्ति[2]विषया मताः ।
एवं [3]तु सर्वविद्यानां विहितं सर्वलक्षणम् ॥ ११ ॥

पौरुषे [4]भिद्यते तच्च नान्यत्रेति विनिश्चयः ।
स्वभावान्न[5] च्यवन्त्येव ये प्रोक्ता नरवर्जिताः ॥ १२ ॥

दृश्यते हि पुमान्कश्चि[6]त्कचिच्छ्रेष्ठतमो धिया ।
तस्मात्तत्रैव तस्योक्ता बुद्धिः श्रेष्ठतमा नृप ॥ १३ ॥

[7]एतन्मयोक्तं सुपरीक्षणं ते वाक्यस्य भो वाक्यविदांवरिष्ठ ।
विचक्षणैरत्र च रागतस्तु ज्ञेयं तथा द्वेषसमागमाच्च ॥ १४ ॥

दिव्येन [8]तुल्यं यदि [9]वार्षवाक्यं वाक्येन तुल्यं यदि वा परेण ।
वाक्यं [10]नराणां नृप रागतस्तु ज्ञेयं यथाद्वेषसमागमत्वात् ॥ १५ ॥

इति श्रीविष्णुधर्मोत्तरे वाक्यपरीक्षाध्यायो नाम ॥ ४ ॥

---

१. B. प्रश्नो न ज्ञा. २. A.B.C. विषयो. ३. V. ते. ४. V. विद्यते. ५. A. च्यवन्त्येते. B. —श्यवंत्येते. ६. V. —क्श्चिच्छ्रेष्ठतमो. ७. A.B.C. omit Ślo. no. 14. ८. B. तुल्य. ९. C. वार्षेण वाक्यं. १० V. नाराणां.

## पञ्चमोऽध्यायः

मार्कण्डेयः — [1]ॐ अल्पाक्षरमसंदिग्धं सारवद्विश्वतोमुखम् ।
अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः ॥ १ ॥
उत्सर्गेणापवादेन द्विविधं तत्प्रकीर्तितम् ।
सूत्रं व्युदासश्च तथा तथोदाहरणं नृप ॥ २ ॥
प्रत्युदाहरणं चैव चतुरङ्गं प्रकीर्तितम् ।
वाक्यं [2]चैवा[र्थ] वाक्या[र्थः] पदार्थः पदमेव च ॥ ३ ॥
चतुरङ्गमिदं चेति तथैवान्यत्प्रकीर्तितम् ।
[3]प्रतिज्ञा हेतुदृष्टान्तावुपसंहार एव च ॥ ४ ॥
तथा निगमनं चैव पञ्चावयवमिष्यते ।
आरम्भोऽथापि संबन्धः सूत्रार्थस्तद्विशेषणम् ॥ ५ ॥
[4]चोदना परिहारश्च व्याख्या सूत्रस्य षड्विधा ।
सूत्रेष्वेव हि तत्सर्वं [5]यद्वृत्तं समुदाहृतम् ॥ ६ ॥
[6]विस्तरोक्तं मतिं हन्ति समासोक्तं न गृह्यते ।
समासविस्तरौ हित्वा वक्तव्यं यद्विवक्षितम् ॥ ७ ॥
अपार्थं व्याहतं चैव पुनरुक्तं तथैव च ।
तथा विभिन्नसंस्थानं युक्तिहीनं विवर्जयेत् ॥ ८ ॥
क्रमभेदो विभक्तश्च गुरुसूत्रं तथैव च ।
अभिधानस्य चान्यत्वं [7]नैतानि स्युरकारणात् ॥ ९ ॥
स(? पू)र्वं कृत्वा पदच्छेदं समासं तदनन्तरम् ।
समासे तु कृते पश्चादर्थं ब्रूयाद्विचक्षणः ॥ १० ॥
सूत्रार्थश्च पदार्थश्च हेतुश्च क्रमशस्तथा ।
निरुक्तमथ विन्यासो व्याख्या योगस्य षड्विधा ॥ ११ ॥

---

१. V.B.C. omit ॐ. २. V.A.B.C. चैवार्थवाक्यार्थं. ३. A.B. प्रज्ञाहेतुं सदृष्टांतं. C. प्रज्ञाहेतुषु दृष्टांतमुप— ४. C. चोदकं. ५. V. यद्वृतं. ६. A. विस्तरोक्तिः ७. B. नैवानि.

[1]प्रत्यक्षमनुमानं च तथाप्तवचनं भवेत् ।
त्रिभिः प्रमाणै[2]स्संयुक्तं तन्त्रं प्रामाण्यमर्हति ॥ १२ ॥

प्रत्यक्षाभासमप्युक्तं तथा वै मृगतृष्णिका ।
आभासमनुमानस्य बाष्परेणुचयौ यथा ॥ १३ ॥

धूमशङ्कां जनयतो न च वह्न्युपलब्धये ।
आप्तत्वं दर्शयित्वा तु यदनाप्तेन भाषितम् ॥ १४ ॥

तदाप्तवचनाभासं वदन्ति नृपसत्तम ।
[3]रागद्वेषविनिर्मुक्त आप्त इत्यभिधीयते ॥ १५ ॥

नैरुक्तं द्विविधं विद्धि [4]सिद्धमौत्पत्तिकं तथा ।
निर्वक्तव्यं तु तत्सिद्धमर्थसिद्धिस्तु [5]सर्वदा ॥ १६ ॥

तत्र [6]त्वौत्पत्तिकं सर्वं गौरश्वः पुरुषो यथा ।
दशधा तु गुणोद्गीतं तद्वक्ष्यामि यथागतम् ॥ १७ ॥

ग(? गौ)णो [7]नैमित्तिको भाक्तः संवादः कार्तिक(? र्तक)स्तथा ।
उ(? औ)पचारश्च सांबन्धः [ [8]संयोगः क्रैयिकादयः ] ॥ १८ ॥

गुणात्तु गौणं पश्यामो महदित्येवमादयः ।
निमित्ततस्तु नैमित्तं खण्डम[? मु]ण्डादिकं यथा ॥ १९ ॥

भक्त्या [भा]क्तं [9]नृसिंहः स्यादमातरि च मातृवत् ।
[10]सुसंवदन्ति यस्मिन्स संवादो जित्वरी यथा ॥ २० ॥

कार्तकः स्यात्तु कृतको देवदत्तादिको यथा ।
[11]उपचारा(? चौ)पचारस्तैलपाशं तुला यथा ॥ २१ ॥

---

१. C. adds one śloka more after ślo. 11

उपोद्घातः पदमथ पदार्थः पदविग्रहः ।
अवमश्च प्रत्यवस्था व्याख्या तन्त्रस्य षड्विधा ॥

२. V. स्संयुक्तैस्तन्त्री. ३. A.B. रागद्वेषं विनिर्मुक्तं आप्त. C. रागद्वेषविनिर्मुक्तमाप्त. ४. V.A. सिद्धमौत्पात्तिकं. B. सिद्धिमोत्पार्थिकं. ५. B.C. drop सर्वदा. ६. A. त्वोत्पात्तिकं. B. तत्रोद्वात्पत्तिकं. ७. V. नैमित्तिकोभ्यक्तः. C. नैमित्तिको भाक्तं. ८. A.B.C. क्रौयिको यौगिकेच्छकौ. V. गौणिको यौगिकस्तथा. ९. A.B. नृसिंहस्य अमातरि. V. नृसिंहास्यादमातरि. १०. V. समं वदन्ति यस्मिंश्च संवादश्चित्वरी यथा । C. समं वदन्ति. ११. C. उपचारश्चोपमानस्तैलपाशं. V. उपचारस्तूपचारात्तैलपाशं.

सम्बन्धतस्तु साम्बन्धश्छत्री मीमांसको यथा ।
संयोगादपि संयोगः क्रियायाः [1]कैयिकः स्मृतः ॥ २२ ॥

पटकूलगुडच्छेद्यो ज्ञेयः शाकटिकस्तथा ।
एवं परेषां च परं स्यान्नैगम[2]निघण्टुकम् ॥ २३ ॥

[3]साध्योऽर्थो न प्रसिद्धश्चेत्साधनानां विधिं शृणु ।
यद्विपन्नं तु दृश्येत तत्साध्यं साधनैरिमैः ॥ २४ ॥

आत्मेन्द्रियमनोर्थानां संयोग उपदिश्यते ।
ज्ञा [ नं ] देशादिसंविष्टं प्रत्यक्षमिति तद्भवेत् ॥ २५ ॥

बुद्ध्या शरीरभूतात्मा यश्च युक्तोऽनुमीयते ।
सोऽग्निर्धूमाद्यथा [4]विद्यादनुमानं तदिष्यते ॥ २६ ॥

वेदविद्याऽविरुद्धं यत्सा स्मृतिः शिष्टसम्मता ।
अप्रत्यक्षफलं विद्यात्साधनं शास्त्रसंज्ञितम् ॥ २७ ॥

द्वयोः सदृशयोरेकं निर्दिष्टं साधयेत्परम् ।
गवयादिव [5]गोसिद्धिरुपमानं तदिष्यते ॥ २८ ॥

[6]साध्योऽर्थश्चेदनुक्तोऽर्थो वाक्ये यस्मिन्प्रकल्प्यते ।
सार्थापत्तिर्दिवा भुङ्क्ते [7]देवदत्त इतीति यत् ॥ २९ ॥

निपातनाद्योगविभागदर्शना-
द्द्रूपदेशादनुवार्तिकादपि ।
स्वतन्त्रसिद्धेः परतन्त्रदर्शना-
त्प्रसाधये[8]ल्लक्षणतोऽथ षड्विधम् ॥ ३० ॥

**इति श्रीविष्णुधर्मोत्तरे तन्त्रगुणदोषाध्यायो नाम ॥ ५ ॥**

---

१. V. क्रयिकः २. V. —नित्तण्वकम्. ३. V. सुखार्थो. C. सख्योर्थो. ४. C. drops from विद्यादनुमानं to अप्रत्यक्षफलं. ५. V. गोः. ६. B. साध्यर्थं श्चेदनुक्तोर्थो. C. साध्योर्थश्चेदनुक्तोर्थो. V. साध्योर्थश्चेदतत्कार्यो. ७. V.B.C. देवरात. ८. V. —लक्षणतश्च.

# षष्ठोऽध्यायः

मार्कण्डेयः—

अथ तन्त्रयुक्तयो भवन्ति । अधिकरणं योगः पदार्थो हेत्वर्थ उद्देशो [1]निर्देशः [ [2]उपदेशः अपदेशः ] प्रदेशोऽतिदेशः अपवर्गो वाक्यशेषोऽर्थापत्तिः प्रसङ्ग [3]एकान्तोऽनैकांतः पूर्वपक्षो निर्णयो विधानं [ वि ]पर्ययोऽतिक्रान्तावेक्षणं [4]अनागतावेक्षणं [5]संशयोऽति-व्याख्यानमनुमतं स्वसंज्ञा निर्वचनं दृष्टान्तो वि [ ? नि ]योगो विकल्पः समुच्चयः ऊह्यमिति । [6]तत्र यमर्थमधिकृत्योच्यते तदधिकरणम् । येन वाक्यार्थो युज्यते [7]स योगः । योऽर्थो वि[ ऽधि ]कृतः [8]सूत्रपदे स पदार्थः ।[9] यदन्यद्युक्तिमदर्थस्य साधनं स हेत्वर्थः । समास-वचनमुद्देशः । विस्तरवचनं निर्देशः । एवमेवेत्युपदेशः । अनेन कारणेनेत्यपदेशः ।[10] प्रकृतस्यानागतेन साधनं [11]प्रदेशः । अति-क्रमणेन अतिदेशः । अभिप्रायानुकर्षणमपवर्गः । येनार्थः परिसमाप्यते पदेनाहार्येण स वाक्यशेषः । यदकीर्तित[12]मर्थादापद्यते सार्थापत्तिः । प्रकरणा[13]भिहितोऽर्थः केनचिदुपोद्धातेन [14]पुनरुच्यमानः प्रसङ्गः । सर्वत्र [15]यथा तथा स एकान्तः । क्वचित्तथा क्वचिदन्यथा ऽ[16]सावनेकान्तः । प्रतिषेधवचनं [17]पूर्वपक्षः । उत्तरवचनं निर्णयः । प्रकरणानुपूर्वं विधानम् । तस्य प्रातिलोम्यं विपर्ययः । इत्युक्तमति-क्रा[18]न्तावेक्षणम् । परत्र वक्ष्यामीत्यनागतावेक्षणम् । उभयतो हेतु-दर्शनं संशयः । तत्रातिशयवर्णनातिव्याख्यानम् । परमतमप्रति-षिद्धमनुमतम् । परैरसंगतः शब्दः स्वसंज्ञा । लोके प्रतीतमुदा-हरणं निर्वचनम् । तद्युक्तिनिदर्शनं दृष्टान्तः । एवेति नियोगः ।

---

१. V. निदेशः २. A.B.C.V. drop. उपदेशः अपदेशः ३. A.B. नोकान्त-मेकान्तः C. एकान्तं नेकान्त. ४. C. सनागतावेक्षणं ५. V.C. संशयो व्याख्यानमनुमति. ६. V. drops. तत्र यमर्थमधिकृत्योच्यते. ७. V. संयोगः ८. V. सूत्रपदं. ९. V. यदन्यत युक्ति. BC. यदन्यत्तद्युक्ति— १०. A.B. प्राकृत. ११. A.B. प्रादेश V. प्रदेशोऽ-तिक्रामणेन सति देशो १२. V. मर्यादामापद्यते १३. V.C. —भिहितोक्तः १४. V. पुनरुद्दिश्यमानः १५. V. यत्तथा १६. A.B. सौनेकांतः C. सोनेकांतः १७. V. drops पूर्वपक्षः उत्तरवचनं while A.B.C. पूर्वपक्षः as पूर्वपक्षस्य १८. V. कान्ताय क्षणम् .

इदं वेदं वेति विकल्पः। इदं चेदं चेति [1]समुच्चयः। अत्र यद्-
निर्दिष्टं युक्तिगम्यं तदूह्यमिति ॥

प्रयोजनं संशयनिर्णयौ च व्याख्याविशेषो [2]गुणलाघवं च ।
[3]कृतव्युदा[ सः ] कृतशासनं च [4]सांवर्तिको धर्मगुणोऽष्टकश्च ॥

इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे तन्त्रशुद्धिर्नाम ॥ ६ ॥

---

१. V. समुश्चयोऽत्र. २. V. गुणलाघवश्च. ३. V.C. कृतव्युदासो. A.B. कृत-
व्युदासोः ४. C. सवान्तिको.

## सप्तमोऽध्यायः ।

मार्कण्डेय :— अथातः संप्रवक्ष्यामि तव प्राकृतलक्षणम् ।
ऋ ॠ ऌ ॡ न सन्त्यत्र [1]नोष्मा न [ णौ ] च [2] [ श ] षावुभौ ॥ १ ॥
[3]मकारहीना च ( श्च ) तथा नासिक्याश्च तथा नृप ।
रेफश्च [4]सयवो राजन्संयोगे नास्ति कर्हिचित् ॥ २ ॥
[5]ऐकारश्च तथौकारः पदमध्ये महाबल ।
[6]ह्ढ[ ? डग ] योगे[ ड ][7]कारोऽत्र दगयोगे तथैव [8]च ॥ ३ ॥
[9]गय योगे यकारोऽत्र लोपमायाति नित्यदा ।
[10]षणौ युक्तौ पृथक्कृत्वा सणौ कार्यौ विचक्षणैः ॥ ४ ॥
दमौ युक्तौ पृथक्कृत्वा दुमौ कार्यौ तथैव च ।
[11]तनौ युक्तौ पृथक्कृत्वा यणौ कार्यावसंशयम् ॥ ५ ॥
[12][ तय ] योगे [ त ]कारस्य चकारस्त्वभिधीयते ।
ककारः पदमध्योऽत्र वक्तव्यो हलित्रवर्जितः ॥ ६ ॥
नकारस्य णकारः स्यात्क्षकारस्य ख इष्यते ।
[13][ स्त ] कारस्य त्थकारश्च ज्ञकारस्य ण एव च ॥ ७ ॥
[14]क्वचि [ त्व ] कारश्च [ स्य ] तथा [ थ ] कार [ स्य ] तथा क्वचित् ॥
[15][ ध ] कारस्य तु [16]वक्तव्यः [17][ भ ] कारस्य ह इष्यते ॥ ८ ॥
[18][ त्स ] कारस्य छकार [ स्स्याच ]कारे हल्च लुप्यते ।
युक्ते [19][ ष्प ] कारे [20]तद्धीने फकारोऽपि विधीयते ॥ ९ ॥

---

१. V. नष्मा २. A.C.V. मषावुभौ B. सषावुभौ. ३. A. मकरहीना. V. सकारहीना ४. C. सयबो. A.B.V. शयवा. ५. A.V. एकारश्च ६. A.B.C.V. हढयोगे ७. V. वकारोऽत्र A.B.C. दकारोऽत्र. ८. A.B. तः ९. A B. गययोगे शकारोऽत्र. १०. V. drops s'lo. 4 C.D. ११. V. drops s'lo. 5 C.D. १२. V. ऋतयोगे दकारस्या-त्तकारस्त्वभिधीते. A.B.C. ऋतयोगे ऋकारस्य चकारस्त्वभिधीयते. १३. V. तकारश्च थकारश्च ज्ञकारश्च. B.C. तकारश्च. १४. A.B.C. क्वचित्कारश्च तथा हकारश्च तथा क्वचित्. V. क्वचित्क्वचित्स्यात् तदा हकारश्च तथा क्वचित्. १५. A.B.C.V. क्षकारस्य १६. V. वक्तव्यं १७. A.B.C.V. वांकारस्यस्य. १८. A.B.C.V. चकारस्य छकारस्यात्युकारे. १९. V.C. पकारे A.B. थकारे. २०. V. तद्धीमे हकारोऽपि.

चतुर्थी नात्र विज्ञेया न च द्विवचनं क्वचित् ।
पदादौ यो गुरुः सोऽत्र लघुरेव विधीयते ॥ १० ॥
[१]दिङ्मात्रमेतदुद्दिष्टं मया प्राकृतलक्षणम् ।
[२]प्रयोगादनुगन्तव्यो विस्तरो ह्यतिविस्तरः ॥ ११ ॥
देशेषु देशेषु पृथग्विभिन्नं
न शक्यते लक्षणतस्तु वक्तुम् ।
लोकेषु [३]यत्स्यादपभ्रष्टसंज्ञं
ज्ञेयं हि तद्देशविदोऽधिकारम् ॥ १२ ॥

इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे प्राकृतभाषालक्षणं नाम ॥ ७ ॥

---

१. V. द्विमात्रमेतदुद्दिष्टं मध्या. २. V.C. प्रयोगादनुकर्तव्यो. ३. A.B.C. यत्स्यादवभ्रष्टसंज्ञं.

## अष्टमोऽध्यायः

मार्कण्डेयः—

देवा दिवौकसो दिव्या गीर्वाणास्त्रिदशाः सुराः ।
हरिर्जनार्दनो विष्णुर्वासुदेवस्त्वधोक्षजः ॥ १ ॥

नारायणो हृषीकेशश्चक्री [१]गरुडवाहनः ।
बलः सङ्कर्षणोऽनन्तः शेषस्तालध्वजो हली ॥ २ ॥

प्रद्युम्नः कामदेवश्च चापी मकरकेतनः ।
खड्गायुधोऽनिरुद्धश्च तथा वै ऋष्य (? श्य) केतनः ॥ ३ ॥

लक्ष्मीः [२]करीषिणी श्रीश्च तथा देवी विभावरी ।
चक्रः सुदर्शनः प्रोक्तः शार्ङ्गं [३]चापं तु वैष्णवम् ॥ ४ ॥

[४]माहेश्वरं पिनाकाख्यं वारुणं गाण्डिवं भवेत् ।
शाक्रमाजगवं प्रोक्तं वज्रः कुलिश उच्यते ॥ ५ ॥

वैष्णवी तु गदा प्रोक्ता तथा कौमोदकी नृप ।
हलो ललाम इत्युक्तः [५]सुनन्दं मुसलं स्मृतम् ॥ ६ ॥

पाञ्चजन्यः स्मृतश्शंखो यं बिभर्ति जनार्दनः ।
करेऽस्य कमलं प्रोक्तं तथाऽस्त्रालोक्य( ? क )संज्ञितम् ॥ ७ ॥

भूमिर्वसुंधरा पृथ्वी क्षमा क्षोणी धरा मही ।
नभः खं गगनं चैव तथाकाशं [६]हरेः क्रमम् ॥ ८ ॥

ताक्ष्यस्सुपर्णो गरुडो हरिकेतनवाहनः ।
[७]नागान्तको हलधरः शेषस्ताल[८]ध्वजो हली ॥ ९ ॥

ब्रह्मा पितामहश्शंभुः स्वयंभूर्भूतभावनः ।
महादेवो भवः शंभुः त्र्यम्बकः पार्वतीपतिः ॥ १० ॥

उमा सती पर्वतजा [९]मेनजा च तथोच्यते ।
भद्रकाली स्मृता दुर्गा गणाश्च [१०]प्रमथाः स्मृताः ॥ ११ ॥

---

१. C. गरुडकेतनः २. A.B. करीषणी ३. A.B. चापस्तु ४. A.B. माहेश्वरो ५. V.C. सानन्दं ६. A. हरेक्रमम्. ७. V.B. नागानंतो C. नागोनंतो ८. V. –ध्वजी ९. V. मेनकाजा A. मीनजा च C. मेनका च १०. C. प्रथमाः

विनायको गणपतिः कुमारः स्कंद इष्यते ।
इंद्रश्शक्रः कौशिकश्च पुरुहूतः पुरन्दरः ॥ १२ ॥

अग्निर्वैश्वानरो वह्नि[१]र्जातवेदा हुताशनः ।
[२]वैवस्वतो यमश्चैव कीनाशः [३]प्रेतनायकः ॥ १३ ॥

विरूपाक्षो निर्ऋतिश्च तथा [४]रात्रिचराधिपः ।
यादसामीश्वरो देवः प्रचेता [५]वरुणोऽम्बुपः ॥ १४ ॥

तोयमम्बु जलं चाऽऽपः पानीयं सलिलं पयः ।
वायुः समीरणो वातः [६]पवनः सर्वगोऽनिलः ॥ १५ ॥

राजराजो धनाध्यक्षस्तथै[७]वैडविडः स्मृतः ।
ईशानः शङ्करः शर्वस्तथा पशुपतिः शिवः ॥ १६ ॥

नासत्यावश्विनौ प्रोक्तौ वसवो वसुसंज्ञिताः ।
तथैवाङ्गिरसो [८]नागाः [९]विश्वसत्राग्रभोजिनः ॥ १७ ॥

[१०]वृषयावगमारुद्धा भृगवो मरुतो मताः ।
साध्या धर्मसुताः प्रोक्ता आदित्याः [११]कश्यपात्मजाः ॥ १८ ॥

[१२]मरुतो मातरिश्वानो ग्रहास्त्रिभुवनेश्वराः ।
नक्षत्राणि तथा भानि ऋक्षाणि च उडूनि च ॥ १९ ॥

आदित्यो भास्करः सूर्यः सविता रविरर्यमा ।
चन्द्रः शीतकरः सोमः शशाङ्को मृगलाञ्छनः ॥ २० ॥

वक्रः क्षितिसुतो भौमो बुधो ज्ञः सोमनन्दनः ।
बृहस्पतिर्गुरुर्जीवः शुक्र आस्फुजिदेव च ॥ २१ ॥

सारणः पञ्चमः प्रोक्तो [१३]मन्मथेषु विचक्षणैः ।
असुरा दानवा दैत्या गंधर्वा [१४]देवगायनाः ॥ ॥ २२ ॥

---

१. V. –र्जातवेदो २. V. विवस्वतो ३. B. प्रीतनायकः ४. V. रात्रिचराधिप ५. C. वरुणाम्बुपः ६. V. पावनः ७. A.B.C. –वैडमिडः. ८. B.C. नाका. ९. V. विश्वसत्रा– १० A.B. ऋषयोवगमारुद्रा V. वृषभावगमारुद्ध ११. V. कश्यपात्मजः १२. A. मारुतो १३. V.C. प्रमन्थेषु विचक्षणः १४. V. देवनायकाः

यक्षाः पुण्यजनाः प्रोक्ता यातुधानाश्च राक्षसाः ।
अदृश्याश्च तथा भूताः पिशाचाः [1]पिशिताशनाः ॥ २३ ॥

किन्नराख्याः किंपुरुषाः नागाः कद्रुसुता मताः ।
सिद्धा विद्याधराः प्रोक्ता देवरामास्तथाऽप्सराः ॥ २४ ॥

महर्षयो भूतकृतः तथा ब्रह्मर्षयोऽमलाः ।
प्रोक्ताः सप्तर्षयो लोके तथा चित्रशिखण्डिनः ॥ २५ ॥

ध्रुवः स्थास्नुस्तथा प्रोक्तः [2]कृकलासस्तथैव च ।
आशा दिशस्तथा काष्ठा भचक्रं भगणं स्मृतम् ॥ २६ ॥

कृतानि शास्त्राणि नरेन्द्र पूर्वैः
स्मृतिस्तथोक्ता श्रुतिरेव वेदः ।
सम्यक्सदाचारमिति प्रदिष्टं
वृत्तं हि यच्छास्त्रविदां नरेन्द्र ॥ २७ ॥

[3]इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे अभिधानकोश [ ? शे ] प्रथमः परिच्छेदः ॥ ८ ॥

---

१. A. पिशिताशिनः C. पिशिताशनः २. A.B. क्रिकिलासस्तथैव C. कृकिलासस्तथैव.
३. V. इति श्रीविष्णुधर्मोत्तरे तृतीयखण्डे मा. व. संवादे देवादिशब्दपर्यायविवर्णनं नामाष्टमोऽध्यायः ॥८॥

# नवमोऽध्यायः ।

मार्कण्डेयः—
संवत्सरोऽब्दो वर्षं च [1]समा हायन एव च ।
दिवसो वासरश्चैव दिनं चाहस्तथैव च ॥ १ ॥

दोषा विभावरी रात्रिः शर्वरी यामिनी [2]क्षपा ।
संधिः प्रोक्ता तथा संध्या अन्धकारं [3]तमः स्मृतम् ॥ २ ॥

चन्द्रिका च तथा ज्योत्स्ना चैत्रो मधुरिति स्मृतः ।
वैशाखो माधवः प्रोक्तः [4]शुचिर्ज्येष्ठ उदाहृतः ॥ ३ ॥

शुक्रः प्रोक्तस्तथाऽऽषाढो नभः श्रावण इष्यते ।
पौष्ठपादो नभस्यश्च इषश्चाश्वयुजः स्मृतः ॥ ४ ॥

[5]ऊर्जाख्यः कार्तिकः प्रोक्तो मार्गशीर्षः सहस्तथा ।
सहस्यः [6]पौष इत्युक्तो माघः स्यात्तप एव च ॥ ५ ॥

फाल्गुनश्च तपस्याख्यो मासो यदुकुलोद्वह ।
[7]तुलामेषगते [8]भानौ विषुवद्दिनमुच्यते ॥ ६ ॥

[9]धन्वन्तो मिथुनान्तश्च अगने [10]सौम्यदक्षिणे ।
मेषान्ते च तुलान्ते च [11]युगादिदिवसौ स्मृतौ ॥ ७ ॥

तथा विष्णुपदं प्रोक्तं कुलीरमकरान्तयोः ।
कन्यामिथुनमीनानां प्रवेशे धनुषस्तथा ॥ ८ ॥

षडशीतिमुखं नाम ज्ञेयं दिनचतुष्टयम् ।
रश्मिर्गभस्ति[12]र्भद्रौ च करो दीधितिरेव च ॥ ९ ॥

सूर्योदयास्तमययोः स दीर्घः परिधिर्भवेत् ।
तिर्यग्गतां मेघराजीं तदेव परिघो भवेत् ॥ १० ॥

तदेव दण्डसंस्थानो मेघो दण्डोऽभिधीयते ।
शक्रचापं शक्रधनुस्तद्दीर्घं रोहितं [13]भवेत् ॥ ११ ॥

---

१. C. समो २. C. क्षमा ३. C. तमं ४. B. शुचि ज्येष्ठा ५. B. ऊर्जाध्यः ६. C. पौष्य ७. B. तुलामेषगमे ८. A.B.C. भानोर्विषु ९. B.C.V. धन्वतो १०. V.C. सोस्य ११. C. युगाग्निदिवसौ १२. V. –र्भद्रा १३. C. मतम्

तदेव दण्डसंस्थानो मेघो दण्डोऽभिधीयते ।
पीतमथाल्पं तदेव चोपा[ल्पं] प्रतिसूर्यकम् ॥ १२ ॥
चन्द्रार्कयोर्मे[1]घराजीपरिवेशस्तु मण्डलात् ।
[2]स्वर्गाच्छुभफले क्षीणे पतत्युल्केति कथ्यते ॥ १३ ॥
अनित्यः सशिखो दृष्टस्तारकः केतुरिष्यते ।
[3]अग्निवर्णा चिरदृष्टा दिग्दाह इति विश्रुतः ॥ १४ ॥
नगरं शून्यतो दृष्टं गंधर्वनगरं स्मृतम् ।
निर्घातं स्तनितं प्रोक्तं विना मेघनिदर्शनात् ॥ १५ ॥
[4]यतो यतो [5][?अतोये तो] यवदृष्टिः कथिता मृगतृष्णिका ।
मेघो घनं वारिदं च जीमूतं च बलाहकम् ॥ १६ ॥
स्तनितं गर्जितं विद्याद्वृष्टिः प्रोक्ता [6]प्रवर्षणे ।
आसारो वेगतद्वर्षं पृषतो मन्द उच्यते ॥ १७ ॥
दृश्यमाने तथा सूर्ये दिव्यं प्रोक्तं [7]च वर्षणम् ।
दृश्यमाने तथा चन्द्रे सामृतं [8]वर्षणं स्मृतम् ॥ १८ ॥
वात्या वातसमुत्था स्यान्नीहारं तम उच्यते ।
शीकराख्यमवश्यायं [9]तुषारस्तुहिनं हिमम् ॥ १९ ॥
विद्युत्तडित्तथा लोला [10]चञ्चला च शतह्रदा ।
समुद्राश्चाम्बुनिधयः सागरा लवणोदकाः ॥ २० ॥
नद्यः कुटिलगामिन्यो निम्नगाः सरितस्तथा ।
गङ्गा विष्णुपदी प्रोक्ता जाह्नवी त्रिपथा तथा ॥ २१ ॥
कालिन्दी यमुना प्रोक्ता रेवा प्रोक्ता च नर्मदा ।
विपाशा च [11]सनन्दाख्या शनन्दुः [12]शौरिसंज्ञिता ॥ २२ ॥
वाणी तथोक्ता च [13]सरस्वतीति मनस्तथोक्तं नृप चन्द्रसंज्ञम् ।
बुद्धिस्तथा सूर्य इति [14]प्रदिष्टा भूतानि चोक्तानि तथेन्द्रियाणि ॥ २३ ॥

इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे अभिधानकोशे द्वितीयः परिच्छेदः ॥ ९ ॥

---

१. V. –मेंघराजितपरि–　२. A. स्वर्गाशुभफले　३. V.C. अग्निवर्णांनु दिङ्मृष्टा दिग्दाह　४. A.B.C. अतोयतो　५. V. यवं दृष्टिः यवदृष्टिः　६. C. प्रवर्षिणे　७. C. प्रवक्षताम्　८. V.C. परिकीर्तिताम्　९. A.B. तुषारं तु　१०. A.B.C. चकेला　११. A.B. सद्मनाख्या　१२. V. शौरिसंज्ञिका C. शौरिसंज्ञिकः　१३. V.B.C. सरस्वती च　१४. V.B.C. प्रदिष्टो.

## दशमोऽध्यायः ।

मार्कण्डेयः—

[1]मनुष्यो मनुजश्चैव पुरुषः [2]पुद्गलस्तथा ।
रामा योषित्तथा स्त्री च ललना च तथा स्मृता ॥ १ ॥

वरारोहा पुरन्ध्रिश्च श्रेष्ठा सा [3]मत्तकाशिनी ।
ब्राह्मणश्च तथा विप्रो राजन्यः क्षत्रियो [4]मतः ॥ २ ॥

कीनाशश्च स्मृतो वैश्यः शूद्रश्चान्त्यज उच्यते ।
चण्डालः [5]पुक्कशः प्रोक्तो मातङ्गश्च तथोच्यते ॥ ३ ॥

हस्ती द्विप इभो दन्ती मातङ्गः कुञ्जरो गजः ।
अश्वश्च तुरगः सप्तिर्हयो वाजी हरिस्तथा ॥ ४ ॥

गौरुक्षा छागलोऽजश्च उरभ्रोऽविस्तथोच्यते ।
[6]असिर्विशसनः खड्गस्तीक्ष्णधारो दुरासदः ॥ ५ ॥

श्रीगर्भो विजयश्चैव धर्माधारस्तथाष्टमः ।
सुवर्णं कनकं रुक्मं हेमं कार्तस्वरं तथा ॥ ६ ॥

जाम्बूनदं तद्देवानां [7]रूप्यं रजतमिष्यते ।
[8]उदुम्बरं स्मृतं ताम्रमयो लोहं प्रकीर्तितम् ॥ ७ ॥

आरकूटं तथा रीती रत्नं माणिक्यमुच्यते ।
आतपत्रं स्मृतं छत्रं कम्बुः शङ्ख [9]उदाहृतः ॥ ८ ॥

पङ्कजं कमलं पद्मं पुण्डरीकं प्रकीर्त्तितम् ।
तथा तामरसं चैव शतपत्रं [10]तदेव तु ॥ ९ ॥

इन्दीवरं चोत्पलं स्यात्कल्हारं शुक्लमेव तत् ।
सङ्ग्राममाजिः युद्धं च जन्यमाहव एव च ॥ १० ॥

---

१ B. धनुष्यो २. A. पुङ्गल V. पूरुषस्तथा ३. A. B. संतकाशिनी C. मत्तकामिनी ४ C. गतः ५. A. B. पुक्सः V. पुक्कः C. पुक्मः (in Śāradā Script श is like Nāgarī प. So पुक्शः may be the appropriate reading). ६. A. असिर्विंषुमन खड्गस्तीक्ष्ण वर्मा-दुरासद ॥ B. असिर्विषुरानः खड्गा स्तीर्ण वर्मा दुरासदः ॥ ७. B. रौप्यं ८. A.B. उडंबरं ९. V. उदाहतः १०. V. तु दैवतम्.

दानं संवननं प्रोक्तं विवाहो विनिवेशनम् ।
पत्नी भार्या तथा जाया सुतः पुत्रस्तनूद्भवः ॥ ११ ॥

माता जनित्री जननी जनिता जनकः पिता ।
क्षयं च भवनं प्रोक्तं मन्दिरं गृहमेव च ॥ १२ ॥

भाण्डागारः स्मृतः कोशो धन्वनं गुप्तिरिष्यते ।
वाहनं पत्रसंज्ञं [1]स्यादमत्रं पात्रमुच्यते ॥ १३ ॥

वर्धमानं [2]शरावं स्याचापं च धनुरुच्यते ।
सायकश्च शरः प्रोक्त इषुर्बाणः शिलीमुखः ॥ १४ ॥

हस्तमोच्यः स एवोक्तो बृहन्तश्चैव [3]तोमरः ।
पुष्पप्रकरमित्युक्तमुपकारं नराधिप ॥ १५ ॥

बालव्यजनमप्युक्तं तथा [4]चामरसंज्ञितम् ।
मृजा शोभा विनिर्दिष्टा [5]अलङ्कारो विभूषणम् ॥ १६ ॥

[6]प्रसाधनं मण्डनं स्याद्बलस्सार उदाहृतः ।
अर्भकश्च स्मृतो बालो बालश्चाश्वः किशोरकः ॥ १७ ॥

हस्ती कलभ इत्युक्तो वत्सश्चोक्षा प्रकीर्त्तितः ।
सर्वथा ( हा ) केसरी सिंहः शार्दूलो व्याघ्र [7]इष्यते ॥ १८ ॥

विपिनं निर्जनं प्रोक्तं अजिरं स्याद्गृहाङ्गनम् ।
उपनीय ददद्वेदमाचार्यः स उदाहृतः ॥ १९ ॥

एकदेशमुपाध्यायो ऋत्विग्यज्ञकृदुच्यते ।
सांवत्सरो ज्योतिषविद्वृत्तो भवति भूभुजा ॥ २० ॥

तस्यैव यज्ञकृद्यस्तु स पुरोहित इष्यते ।
अमात्यश्च स्मृतो मन्त्री [8]देशो विषय उच्यते ॥ २१ ॥

---

१. स्यादपत्रं. २. V. शरावै. ३. V. तोवरः A. तोमराः ४. V. चारमसंज्ञितम्. ५. A.B.C. अलङ्कारं. ६. V. प्रसाधन. ७. V. उच्यते. ८. V. देशोनिचय. B. द्वेषां विम्रय.

राजा नरेन्द्रो नृपतिस्तथैव
सिंहासनं तस्य तथाऽऽसनं स्यात् ।
क्षत्ता प्रतीहार इति [१]प्रदिष्ट-
स्तद्धस्तदण्डः कथितं तु वै [? वे] त्रम् ॥ २२ ॥

इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे अभिधानकोशे तृतीयः परिच्छेदः ॥ १० ॥

---

१. B. प्रदिष्टास्तदस्तदण्डः.

## एकादशोऽध्यायः ।

मार्कण्डेयः— कीर्तिर्लक्ष्मीर्धृतिर्मेधा मतिः पुष्टिः सरस्वती ।
स्मृतिः श्रद्धा [1]रतिश्चैव धृतिर्नीतिः स्थितिः श्रुतिः ॥ १ ॥

रात्रिः प्रभा क्षपा दीप्तिः शाला माला निशा स्पृहा ।
दोला[2] हेला च लोला च यामिनी [3]क्षणदा चरा ॥ २ ॥

यात्रा भस्त्रा द्युतिर्मात्रा दंष्ट्रा सेना [4]वचा तथा ।
कुटिः [5]खोरी दया ज्योत्स्ना सीमा वेणिस्तथैव वाक् ॥ ३ ॥

तनुर्धूलिः शलाका च ग्रीवा भ्रूश्च शरत्तथा ।
[6]दरद् प्रावृट् च धमनी स्थूणा चूडा सिरा वसा ॥ ४ ॥

कक्ष्या [7]सटा सुरा जङ्घा जटा घण्टा [8]कशा तथा ।
विद्यु[9]त्कक्षा सरिद्वल्लिरिषीका रज्जुरिष्टका ॥ ५ ॥

दिग्भूर्भूमिर्मही क्षोणी क्षपा (मा) चैव वसुन्धरा ।
छाया चमूर्वालुका च तथा [10]विद्युद्विपत्सरित् ॥ ६ ॥

इरा संपदवापश्च (थापच्च) लीला वेला [11]तुला शिला ।
कला च मेखला ज्वाला सेना दद्रूर्वली समा ॥ ७ ॥

ज्या च [12]ग्लानिस्तथा हानिश्शाटी स्वाहा तथैव गीः ।
धीर्वृद्धिर्धूः [13]क्षमा बुद्धिः क्षुट्तृ [तृ ?]ष्णाशीस्सवालुका ॥ ८ ॥

विंशतेर्नवतिर्यावत्क्रोडा [14]खट्वा शिरोधरा ।
माया च शष्कुली जिह्वा घटोत्का स्नायुरेव च ॥ ९ ॥

---

१. C. इतिश्चैव. २. A. हीला च लीला V. C. हेला तथा लीला ३. A.B.C. क्षणदावरा. ४. A. B. वचास्तथा ५. A. खुरी. B. खरी. ६. V. दरःप्रावृट् चाचमनी B. दरं C. दरस्प्रवृट् ७. V. C. सता सुरा B. मध्य सुरा. ८. A. कशास्तथा. ९. A. B.–त्कच्छस्सरि– १०. A. B. विप्रुड्विपत्समित् C. विद्युद्विपत्समित्. ११. V. तला. १२. म्लानिस्तथा. १३. A.B. क्षपा. १४. V. स्वदु शिरोधरा A.C. खड्गशिरोधरा.

लेखा जरा तथा पंक्तिर्लेता [1]प्रावृट्च रोचका ।
लाक्षा कण्डूः प्रियङ्गुश्च [2]माण्डीका कटिरोषधिः ॥ १० ॥
ऋक्स्फुलिङ्गा कलिश्शय्या कोटिः कन्था च नालिका ।
निःश्रेणिः पृतना दीप्तिर्निद्रा तन्द्रा गुहा रुचिः ॥ ११ ॥
[3]सास्ना रास्ना तथा [4]वीथी [5]नीविर्धारा तथा कृपिः ।
मञ्जूषा [6]पर्षदश्चैव पताका [7]काकिनी कृपा ॥ १२ ॥
पेला चैव समञ्जिष्ठा भेरी नेमिर्मनःशिला ।
दर्विः स्थाली सभा वीचिः स्थली चैव समञ्जरी ॥ १३ ॥
वल्लरी मन्दुरा लाक्षा सूची [8]चाधिषणा शमी ।
मक्षिका विकृतिर्यूका शिखा शाखा तथाटवी ॥ १४ ॥
स्त्रीवृत्तयस्ते कथिता मयैते शब्दाः समासस्त्वयमत्र राजन् ।
इ[9](ई)दन्तमादन्तमुशन्ति सर्वं स्त्रीवाचकं शब्दमुशन्ति धीरा ॥ १५ ॥

**इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे स्त्रीलिङ्गनिर्देशे चतुर्थः परिच्छेदः ॥ ११ ॥**

---

१. V. प्रावृडरोचका. २. A. मण्डीका कटीरोषधिः B. पंडीका कटीरोषधिः ३. V.C. साम्ना दाम्ना. ४. A.B. वेथी ५. A. नीवीधारा C. नीवीताता. ६. C. मर्षदश्चैव. ७. A.B.C. काकनी. ८. A.B. चाधिपणा. ९. V. तमानन्त्यमुशंति.

## द्वादशोऽध्यायः ।

मार्कण्डेयः— अतः परं प्रवक्ष्यामि यदुवंशविवर्धन ।
तव पुंवाचकान् शब्दान् शृणु तान् गदतो मम ॥ १ ॥

राजा [1]क्षत्ताक्षमूर्धात्मा पायुः श्लेष्माश्मपूरणः ।
मज्जा प्लीहा च कथिता नाताद्यस्काः (? नान्ता द्व्यच्काः) न्
[2]पुमर्थकाः ॥ २ ॥

वृत्रः पुत्रस्तथा मन्त्रस्तथैवामन्त्र इष्यते ।
पुंसि राशिर्मुहूर्तश्च मासः पक्षोऽब्दवत्सरौ ॥ ३ ॥

ऋतुः कालो गिरिः शैलः शिलोच्चयनगाचलाः ।
सुरासुराणां [3]संज्ञाश्च याश्च प्रोक्ता महोदधेः ॥ ४ ॥

संवत्सरश्च दिवसो अह्नो वासर एव च ।
पर्यायः पङ्कशरयोररिनिस्त्रिंशयोरपि ॥ ५ ॥

पुत्रपर्यायशब्दाश्च पितृपर्यायसंयुताः ।
कण्ठबाह्वोस्तथा संज्ञाः स्तनकेशरदस्य च ॥ ६ ॥

गुल्फनामानि कर्णश्च हनुः प्रश्नो विधिर्निधिः ।
कपोलनामानि तथा [4]निर्घोकि (? षे) क्षुककेलयः ॥ ७ ॥

कलिर्विघ्नो घटो जूटः पटः पायुः कुशोऽङ्कुशः ।
बिन्दुः [5]स्वरः कुठारश्च पणशाणौ [6]पटः कटः ॥ ८ ॥

वटो [7]वण्ठः पुटोमृत्युर्मन्युः शोणः किणः फणः ।
गुणश्चूर्णो [8]गणः पन्था अध्वाङ्कः पूग एव च ॥ ९ ॥

कमण्डलुः पलाण्डुश्च गण्डः स्थूलश्च कङ्कटः ।
प्रस्थः शङ्खो रथश्चैव रसो वर्गस्तुषो [9]बुसः ॥ १० ॥

यवो माषस्तथा शब्दः स्पर्शो गन्धः शठो वणिक् ।
करीषस्तरलो मेढ्रो रथो मण्डप एव च ॥ ११ ॥

---

१. V.C. क्षताक्ष. २. A.B. प्रसर्थकाः ३. B. संघाश्च. ४. A.B. निघार्घोपेक्षकेलयः C. निघार्घोंषेक्षुकेयः ५. A.B. खुरः ६. V. च पर्पटः ७. V. बन्धः ८. A. घनः ९. B.C.V. बुधः

नरको नूपुरश्चैव [1]समुद्गो लोक एव च ।
[2]कषायः कोणमुसलौ कुसूलः शूर्पदर्दुरौ ॥ १२ ॥

पञ्च पिण्याकशूर्पाश्च वातदण्डाङ्कुराङ्कुशाः ।
कुणयः प्रोथयूथौ ( ? षौ ) च कुन्तदर्पणवेणुकाः ॥ १३ ॥

ध्वजो वंशस्तथा वेणुः क्रिमिः ( ? कृमिः ) कल्कर्पि[3]कन्दराः ।
पुस्तकश्चा[4]ध्वरो व्रीहिरम्बुदोऽञ्जन एव च ॥ १४ ॥

स्तम्भः पशुर्घर्मनिदाघकुम्भाः कटाहयूपस्तबकाः सफेनाः ।
नितम्ब[5]षण्डक्षप ( ? य ) सूपयूपाः पुंसि स्मृता यादववंशमुख्य ॥१५॥

इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे पुंवर्गनिर्देशे पञ्चमः परिच्छेदः ॥ १२ ॥

---

१. V. समुद्गी. २. V. काषार्षयः ३. V.C. –कर्दराः ४. A.B. –श्चाधुरो.
५. V. –षण्डक्षुप–.

## त्रयोदशोऽध्यायः ।

मार्कण्डेयः— अन्त्य[1]लिङ्गेऽथ वर्तन्ते ये शब्दा नृपसत्तम ।
[2]तानहं संप्रवक्ष्यामि शृणुष्व गदतो मम ॥ १ ॥

जलनामानि सर्वाणि विनाऽऽपो यदुसत्तम ।
[3]शब्दाश्च पूर्वं ये नोक्तास्ते नपुंसकवृत्तयः ॥ २ ॥

[4]व्यचो नान्तास्तथा ये च नोक्तास्ते च[5] यदूत्तम ।
[6]असन्तं [ च ] व्यचं सर्वं [7]जरसोऽन्यत्र यादव ॥ ३ ॥

नपुंसके च वर्तन्ते शब्दा लोचनवाचकाः ।
सर्वाणि पुष्पनामानि कथितानि नपुंसके ॥ ४ ॥

शरीरमस्थि दधि च [8]सक्थ्यन्त्रगुदजानुनी ।
श्मश्रुकूले कुलं पर्णं लोहनामानि यानि च ॥ ५ ॥

[9]अहर्निशं शकृत्सक्थि धनुः शोणित दारुणी ।
क्षीरं [10]विषामृते षण्डं फलमूलम ( ? ब )लानि च ॥ ६ ॥

पुरं मधु खलं नालं चीवरं चीरमम्बरम् ।
गगनं घनमाकाशं सुखदुःखपदानि च ॥ ७ ॥

[11]रूपबीजेथ ( ? च ) पललं तल्पसद्म[12]शबानि च ।
निमित्तचित्तपित्तौघतक्र[13]शुक्रभयानि च ॥ ८ ॥

तीर्थपञ्जर[14]चेलानि फलद्वन्द्वाक्षराणि च ।
धान्यश्मशानरत्नाभ्र[15]शुल्वरत्नयुगानि च ॥ ९ ॥

गोप [ ? पुरं ] पत्तनं सै[ न्यं ] मङ्गलायुधखानि च ।
नगरं हरितालं च तिमिरं पलितं विषम् ॥ १० ॥

---

१. C. –लिङ्गेश. २. A.B. तान्यहं, ३. V.B.C. भ्रान्ताश्च. ४. A. व्योचो ५. V.C. यदुसत्तम. ६. V. असत्यं च धनं ७. A.B. जरसन्योत्र. ८. A. सक्त्यत्र ९. A. अहर्दिनं. १०. A.B. विषघृते. ११. V. कूपबीजेऽथ. १२. A. शिवानि. १३. A.B. –गुबभयानि. १४. A.B. –चील. १५. V.C. तल्परत्न–.

श्मशानं मिथुनं [1]तत्त्वं किल्बिषं विदलं हिमम् ।
वृन्दं कुतूहलं शीधु शरावं शिखरं पलम् ॥ ११ ॥

वृत्तं च मुकुटं [2]पण्यं मलमंशुकमेव च ।
इन्द्रियं युगलं कूटं कपालं शूलशेखरे ॥ १२ ॥

पातालं विवरं रन्ध्रं छिद्रमाकाशमेव च ।
तृणं शुभ्रमिरं चैव कुङ्कुमं शुष्क[3]चीवरम् ॥ १३ ॥

मणालम[4]जिरं खड्गं तुहिनं द्वारमास्पदम् ॥ १४ ॥

राष्ट्रं [5]तलं किट्टकफे तथायुः स्थूलं खलीनं पललं पलालम् ।
काष्ठं रणं पार्श्वं[6]कुकुन्दरे च सन्देहकं चैव नपुंसकं स्यात् ॥ १५ ॥

इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे अभिधानकोशे नपुंसकविधौ त्रयोदशोऽध्यायः ॥ १३ ॥

---

१. A.B. तल्पं. २. C. पुण्यं. ३. A.C. –चीवरे. ४. V. –मजिनं. C. मजिनं.
५. वलं. ६. A.B.C. कुकंदरेण संदेहके.

## चतुर्दशोऽध्यायः ।

मार्कण्डेयः— [1]ॐ एकैकस्य तु वर्णस्य विन्यासो यः पुनः पुनः ।
अर्थगत्या तु संख्यातमनुप्रासं पुरातनैः ॥ १ ॥

अत्यर्थं तत्कृतं राजन् ग्राम्यतामुपगच्छति ।
शब्दाः [2]समाना भिन्नार्था यमकं कीर्तितं पुनः ॥ २ ॥

आदौ मध्ये तथैवान्ते पादस्य तु तदिष्यते ।
संदष्टकसमुद्रा ( ? द्गा )ख्यौ तथैव यमकौ मतौ ॥ ३ ॥

समस्तपादयमकं दुष्करं परिकीर्तितम् ।
उपमानेन तुल्यत्वमुपमेयस्य रूपकम् ॥ ४ ॥

रूपकाभ्यधिकं नाम तदेवैकगुणाधिकम् ।
गुणानां व्यतिरेकेण व्यतिरेकमुदाहृतम् ॥ ५ ॥

उपमानविरुद्धैश्च गुणैस्तदपरं मतम् ।
द्वित्र्यर्थवाचकैः शब्दैः श्लेष इत्यभिधीयते ॥ ६ ॥

अन्यरूपस्य चार्थस्य कल्पना याऽन्यथा भवेत् ।
[3]उत्प्रेक्षाख्यो ह्यलङ्कारः कथितः स पुरातनैः ॥ ७ ॥

उपन्यासस्तथान्यः स्यात्प्रस्तुताद्यः कचिद्भवेत् ।
ज्ञेयः सोऽर्थान्तरन्यासः पूर्वार्थानुगतो यदि ॥ ८ ॥

उपन्यासेन [4]चान्यस्य यदन्यः परिकीर्त्यते ।
उपन्यासमलङ्कारं तन्नरेन्द्र [5]प्रकीर्तितम् ॥ ९ ॥

हेतुं विना विततता [6]प्रोक्ता सा तु [7]विभावना ।
प्रोक्ता चातिशयोक्तिस्तु ह्यतुलैरुपमागुणैः ॥ १० ॥

यथास्वरूप[8]कथनं स्वभावोक्तिः प्रकीर्तिता ।
भूयसामुपदिष्टानां निर्देशः क्रमशस्तथा ॥ ११ ॥

---

१. B.C.V. omit ॐ. २. V. समानानुपूर्व्या. ३. A.B.C. उत्प्रेक्षाख्यमलङ्कारं कथितं तत्पुरातनैः ४. V.C. वान्यस्य. ५. V. प्रचक्षते. ६. V. प्राप्ता. ७. A. विभाविना ८. A.B.C. –कथनं वर्तेति परिकीर्तितम्.

यथासंख्यमिति [1]प्रोक्तमलङ्कारः पुरातनैः ।
विशेष[2]प्रथनादुक्ता विशेषोक्तिस्तथा नृप ॥ १२ ॥

या क्रिया चान्यफलदा विरोधस्तु स इष्यते ।
स्तुतिरूपेण या निन्दा निन्दास्तुतिरिहोच्यते ॥ १३ ॥

निन्दास्तुतिस्तथैवोक्ता निन्दारूपेण या [3]स्तुतिः ।
[4]वस्तुतस्तूपमानेन दर्शनं तन्निदर्शनम् ॥ १४ ॥

विना तथा स्यादुपमा तु यत्र तेनैव तस्यैव भवेन्नृवीर ।
[5]अनन्वयाख्यं कथितं पुराणैरेतावदुक्तं तव लेशमात्रम् ॥ १५ ॥

ति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे अलङ्काराध्यायो नाम ॥ १४ ॥

---

१. प्रोक्तमलङ्कारं. २. V. –प्रापणादुक्ता. ३. V. स्थितिः ४. वस्तुना रूप्यमाणेन.
५. A.B.C. तमन्वयाख्यं.

## पञ्चदशोऽध्यायः ।

मार्कण्डेयः—

धर्मार्थकाममोक्षाणां शास्त्रं स्यादुपदेशकम् ।
पूर्वैराचरितं सद्भिर्धर्मकामार्थसाधकम् ॥ १ ॥

मोक्षस्य यत्रोपन्यास [1]इतिहासः स उच्यते ।
तदेव [2]काव्यमित्युक्तं चोपदेशं विनाकृतम् ॥ २ ॥

एकस्य चरितादेव तथा काव्यं प्रकीर्तितम् ।
[3]निबद्धौ यत्र राजेन्द्र नायकप्रतिनायकौ ॥ ३ ॥

प्रयाणोद्यतसंप्रेषयुद्धयुक्तं तदेव तु ।
नायकाभ्युदयोपेतं महाकाव्यं तदिष्यते ॥ ४ ॥

[4]वर्णयेच्च महाकाव्ये देशपत्तनपार्थिवान् ।
ऋत्वद्रिनिम्नगाश्चैव तथा [5]नारीश्च पार्थिव ॥ ५ ॥

वर्णनीयौ तथैवात्र नायकप्रतिनायकौ ।
नायको धर्मविजयी सतां पन्थानमाश्रितः ॥ ६ ॥

तथा च [6]लोकविजयी विज्ञेयः प्रतिनायकः ।
[7]प्रतिनायकघातस्तु [8]वक्तव्यो नेतरस्य तु ॥ ७ ॥

नायकस्य महाराज मरणं नैव वर्णयेत् ।
सशरीरस्य यस्य [9]स्यात्स्व [ः] प्राप्तिं तस्य वर्णयेत् ॥ ८ ॥

छन्दोविरहितं गद्यं शब्दशास्त्रविरोधि च ।
कष्टाक्षरपदन्यासमश्लीलवचनान्वितम् ॥ ९ ॥

तस्माद्दुर्लक्ष्यवाक्यार्थमप्रसिद्धाभिधानवत् ।
काव्यबन्धं न कर्तव्यं पुनरुक्तं च यद्भवेत् ॥ १० ॥

---

१. A. B. C. इतिहासं तदुच्यते  २. C. काव्यमित्युक्तमुपदेशविना-  ३. B. C. V. निबद्धा.  ४. A. B. वर्णनं यन्महा-  ५. A. C. नारी च  ६. A. B. C. लोभविजयी.  ७. C. प्रतिनायकयातस्तु.  ८. A. C. वक्तव्येने-  ९. A. B. स्यात्खुस्त्याप्तिं V. स्यात्संप्राप्तिस्तस्य.

विस्मये [1]चाभ्यसूयायां भयशोकत्वरासु च ।
[2]हर्षे च वीप्सा कर्तव्या पुनरुक्तं न तद्विदुः ॥ ११ ॥

दूतवाक्ये तथा स्वप्ने कार्यगत्या तथागते ।
पुनर्वचननिर्देशो पुनरुक्तं च [ ? न ] तद्विदुः ॥ १२ ॥

स संशयं न वक्तव्यं प्रतिज्ञारहितं तथा ।
पूर्वापरविरुद्धं च यच्च लोकविगर्हितम् ॥ १३ ॥

शृङ्गारहास्यकरुणा[ ? ण ]रौद्रवीरभयानकैः ।
बीभत्साद्भुतशान्ताख्यैः रसैः कार्यं समन्वितम् ॥ १४ ॥

काव्यं कलाकौशलसंप्रयुक्तं धर्मेण चार्थेन तथोपपन्नम् ।
धर्मेण युक्तस्य च नायकस्य कार्यं तथा [3]चाभ्युदयान्तमेव ॥ १५ ॥

**इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे महाकाव्यलक्षणं नाम ॥ १५ ॥**

---

१. V. वाभ्यसूयायां. २. C. हर्ष. ३. B. चाभ्युदयातुमेव.

## षोडशोऽध्यायः ।

मार्कण्डेयः

काव्ये येऽभिहिता दोषाः कैश्चित्तेभ्यः प्रहेलिकाः ।
कर्तव्याश्च तथैवान्यास्तासां वक्ष्यामि लक्षणम् ॥ १ ॥
श्लोकेनैकेन वा द्वाभ्यां [1]कर्तव्यास्तु नरोत्तम ।
न कर्तव्याश्च ता राजन्बहुश्लोकनिबन्धनाः ॥ २ ॥
यस्यां [2]मात्रावशादर्थो गोप्यते सा समात्रता ।
पर्यायवचनाद्यस्यां [3]वंदि( वञ्चि )ता सा प्रकीर्तिता ॥ ३ ॥
[4]विक्रान्तगोपिता या तु [5]पदैर्व्यवहितैर्भवेत् ।
अप्रसिद्धैस्तु [6]पर्यायैर्मुषिता नाम सा स्मृता ॥ ४ ॥
कल्पनागोपितार्थात्तु कथिता परिहासिका ।
[7]समानरूपतुल्यार्था शब्दैरन्यैः प्रकीर्तिता ॥ ५ ॥
दुर्बोधाक्षरबन्धा च परुषा नामतः स्मृता ।
संख्यामात्रसमानत्वात्संख्याताख्या तथोच्यते ॥ ६ ॥
[8]अर्थान्तराकल्पनया कल्पिता च तथोच्यते ।
[9]अन्यस्य संज्ञाव्यामोहान्नामांतरितसंज्ञिता ॥ ७ ॥
अर्थव्यामोहतः प्रोक्ता निभृता च महानृप ।
समानशब्दा कथिता तुल्यशब्दनिबन्धना ॥ ८ ॥
अर्थानुलोमदुर्बोधा [10]व्यामूढेति तथोच्यते ।
[11]गूढाख्या कथिता वृत्ते नानाबन्धनिबन्धना ॥ ९ ॥
एकोभयबहुच्छन्ने [12]यथार्थपरिगोपिते ।
संकीर्णा [13] संभवोपेता या तदर्थकरी भवेत् ॥ १० ॥

---

१. A.B. कर्तव्यास्ता नरोत्तम C. कर्तव्यास्तान्नरोत्तम २. B.C. मंत्रिवशादर्थे A. यस्यां मंत्रवशादर्थे ३. काव्यादर्श- वञ्चिता अ. ३ श्लो. ९८. ४. V. वृत्तान्तगोपितान्ताया ५. A.B. पदैर्विवहितैर्भवेत् ६. V. पर्यायैर्दुःखिता नाम सा स्मृता C. पर्यायैर्दुषिता नाम संस्मृता. ७. V. समानरुपातुल्यार्थों ८. V. अर्थान्तरान्कल्पनया ९. A. अन्यसंज्ञा व्यामोहा– B. अन्यमज्ञान व्यामोहा–१०, A. व्योमोढेति ११. V. गुच्छाख्या. १२. A. तथार्थपरिगोप्यते. B. यथा रुपरिगोपिते. १३. A. संभवापीता B.C. संभवापेता.

तदर्थकारी यत्रार्थो ज्ञायतेऽ[1]न्यार्थकारकः।
राजञ्शब्दवशात्सा च कथिता व्यभिचारिणी ॥ ११ ॥

उक्तेऽर्थे वृत्तबन्धेन मात्राभिः [2]ख्यापिता तु या।
नष्टार्था वा[क्]च सा प्रोक्ता वृत्तबन्धनिदर्शिता ॥ १२ ॥

नष्टाक्षरा तु कथिता विनैकेन तदर्थदा।
[3]अन्यार्थता तथैवोक्ता वर्णभ्रष्टा नरेश्वर ॥ १३ ॥

कालस्य रूपरूपाणां व्याख्यानेन तदर्थदा।
बीजमात्रेण लेशाख्या भूमिपाल प्रकीर्तिता ॥ १४ ॥

अश्लीलमेतास्वपि नैव कार्यं तद्वर्ज्यमाहुः कवयो नरेन्द्र।
[4]उद्वेजनीयं तु सतां तदुक्तं [5]अश्लीलवंध्यं [6]सुखदं हि काव्यम् ॥ १५ ॥

इति श्रीविष्णुधर्मोत्तरे प्रहेलिका लक्षणं नाम ॥ १६ ॥

---

१. V.–न्यार्थकामुकः २. V. स्थापिता तथा. ३. A. omits Ślo. १३ C.D. And Ślo. १४ A.B. ४. A.B. उद्वीजनेयं. ५. V.C. अश्लीलबन्धं. ६. V. सुखदं न काव्यम्.

## सप्तदशोऽध्यायः ।

ॐवज्र उवाच— मन्त्राः सब्राह्मणाः प्रोक्तास्तदर्थं ब्राह्मणं स्मृतम् ।
कल्पना च तथा कल्पः कल्पश्च ब्राह्मणस्तथा ॥ १ ॥

[1]कथितान्यथार्षाण्याहुः [? कथितानि तथार्षाणि] पुराणं च तथा द्विज।
प्रक्रिया प्रथमः पादः कथावस्तुपरिग्रहः ॥ २ ॥

उपोद्धातानुषङ्गैश्च तथा संहार एव च ।
चतुष्पादं हि कथितं पुराणं [2]भृगुनंदन ॥ ३ ॥

सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
[3]वंश्यानुवंश्यचरितं पुराणं पञ्चलक्षणम् ॥ ४ ॥

[4]तत्र वा [ चा ? ] विदितं सर्वं तत्रो[? न्त्रो ]क्तं गीतलक्षणम् ।
[5]वृ [ ? नृ ]त्तस्य लक्षणं चैव नाटकाख्यानलक्षणम् ॥ ५ ॥

तस्मादहं त्वां पृच्छामि द्विज [6]नाटकलक्षणम् ।
सभेदं तन्ममाचक्ष्व सर्वज्ञोऽसि यतः प्रभो ॥ ६ ॥

मार्कण्डेयः— इतिहासानुसारेण पुराणानां समीक्षितम् ।
चरितं त्रिदशानां वा नाटकं [7]तत्र कीर्तितम् ॥ ७ ॥

एकनायकसंयुक्तं नायकप्रतिनायकैः ।
संयुक्तमथवा कार्यः काव्ये वै तत्र नायकः ॥ ८ ॥

सर्वास्तु वृत्तयस्तत्र तत्र सर्वे तथा रसाः ।
कालप्रयोगं च तथा युक्त्या संदर्शयेन्नृप ॥ ९ ॥

पञ्चावराङ्कं तत्प्रोक्तं तथा दशपरं शुभम् ।
[8]एकदैवसिकं वृत्तमङ्के राजन्प्रदर्शयेत् ॥ १० ॥

तदन्ते सर्वपात्राणां निष्क्रमश्च विधीयते ।
युक्त्युपन्यासंसंयुक्तं तथा निष्क्रमणं मतम् ॥ ११ ॥

---

१. V. कथितानि तथार्थानि पुराणं. २. B. भृगुसत्तम. ३. वंशानुचरितं चैव पुराणं. ४. A.B.C. तत्तथा विदितं. ५. A.B.C.V. give वृत्त but the context requires नृत्त. ६. V. नाट्यस्य लक्षणम्. ७. C. तत्प्रकीर्तितम्. ८. V. एकदैवतिकं.

मरणं राज्यविभ्रंशो नगरस्योपरोधनम् ।
एतानि दर्शयेन्नाङ्के तथा युद्धं च पार्थिव ॥ १२ ॥

प्रवेशकेन कर्तव्यं [1]तेषामाख्यानकं बुधैः ।
[2]पात्रद्वयेन कर्तव्यं तथा नित्यं प्रवेशकम् ॥ १३ ॥

पात्रे परिजने तत्र कर्तव्यं नायके न तु ।
भिन्नं पात्रद्वयं यत्र तत्र विष्कम्भकं स्मृतम् ॥ १४ ॥

तयोरन्ते तु कर्तव्या तथा रङ्गस्य शून्यता ।
[3]अङ्कान्ते च तथा कार्या न कार्या सान्यथा भवेत् ॥ १५ ॥

[4]बहुदैवसिकं वृत्तं कर्तव्यं तु प्रवेशके ।
संक्षेपोक्तिश्च कर्तव्या कर्तव्यो न हि विस्तरः ॥ १६ ॥

प्रख्यातनायकवधं न च तत्र प्रवेशयेत् ।
तस्य प्रकाशनं [5]कार्यमङ्के युक्त्या नराधिप ॥ १७ ॥

नायकाभ्युदयः कार्यो नाटकान्ते तथैव च ।
बह्व्योऽपि [6]नायिका यत्र तासामपि तथा भवेत् ॥ १८ ॥

एवंविधा सशृङ्गारा चतुरङ्का तु नाटिका ।
कृतं प्रकरणं तद्वत्स्वयमुत्पाद्य वस्तुना ॥ १९ ॥

ब्राह्मणो नायकस्तत्र [7]वणिग्वा नृपसत्तम ।
एवं प्रकरणी कार्या [8]चतुरङ्कापि सा भवेत् ॥ २० ॥

इतिहासानुबन्धो वा स्वयमुत्पाद्य वा कृतः ।
भारती करुणप्रायो निवृत्तं [9]समनन्तरम् ॥ २१ ॥

[10]उत्सृष्टकाङ्कः कर्तव्यो दिव्यनायक[11]वर्जितः ।
इतिहासानुसारेण [12]भाणश्चैकाह्निकः स्मृतः ॥ २२ ॥

---

१. C. तेषामाद्येनकं २. B. मात्रद्वयेन. ३. V. अज्ञान्ते. ४. V. बहुदैवतिकं, ५. V. कार्यमङ्केप्येव नराधिप ६. V.C. नायका. ७. V. वणिक्च. ८. C. चतुरङ्गापि. ९. A.B.C. समनन्तरा. १०. B.C. तत्सृष्टकांकः V. चतुष्टयाङ्कः ११. V.—वर्तितः १२. B.V. प्राण–

एकाङ्को युद्धबहुलः स्वात्मशंसापरस्तथा ।
आकाशकथनैर्युक्तस्त्वेकपात्रकृत[1]क्रियः ॥ २३ ॥

प्रोक्तस्समवता[ ? का ]राख्यस्त्रिदशासुरनायकः ।
[2]त्रिशृङ्गारस्त्रिकपटस्तथा द्वादशनायकः ॥ २४ ॥

[3]ईहामृगोऽथ बह्वङ्कस्तथा गन्धर्वनायकः ।
शृङ्गारबहुलः कार्योऽतृप्तयोनि[4]रसाश्रयः ॥ २५ ॥

ऐकाह्निको द्द[ ? दी ]प्त रसो व्यायोगश्चैकनायकः ।
वीथी त्रयोदशाङ्का[ ङ्गा ] स्यात्तथा नायकवर्जिता ॥ २६ ॥

डिमाख्यश्च तथा प्रोक्तो रसस्तु सुरनायकः ।
तथा रौद्ररसप्रायः प्रख्यातविषयान्वितः ॥ २७ ॥

[5]एकाङ्को हास्यबहुलस्तथैवोदात्तनायकः ।
कार्यः प्रहसनाख्यस्तु वेश्याविटसमन्वितः ॥ २८ ॥

सूत्रधारस्य वाक्येन काव्यवस्तुनिबन्धनम् ।
सर्वं प्रकाशयेदादौ सर्वेष्वेतेषु [6]वस्तुमत् ॥ २९ ॥

संस्कृतं नायकवचो लिङ्ग[ ? ङ्गि ]श्रोत्रियभूभुजाम् ।
द्विजन्मनां सुराणां च [7]दैत्यगन्धर्वभोगिनाम् ॥ ३० ॥

नायिकादेवरामाणां व्याजलिङ्गवतां तथा ।
विदूषकानां च भवेत्प्राकृतं वचनं नृप ॥ ३१ ॥

बालस्त्रीनीचशण्ढानां ये चान्ये नानुकीर्तिताः ।
तेषां वाक्यमपभ्रष्टं तच्च ज्ञात्वा प्रयोजयेत् ॥ ३२ ॥

स्वयमुत्पादितानां मे [8]नाम्नां त्वं शृणु लक्षणम् ।
[9]शर्मवर्मधनान्यन्ते वर्णानां दासवत्तथा ॥ ३३ ॥

राज्ञां विक्रमसंयुक्तममात्यानां तथा भवेत् ।
स्त्रीणां सुखोद्यमक्रूरं [10]नायिकानां मनोहरम् ॥ ३४ ॥

---

१. B.–क्रियाः २. B. drops. Ślo. No. 24 C. D. ३. B. drops Ślo. 25 A.B. ४. A. रमाश्रयः ५. A.B. drop. Ślo. 28 ६. V. वस्तुयत्. ७. B.C. दैवगंधर्व– ८. V. नानात्वं; ९. A.B.C. शर्मवर्मधनान्यत्र वर्णानां. १०. A.B. नायकानां.

राज्ञीपरिजनस्त्रीणां कलाकौशलसंयुतम् ।
राज्ञः परिजनस्त्रीणां विजयोत्तरमिष्यते ॥ ३५ ॥

सांवत्सराणां माङ्गल्यं शांतिप्रायं पुरोधसाम् ।
शूरप्रायममात्यानामायुष्यं भिषजामपि ॥ ३६ ॥

विटानां भूषणप्रायं [१]दासानां कुसुमाधिकम् ।
ऋषिगोत्रधरौ कार्यौ कंचुकीयविदूषकौ ॥ ३७ ॥

दत्ता मित्रा तथा सेना वैश्या नाम ततो भवेत् ।
अधिकारानुरूपाणि तथा चैवाधिकारिणाम् ॥ ३८ ॥

अतः परं प्रवक्ष्यामि येन वाच्यस्तु यो तथा ।
देवेति राजा वक्तव्यो भृत्यैः प्रकृतिभिस्तथा ॥ ३९ ॥

राजेति [२]विप्रैर्वक्तव्यो ऋषिभिर्नामगोत्रतः ।
अपत्यप्रत्ययाद्वैर्वयस्येति समो जनः ॥ ४० ॥

विदूषकोऽपि वक्तव्यो वयस्य इति नायकैः ।
आयुष्मानिति सूतेन रथी वाच्यस्तथा भवेत् ॥ ४१ ॥

भगवन्निति वक्तव्या ऋषयो [३]गुरवः सुराः ।
[४]पुत्र वत्सेति शिष्यस्य तथा वा नामगोत्रतः ॥ ४२ ॥

आर्यपुत्रेति वक्तव्यः स्त्रिया भर्ता नराधिप ।
नाम्ना भार्या तु वक्तव्या राज्ञी देवीति नायिका ॥ ४३ ॥

पिता तातस्तथा वाच्यो मातुश्चैवार्यकः पिता ।
युवराजः कुमारः स्यान्मान्यो [५]भावः समीरितः ॥ ४४ ॥

[६]मान्यमानस्तथा भामो भर्तृदारः कुमारकः ।
[७]हलेति तु समाना स्त्री वक्तव्या समया तथा ॥ ४५ ॥

[८]हञ्जेत्यामन्त्रयेन्नारीं [? री] [९]हण्डे परिजने स्वके ।
स्वसेति भगिनी वाच्या लिङ्गस्था व्रतिनी [१०]मता ॥ ४६ ॥

---

१. V. दासीनां कुसुमादिकम्. २. A. विप्रैर्वक्तव्य ३. B.C.V. गुरुवः ४. A. पुत्रवत्स्येति. ५. C. भावस्प्रकीर्तितः ६. A.B.C. नान्यमानस्तथा मायो-reading is meaningless. ७. A.B. हलीति. ८. A.B. हञ्जीत्या. ९. C. तथा instead of हण्डे A.B. हण्डी. १०. V.C. तथा.

आर्येति ब्राह्मणी वाच्या [१]शेषा लिङ्गार्थतस्तथा ।
अतः पुरचरो यस्तु स्त्रीभोगपरिवर्जितः ॥ ४७ ॥

स तु [२]वर्षवरो ज्ञेयस्तदध्यक्षस्तु कञ्चुकिः ।
ब्राह्मणः स [३]भवेद्वृद्धो मान्यश्च वसुधाधिपैः ॥ ४८ ॥

विदूषको ब्राह्मणः स्यान्नायकस्य रहस्यवित् ।
[४]नटप्रधानश्च भवेत्सूत्रधारो नराधिप ॥ ४९ ॥

ज्ञेया बीजसमुत्पत्तिर्मुखं नानारसोद्भवः ।
मुखोप्तबीजो [५]द्धटनस्तथा प्रतिमुखं स्मृतम् ॥ ५० ॥

[६]प्राप्त्यप्राप्तियुतो गर्भस्तस्यैवोद्भेदसंज्ञितः ।
तदेवोद्भिन्नबीजार्थो [७]विमर्शो व्यसनान्वितः ॥ ५१ ॥

मुखादीनां निर्वहणं तथा [८]निर्वहणं भवेत् ।
नाटके सप्रकरणे कर्तव्याः पात्र[ ? पञ्च ]संधयः ॥ ५२ ॥

डिमे समवकारे च [९]विमर्शं नैव कारयेत् ।
व्यायोगेहामृगौ कार्यौ तथा गर्भविवर्जितौ ॥ ६३ ॥

[१०]उत्सृष्टाङ्कं प्रहसनं वीथी [११]भाणकमेव च ।
एतेषां नैव कर्तव्यं तथा प्रतिमुखं नृप ॥ ५४ ॥

औदार्यं सत्पथं शौर्यं नायकस्तु न संत्यजेत् ।
नायिकापि तथा राजन्य [ ? न्त्य ] जेद्वा [१२]प्रतिनायकम् ॥ ५५ ॥

अतः परं प्रवक्ष्यामि [१३]नायिकाष्टकलक्षणम् ।
[१४]निजापराधात्स्वगृहे [१५]वाससज्जा तु नायिका ॥ ५६ ॥

विरहोत्कण्ठिता सैव या [१६]त्वनागतनायि[ ? य ]का ।
स्वाधीनभर्तृका प्रोक्ता या स्यात्स्वाधीनभर्तृका ॥ ५७ ॥

---

१. A.B. मेषा. २. V.B. वर्षधरो. ३. B.–द्वृद्धो साध्यश्च. ४. V.B.C. नट-प्रधानः स. ५. V.B.–द्धटनं तथा. ६. C.V. प्राप्याप्राप्ति–B. प्राप्यप्राप्ति.–७. V. विसर्गो. B. विमर्षो. ८. V. निर्वहतं. ९. V.C, विसर्गं. १०. V.C. उत्सष्टाङ्क. ११. A.B. बाणकमेव च. १२. A.B. प्रतिनायकम्. १३. A.C. नायकाष्टकं लक्षणम्. १४. A.B.C. सृजा. १५. A. वाममज्ञा; B. वासवज्ञा. १६. A. या तु नाशितनायिका.

कलहान्तरिता प्रोक्ता कलहाहृत[1]नायका ।
खण्डिता या च नखरैर्युतमेति [2]प्रगे पतिम् ॥ ५८ ॥

विप्रलब्धा तु सा ज्ञेया संकेते कान्तवर्जिता ।
प्रवासगतकान्ता तु तथा प्रोषितभर्तृका ॥ ५९ ॥

[3]एतासां चेष्टिताकारलीलाभिर्बन्धनं घनम् ।
[4]नाटकादिषु रम्येषु [5]कर्तव्या द्वादशस्वपि ॥ ६० ॥

शृङ्गारहास्यकरुणवीररौद्रभयानकाः ।
बीभत्साद्भुतशांताख्या नव नाट्यरसाः स्मृताः ॥ ६१ ॥

बंधो रसानुगः कार्यः [6]सर्वेष्वेतेषु यत्नतः ।
रसप्रधानमेवैतत्सर्वनाट्यं नराधिप ॥ ६२ ॥

एते कला[7]कौशलसंप्रयुक्ताः कार्यास्तथा लोकविधानयुक्ताः ।
धर्मार्थकामाद्युपदेशगाश्च हिताय लोकस्य नरेन्द्रचन्द्र ॥ ६३ ॥

इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे द्वादशरूपो नाम ॥ १७ ॥

---

१. A.B.-नायिका. २. V. प्रगोर्पतिम्. ३. V. एतासामुचिताकार.- ४. A.C. नटकादिषु. ५. V. कर्तव्यं. ६. B. सर्वेष्वेते प्रयत्नतः ७. V.-कौशलशीलयुक्ताः

# अष्टादशोऽध्यायः

मार्कण्डेय :— अथ गीतलक्षणं भवति । तस्य त्रीणि स्थानानि—उरः कण्ठः शिरश्च, तेभ्यो मन्द्रमध्यतारोत्पत्तिः । त्रयो ग्रामाः—षड्जमध्यम-गान्धाराः। सप्त स्वराः—षड्जर्षभगांधारमध्यम[१]पञ्चमधैवतनिषादवन्तः। [२]एकविंशतिर्मूर्च्छनाः सप्त सप्त प्रतिग्रामाश्रिताः, तद्यथा, आसां नामानि—सौवीरी, हारिणाश्वा, [३]कलोपनता, शुद्धमध्यमा, मार्गी, पौरवी, [४]ऋ[ ह्र ]ष्यका च, एतास्सप्त मध्यमग्रामिण्यः । [ उत्तरमन्द्रा, रजनी, ] उत्तरायता, शुद्धषड्जा, मत्सरीकृता, अश्वक्रांता, [६]उद्गता च, एतास्सप्त षड्जग्रामिकाः । [७]( आलापा ), कुन्तिमा, [८]शुद्धा, उत्तरा, षड्जा, पञ्चायता, [९]उद्गता ( च ), एताः सप्त [१०]गान्धारग्रामिकाः । अथैकोनपञ्चाशत्ताना:—अग्निष्टोमिकः [११]अत्यग्नि-ष्टोमिकः [१२]वाजपेयिकः, [१३]पौण्डरीकः, आश्वमेधिकः, राजसूयिकः, बहुसुवर्णिकः, गोसविकः, महाव्रतिकः, ब्रह्मतानः, [१४]प्राजापत्यः, [१५]नागाश्रयः, यज्ञाश्रयः, गोदानिकः, हयक्रान्तः, अजक्रान्तः, विष्णुक्रान्तः, अरण्यः, मत्तकोकिलः, उज्जीविकश्चेति, एते विंशति-र्मध्यमग्रामिकाः । [१६]प्रस्वापनं, पैशाचः, जीवनः, सावित्रः, अर्ध-सावित्रः, सर्वतोभद्रः, सुवर्णः, विष्णुः, जिष्णुः, [१७]विष्णुनरः, शारदः, विजयः, हंसः, ज्येष्ठ इति, एते चतुर्दश षड्जग्रामिकाः । तुम्बुरुप्रियः, महालक्ष्मणः, गंधर्वानुमतः, अलम्बुसप्रियः, नारदप्रियः, भीमसेनप्रियः, [१८]विनतः, मातङ्गः, भार्गवप्रियः, अभिरामः, संश्राव्यः, किन्नरप्रियः, पुण्यः, मनोहर, कल्याणकरश्चेति, एते पञ्चदश

---

१. V. —पञ्चमनिषादधैवताः C.–पञ्चमधैवतनिषादवक्तः २. V.A.B.C. एकविंशति-मूर्छनाः ३. B. कलोनापता. ४. V. ऋष्यका चेति. ५. V. उत्तरा संज्ञाः प्राश्विनी. A. उत्तरा मन्दारिजनी. B. उत्तरा मन्दारिजनी उत्तरायुता. C. उत्तारसञ्चारिजनी. ६. N. S. & S. R. अभिरुद्गता. ७. A.B.C. आपोली. V. आलापी. S.R. आलापा. ८. V. श्रद्धा. ९. V.C. drop. उद्गतादं. A.B. उद्धताद. १०. A.B. गांधारि.– ११. A. B. C. drop. अत्यग्निष्टोमिकः १२. V. omits. वाजपेयिकः C. वाजपेयकः १३. V. पौण्डरिकः १४. C. प्रजापत्यः B. प्राजापतिः १५. V. नगाश्रयः C. नागाश्रयः यक्षाश्रयः १६. A.B.C. प्रद्रावनं. १७. V.C. विष्णुवरः १८. V. वितानः

[1]गान्धारग्रामाश्रिताः । एतच्चतुर्विधं, [2]स्वरपदलयावधानप्रयोगात् । मूर्च्छनास्वादिमध्यान्ते [3]वादिसंवाद्य( नु )वादिसंज्ञास्तिस्रो वृत्तयः । पूर्वोक्ताश्च नव रसाः । तत्र हास्यशृङ्गारयोर्मध्यमपञ्चमौ, वीररौद्राद्भुतेषु [4]षड्ज( र्षभौ ), करुणे निषादगान्धारौ, बीभत्सभयानकयोर्धैवतं, शान्ते मध्यमम् । तथा लयाः—हास्यशृङ्गारयो[5]र्मध्यमः, बीभत्सभयानकयोर्विलम्बितः, वीररौद्राद्भुतेषु द्रुतः । चोक्षाप्रयोगः [6]सुराराधने रूपकेषु प्रकरणानुगतः मन्यु व्यपदेशेन [7]तं भवति । भवन्ति चात्र श्लोकाः—

ग्रहांशस्ता[8]रमन्द्रे च न्यासो( सा )पन्यास एव च ।
अल्पत्वं च बहुत्वं च [9]षाडवौडविते तथा ॥ १ ॥

एवमेव बुधैर्ज्ञेया जातयो दशलक्षणाः ।
अलङ्काराश्च चत्वारो भवन्ति वसुधाधिप ॥ २ ॥

प्रसन्नादिः प्रसन्नान्तः प्रसन्नाद्यन्त एव च ।
प्रसन्नमध्यश्च तथा क्रमेणैवं विनिर्दिशेत् ॥ ३ ॥

अपरान्तकमु( ल्लो )प्यं [10]मद्रकम्प्रकरी तथा ।
[11]( वैणकं चैव ) रोविंदमुत्तमं गीतकानि तु ॥ ४ ॥

ऋग्गाथा पाणिका दक्षविहिता ब्रह्मगीतिका ।
गीतमेतच्च( द )भ्यासः कारणाच्चोक्षसंज्ञकः ॥ ५ ॥

संक्षेपेण मया प्रोक्तं सुराराधनकारणात् ।
गीतज्ञो यदि गीतेन नाप्नोति परमं पदम् ।
देवस्यानुचरो भूत्वा तेनैव सह मोदते ॥ ६ ॥

**इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे गीतलक्षणं नाम ॥ १८ ॥**

---

१. गान्धारमाश्रिताः २. -वधानयोगात्. ३. A.B.C.V. -संवाद्यन्त्यवादि- ४. A.B.C. षड्जभाषायां. V. षड्जपञ्चमौ. ५. V. -र्मध्यमाः C. -र्मध्यमे ६. A. सुराराधेनु. B. सुराराधेन. C. स्वरराधेन. V. स्वरोराधने. ७. A.B.C. मन्यव्यपदेशेन तं भवति । भवति चात्र and omit. श्लोकाः V. मन्युव्यपदेशेन ते भवन्ति. ८. A.B.-मध्ये. ९. A. षाडवौडविडे. B. षाडवौडमिते. V. षाडवोडविते. १०. V. मन्द्रकः मकरी तथा. ११. A.B.C. उवेणकं रोविंदमुत्तमं. V. उवेणकं सरोविंदुमुत्तमं.

## नवदशोऽध्यायः ।

मार्कण्डेय :— अथातोद्यविधानम् । चतुर्विधमातोद्यं—ततं [1]सुषिरं घनमवनद्धं च । ततं वीणादि, सुषिरं वंशादि, घनं [2]तालादि, अवनद्धं मुरजादि[3] । तत्र स्वरास्तुल्याः शारीरा[4]वैणवाश्च । तद्वद्वंशाः— किन्तु यथा [5]शारीराणामारोहावरोहणे तथा वैणवानां वंशानां विपर्ययात् । तालः कालप्रयोज्यः पञ्चलघ्वक्षरोच्चारणाकला मात्रा । तिस्रो वृत्तयः— चित्रा वृत्तिः दक्षिणा [6]चेति । द्विकलामात्रा चित्रे, चतुर्मात्रा वृत्तौ, [7]अष्टमात्रा [8]दक्षिणायाम् । अवया [9]निष्कामो विक्षेपः प्रवेशः— [10]श्यामतालः सन्निपातश्च भेदाः कलासमूहो( प )[11]युक्ताः । चपुटस्थः । अयुक्चञ्चत्पुटलः प्लुतान्तः पञ्चपाणिः[12]षट्पितापुत्राक्षरस्थः । तत्र [13]लयाः— द्रुतमध्यविलम्बिताः । लयवत्तालः । प्रकरणं [14]द्विविधं— कुलकं छेद्यकं च । अथावनद्धं—तत्र [15]पौष्करवत्करणान्वितम् । तत्र षोडशाक्षराणि क ख ग घ ट ठ ड ढ त थ द ध य र ल ह । इति ।

तत्र क ट र ( थ ) [16]तगादि दक्षिणमुखे, घध, वामे, [17]गदकारमूर्ध्वे, ठ ण ल हा आलिङ्गे । ( तत्र ) अ आ इ ( ई ) उ ( ऊ ) ए ( ऐ ) ओ [18]अः च ( औ अं ) ( इति स्वरा ) यथायोगं ( व्यञ्जनैः सह संयोगं गच्छन्ति ) । [19]खगथानां रेफेण योगः । [20]कहभदानां [21]णलथवैः । समहस्तनिपातादङ्गुलि[22]प्रचलनोर्ध्ववामैकयोः समहस्तनिपातप्रदेशिनी [23]चैतद् नल्लानां योगः समपाण्यर्धपाणिरर्धार्धपाणिरेकपाणिः । द्विहस्तप्रदेशिनी प्रहतानि

---

१. A. omits from सुषिरं to वीणादि. २. A.B.C. तालं. ३. A. तत्रा– ४. V. –वैणजाश्च N.S. वैणाः शारीराश्च. ५. A.C. शारीराणामारोहणे. V. शरीराणा– ६. V. drops. चेति. ७. A. drops. अष्टमात्रा दक्षिणायाम्. ८. A.B. दक्षिणे आवया C. दक्षिणो आवयौ ९. V. निष्कयो. १० V. शम्पातालः संनिपातभेदः C. शस्यातालः ११. V.—युक्तः १२. V. ख इति ता पुत्रा यथाक्षररथः. १३. C. लयः १४. C. द्विविधमाकुलकं. १५. B. पौष्करवत्ककरणान्वितम्. १६. B. उगा दक्षिणामुखे. V. उगादि दक्षिणमुखे. १७. V. गदकारामूर्ध्निः टणलहा १८. V. अइ च ओ. १९. V. खगधानां. २०. C. कहभदनां २१. V. ण ल व थ वः २२. C. प्रचलनोद्ववामेकयोः V. प्रचलनोर्ध्ववामैकयोः २३. V. तद्वत् बल्लानां.

समपाणिप्रहतो ( म ) कारः । घ थ ग ड रा अर्धपाणौ । कथकारा अर्धार्धपाणौ । ठणलहा द्विहस्ते प्रदेशिनीप्रहते ॥ अङ्कितवितस्तालिप्तगोमुखीमार्गाः । शृङ्गारहास्ययोर[१]ङ्किताः । वीररौद्राद्भुतेषु [२]वितस्ताः । करुणशान्तयो[३]रालिप्ताः । बीभत्सभयानकयो[४]र्गोमुखी । दर्दुरपणवयोर्मृदङ्गानुगमनं भवति ।

[५]भवन्ति चात्र—

नेपथ्यभवन[६]द्वारसमान( सम )रङ्गाभिवी[७]क्षणम् ।
[८]मुरजाः पृष्ठतस्तेषां तद्वन्मार्जनिका भवेत् ॥ १ ॥

[९]वामतस्तस्य विज्ञेयौ दर्दुरः पणवस्तथा ।
उत्तराभिमुखो [१०]गातातथा दक्षिणतो भवेत् ॥ २ ॥

वामतो [११]गैरिकस्तस्य दक्षिणे वंशवादकौ ।
गातुरेवाभिमुख्येन [१२]गायकानां निवेशनम् ॥ ३ ॥

इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे आतोद्यविधिर्नामाध्यायः ॥ १९ ॥

---

१. V. –रंचितः C. रंचितः २. V. वितस्तः ३. –V. रालिप्तः ४. V. –गोमुख. ५. A.C.B. भवति. ६. V. –द्वारा ७. C. –वीक्षणः ८. A. मुरजः ९. C.V. वामस्तस्य. १०. B. गता. ११. A. गैणिकस्तस्य. १२. गायिकानां.

## विंशमोऽध्यायः ।

मार्कण्डेय :–

परस्यानुकृतिर्नाट्यं नाट्यज्ञैः कथितं नृप ।
तस्य संस्कारकं नृत्तं भवेच्छोभाविवर्धनम् ॥ १ ॥

[1]नृत्तं तु [2]द्विविधं प्रोक्तं नाट्य[3]लास्याश्रयं सदा ।
द्वैविध्यं द्विविधस्यापि पुनरुक्तं नराधिप ॥ २ ॥

[4]आभ्यन्तरं च बाह्यं च बाह्यं लक्षणवर्जितम् ।
[5]आभ्यन्तरं लक्षणवन्मङ्गल्यं तत्प्रयोगतः ॥ ३ ॥

लास्यं स्वच्छन्दतः कार्यं मण्डपे यदि वा बहिः ।
[6]नाट्यं मण्डप एव स्यान्मण्डपं द्विविधं भवेत् ॥ ४ ॥

आयतं [7]चतुरस्रं तु द्वात्रिंशद्धस्तसम्मितम् ।
चतुरस्रं तु कर्तव्यमायतं द्विगुणायुतम् ॥ ५ ॥

हीनाधिकं न कर्तव्यं दृष्टादृष्टशुभप्रदम् ।
हीने भवति सम्मर्दो विस्तीर्णे नाट्यगेययोः ॥ ६ ॥

व्यक्तिर्नैवोपपद्येत तस्मात्तौ परिवर्जयेत् ।
आदावेव तु कर्तव्यं त्रिदशानां तु पूजनम् ॥ ७ ॥

पूजनं जर्जरस्यापि [8]वास्तुदैवतपूजनम् ।
एवं कृत्वा ततो नाट्यं नान्दीपूर्वकमिष्यते ॥ ८ ॥

ततो जवनिकाक्षेपैः प्रतिपात्रप्रवेशनम् ।
प्रवेशनिर्गमौ कार्यौ कृत्वा कार्यस्य सूचनम् ॥ ९ ॥

पुष्पाञ्जलिः [9]प्रदातव्यो नान्द्यन्ते ब्रह्मपूजनम् ।
पाठ्ये [10]गीते समासक्तः पात्रतुल्यः परिक्रमः ॥
चतुष्कलो नायकानां मध्यानां त्रिकलो भवेत् ॥ १० ॥

---

१. V. नृत्यं. २. A.B.C. द्वैविधं ३. N.S. ताण्डव instead of नाट्य. ४. B.C.V. अभ्यन्तरञ्च. ५. B.C.V. अभ्यन्तरं. ६. A. नाट्य. ७. A.B.C. चतुरश्रं instead of चतुरस्रं. ८. B. वास्तुदैवतुपूजनम्. ९. A. प्रदातव्यं नाट्यन्ते ब्रह्मपूजनम्. C. विधातव्यौ नाट्यन्ते ब्रह्मपूजनम्. V. प्रदातव्या-नाट्यान्ते वास्तुपूजनम्. १०. A. गीतसमाका–

द्विकल[1]श्चाधमानां स्यान्मध्यमे नृप कर्मणि ।
[2]एकाधिकोनं सर्वेषां [3]कर्तव्यं कार्ययोगतः ॥ ११ ॥

देवी( ? वा ) वी( ? धी ) रोद्धता ज्ञेया उद्धता दानवादयः ।
नृपाश्च [4]धीरललिता धीरास्तदनु[5]जीविनः ॥ १२ ॥

प्रशान्तधीरा ऋषयः प्रशान्तास्तत्पदानुगाः ।
धीरोदात्तास्तथा विप्रा [6]उदात्ता वणिजो मताः ॥ १३ ॥

एवंविधाश्च कथिता एतेषामेव योगतः ।
[7]आहार्यः सात्त्विकश्चैव [8]वाचिकोऽङ्गिक एव च ॥ १४ ॥

चतुष्प्रकारोऽभिनयः कर्तव्यो नाट्यकर्मणि ।
आहार्यः प्रतिशीर्षादि[9]र्द्धिः कृतो वेश उच्यते ॥ १५ ॥

[10]धीरोद्धतानां वेशः स्यान्न चात्यर्थसमुल्बणः ।
उद्धतश्चोद्धतानां स्याद्राज्ञां ललित इष्यते ॥ १६ ॥

[11]प्रतिनायकवेशस्तु कर्तव्यश्च तथोद्धतः ।
अन्येषां सदृशो वेशो देशकर्माश्रयो भवेत् ॥ १७ ॥

अश्वादयश्च कर्तव्याश्चर्मकाष्ठादिभिः समाः ।
अतः परं प्रवक्ष्यामि सात्त्विकाभिनयं तव ॥ १८ ॥

अश्रुप्रपातरोमाञ्च[12]स्वेदस्पन्दनतस्तथा ।
तथा च वर्णविन्यासैः सात्त्विकाभिनयो भवेत् ॥ १९ ॥

वाचिको वाचया प्रोक्तो वक्ष्या[13]म्याङ्गिकमुत्तरे ।
[14]नाट्यवृत्तं तु कर्तव्यं हर्षस्थाने सदा बहु ॥ २० ॥

शोकस्थाने न कर्तव्यं किञ्चिद्वा [15]कारयेत्तथा ।
चतुर्धा रेचकं प्रोक्तं कटिपादाङ्घ्रिकाश्रयम् ॥ २१ ॥

---

१. C. –श्चाधमानं. २. A.B. एकादि कोणः ३. A. कर्तव्यः ४. C. वीरललिता. ५. B. –जीवतः ६. B. तदात्ता ( in Śāradā Script त is written as उ )७. V. आहर्यः which is miswritten. ८. V.C. याचिकोङ्गिक. ९. B.V. र्द्धिकृतो. १०. C. वीरोद्धतानां. ११. A.B. प्रतिनायकवेशः स्यात्कर्तव्यं. १२. V. स्वेदनं स्पंदनं तथा. १३. B. C.V. –म्यङ्गिक– १४. A.B. नातिवृत्तं. C. नाट्यो वृत्तं. १५. V. कारयेत्ततः

[1]चातकान्या महाचारी चारी च द्विविधा मता ।
सुकुमाराङ्गवाक्चेष्टा चारी भवति यादव ॥ २२ ॥
[2]एतैरभ्युत्थितैर्ज्ञेया महाचारी नरेश्वर ।
मण्डलानि [3]दशैव स्युश्चारीसंयोगजानि तु ॥ २३ ॥
अतिक्रान्तं विचित्रं च तथा ललितसञ्चरम् ।
[4]सूचीविद्धं दण्डपादं विक्र(? हृ)तालातसंज्ञिते ॥ २४ ॥
[5]वामबद्धं सललितं क्रान्तं चाकाशगामि तु ।
मण्डलानि दशान्यानि शृणु भौमानि पार्थिव ॥ २५ ॥
भ्रमरास्कन्दिते स्यातांमार्दवं(? तामावर्तं) च ततः परम् ।
[6]समासरितमित्याहुरेडकाक्रीडितं यथा ॥ २६ ॥
अड्डितं [7]शकटास्यं च [8]तथाद्य(? ध्य)र्धमिति स्मृतम् ।
[9]पिष्टकुट्टं च विज्ञेयं तथा [10]चाषगतं पुनः ॥ २७ ॥
अथाङ्गहारान्वक्ष्यामि नामतस्तान्निबोध मे ।
स्थिरहस्तोऽङ्गहारस्तु तथैवाक्षिप्तकः स्मृतः ॥ २८ ॥
उद्घाटित[11]स्तृतीयः स्यात्तथा चान्योऽपराजितः ।
[12]मत्ताक्रीडोऽथ विष्कम्भस्तथा स्वस्ति[13]करेचितः ॥ २९ ॥
वृश्चिकापसृतश्चैव तलमन्दा[14]वसर्पितः ।
[15]मत्तलीस्खलितश्चैवं भ्रमरः पार्श्वस्वस्तिकः ॥ ३० ॥
मदविलसितश्चैव विक्षिप्तो गतिमण्डलः ।
वैशाखरेचितश्चैव परिवृत्तकरेचितः ॥ ३१ ॥
उद्वर्तकः परिच्छिन्नो रेचकोऽथ बलाहकः ।
संभ्रान्तो वाङ्गिकश्चैव [16]रतिक्रीडो [17]ह्यलातकः ॥ ३२ ॥

---

१. A B. चात्यकान्यां C. चान्यकान्या. २. V.B.C. एतैरभ्यर्थितैर्ज्ञेया. ३. V. दशैवास्य चारी. ४. A. drops. सूचीविद्धं...संज्ञिते. ५. C.वामाबद्धं. N.S. (C. & N.) वामबन्धं; °विद्धं (G.O.S.). ६. A. समां सरितमित्याहुरेलका- ७. V. शकटाब्यं. ८. V तथाहार्यमिति. ९. A.B. पिट्टकुट्टं; C. °कुब्जं. १०. V.C. चापगतं. ११. A. -स्तृतीशोस्य तथा. C. -स्तृतीयास्य तथा. १२. B. सत्ताक्रीडो. १३. A.B. रेचकः. १४. A. वसर्पिता. B. वसर्पिताः. V. च सर्पितः. १५. V. मतली. A. मातुलीस्खलिताश्चैव. B. मतुली स्खलिताश्चैवं. १६. B.C.V. इति. १७. A.B. हिलातकः.

विद्युद्भ्रान्तः परावृत्तः पार्श्वच्छेदसमन्वितः ।
आक्षिप्तो रेचितश्चैव सौम्योऽथ करितस्तथा ॥ ३३ ॥

सूचीविद्धोऽपविद्धश्च विलापोऽव( ? र्ध )निकुट्टितः ।
[१]षट्त्रिंशदेते संप्रोक्ता ह्यङ्गहारा यदूत्तम ॥ ३४ ॥

एतेषां संप्रवक्ष्यामि [२]करणानि यथाक्रमम् ।
हस्तपादप्रचारश्च यथा योज्यः प्रयोक्तृभिः ॥ ३५ ॥

सर्वेषामङ्गहाराणां निष्पत्तिः का( ?क ) रणं भवेत् ।
तान्यहं संप्रवक्ष्यामि नामभिः कर्मभिस्तथा ॥ ३६ ॥

हस्तपाद[३]समायोगो नृत्तस्य करणं भवेत् ।
द्वे [४]नृत्तकरणे चैव भवेतां [५]नृत्तमातृका ॥ ३७ ॥

त्रिभिः कलापकश्चैव चतुर्भिः [६]खण्डकः स्मृतः ।
पञ्चैव करणानि स्युः [७]संघातक इति स्मृतः ॥ ३८ ॥

षड्भिर्वा सप्तभिर्वापि [८]अष्टभिर्नवभिस्तथा ।
करणैरिह संयुक्ता अङ्गहारा इति स्मृताः ॥ ३९ ॥

एतेषां चैव वक्ष्यामि नामान्यहमतः परम् ।
तलपुष्पापविद्धे द्वे [९]लीनं स्वस्तिकरेचितम् ॥ ४० ॥

मण्डलं स्वस्तिकं चैव [१०]ऊरुवृत्तं [११]निकुट्टकम् ।
सूचीविद्धं करिच्छिन्नमर्धरेचितमेव च ॥ ४१ ॥

वक्षःस्वस्तिकमुत्पन्नं( ? न्मत्तं ) स्वस्तिकं पृष्ठगं पुनः ।
दिक्स्वस्तिकम[१२]लाताख्यमर्धसूचि कटिसमम् ॥ ४२ ॥

आक्षिप्तरेचितं क्षिप्रमर्धस्वस्तिक[१३]संज्ञितम् ।
भुजङ्गत्रासितं चैव ऊर्ध्वजानु निकुञ्चितम् ॥ ४३ ॥

---

१. N.S. gives 32 अङ्गहारs. २ V. कारणानि ३. V. -समादुक्तो. ४. V. नृत्यकरणे: ५. V.C. नृपमातृका. ६. B.-खण्डकाः स्मृताः ७ C. संघात. V. संज्ञाघात. ८. A. चाष्ट— ९. A. लेनं. B. द्वैलेनं. १०. A. तुरुवृत्तं. ११. A. निकुण्ठकम्. C.V. निकुण्डकम्. १२. C. लाताक्ष्यास्य. १३. B.C.V. -सञ्चितम्.

[1]मत्तल्ली त्वर्धमत्तल्ली स्याद्रेचक[2]निकुट्टकम् ।
[3]पादविद्धं तडिद्भ्रान्तं वलितं [4]घूर्णितं तथा ॥ ४४ ॥

ललितं दण्डपक्षं च भुजङ्गत्रस्तरेचितम् ।
नूपुरं रेचितं चैव भ्रमरं चतुरं तथा ॥ ४५ ॥

भुजङ्गाञ्चितमन्यत्स्याच्छिन्नं वृश्चिकरेचितम् ।
[5]लतावृश्चिकमन्यत्स्याच्छिन्नं वृश्चिकरेचितम् ॥ ४६ ॥

वृश्चिकं व्यंसितं चैव सूचीविद्धकमेव च ।
ललाटतिलकं चैव [6]कुञ्चितं चक्रमण्डलम् ॥ ४७ ॥

[7]ततो ( ? उरो )मण्डलमाक्षिप्तं लता[†]लसितमार्गलम् ।
विक्षिप्तं भ्रमितं चैव विलासं वानरप्लुतम् ॥ ४८ ॥

परिवृत्तं निवृत्तं च पार्श्वाक्रान्तं निकुञ्चितम् ।
अतिक्रान्तमवक्रान्तं [8]दोलापादं विवर्तितम् ॥ ४९ ॥

नागप्रक्रीडितं चैव [9]विप्लुतं गरुडप्लुतम् ।
गण्डसूची परिक्षिप्तं पार्श्वजानुकमेव च ॥ ५० ॥

[10]गृद्धावलीनकं लीनं विष्णुक्रान्तमजप्लुतम् ।
आक्रान्तं मण्डितं चैव [11]मयूरललितं नतम् ॥ ५१ ॥

सर्पितं [12]दोलपादं च हरिणप्लुतमेव च ।
[13]प्रेङ्खोलितं नितम्बं च स्खलितं [14]करिहस्तकम् ॥ ५२ ॥

[15]प्रसर्पिततलं चैव सिंहविक्रीडितं तथा ।
वृषभक्रीडितं चैव गङ्गावतरणं तथा ॥ ५३ ॥

अष्टोत्तरशतं [16]ह्येतत्करणानां प्रकीर्तितम् ।
*सुकुमारं तथाविद्धं वृ( ? नृ )त्तं द्विविधमुच्यते ॥ ५४ ॥

---

१. A. मातुल्ली त्वर्धमतुल्ली. V.B. मतल्ली त्वधर्म मतल्ली. २. V. निकुण्टकम्. A. निकुटुकम्. ३. V. पारविद्धं C. पादं विद्धं ४. V. चूर्णितं. ५. तालवृश्चिक–. ६. B.V. कुण्डलं. ७. B.V. तरोर्मण्डल– † N.S. तलविलासितम्. ८. V. दोलापादविवर्जितम्. ९. B. विष्णुत्वं. १०. B.C.V. गृहावलीनकं. ११. V.A.B. मयूरलसितं. १२. V.C. चोलपादं. १३. V. प्रेङ्खालित. १४. V. परिहस्तकम्. १५. V. असर्पिततलं. १६. V. दैव करणानां. * cf N.S. Ad. 13, Ślo. 53.

[1]उद्धतं पुरुषप्रायं स्त्रीप्रायं सुकुमारकम् ।
देवचिह्नकृताकारा पिण्डी भवति पार्थिव ॥ ५५ ॥

भारती सात्त्वती चैव[2] कैशिक्यारभटी तथा ।
[3]चतस्रो वृत्तयः प्रोक्ता वाक्प्रधाना तु भारती ॥ ५६ ॥

तथा वीररसप्राया विज्ञेया सात्त्वती नृप ।
तथा रौद्रप्रचारा च भवत्यारभटी सदा ॥ ५७ ॥

शृङ्गारहास्यबहुला तथा भवति [4]कैशिकी ।
आवन्ती[5]दाक्षिणात्या च तथा [6]चैवात्र मागधी ॥ ५८ ॥

[7]पञ्चालमध्यमा चेति प्रवृत्तिस्तु[8] चतुर्विधा ।
वेशभाषानुकरणं तथाचारप्रवर्तनम् ॥ ५९ ॥

प्रवृत्तिरिति [9]विख्याता वृत्तीनामा[10]श्रयास्तु ताः ।
नाट्यलोकाश्रया [11]धर्मिधर्माश्च द्विविधा मताः ॥ ६० ॥

सिद्धिश्च द्विविधा नाट्ये [12]दैविकी मानुषी तथा ।
व्यायामान्मानुषी [13]तत्र दैवी देवप्रसादजा ॥ ६१ ॥

रसेन भावेन समन्वितं च
तालानुगं काव्यरसानुगं च ।
गीतानुगं नृत्तमुशन्ति धन्यं
सुखप्रदं धर्मविवर्धनं च ॥ ६२ ॥

**इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे सामान्याध्यायः ॥ २० ॥**

---

१. B.C.V. उद्धूतं. २. V. कौशिक्यारभटी. ३. A. चतुस्रो. ४. V. कौशिकी. ५. A. दक्षिणात्या. ६. C. चैवोत्र. ७. V.B. पञ्चाली. ८. V. वृत्तिः सा तु. ९. A. व्याख्याता. १०. A.C. श्रयस्तुताः. B.—श्रयस्ततः. ११. A.B.C. धर्मी धर्मी च. १२. A. दैवकी. १३. C. तत्र दैवप्रसादजा.

# एकविंशोऽध्यायः ।

मार्कण्डेय :— समाकुञ्चितकं चैव प्रसारित[1]विवर्तिते ।
उद्वाहितं नतं षोढा शय्यास्थानानि निर्दिशेत् ॥ १ ॥

उत्तानितं मुखं चैव [2]स्रस्तमुक्तकरं तथा ।
समं *नाम प्रसुप्तस्य स्थानकं तु विधीयते ॥ २ ॥

सर्वैराकुञ्चितैरङ्गैः शय्याविद्धे च जानुनी ।
स्थानमाकुञ्चितं नाम [3]शीतार्तानां प्रयोजयेत् ॥ ३ ॥

एकं भुजं [4]समाधाय संप्रसारितजानुकम् ।
स्थानं प्रसारितं नाम सुखसुप्तस्य कारयेत् ॥ ४ ॥

अधोमुखे स्थितं चैव विवर्तितमिति स्मृतम् ।
शस्त्रक्षते मृते क्षिप्तं(? प्ते) मत्तोन्मत्तेषु तद्भवेत् ॥ ५ ॥

अंसोपरि शिरः कृत्वा [5]कूर्परं क्षोभमेव च ।
उद्वाहितं तु विज्ञेयं [6]लीलासंवेशने [7]प्रभोः ॥ ६ ॥

तस्या यदेतत्प्रसृतं तु ज े स्रस्तौ करौ तं नतमुद्दिशन्ति ।
आलस्यखेदश्रममोक्षणेषु कार्यस्तु तस्याभिनयप्रयोगः ॥ ७ ॥

इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे शय्यासनस्थानं नाम ॥ २१ ॥

---

१. A.B. विवर्तने. २. V. सास्तमुक्तकरं. * A.B.C.V. वाम. N.S. –नाम. ३. V.C. गीतान्तानां. N.S. शीतानां तु. ४. A.B. समादाय. ५. B.C.V. कुर्पुरक्षो— ६. V. लीलायाः शंसने. ७. V. प्रभो.

## द्वाविंशोऽध्यायः ।

मार्कण्डेय :—

स्वस्थ(? स्थं)[1]मन्दालसं क्रा(? क्रा)न्तं [2]स्वस्था(? स्रस्ता)लसमथापि च ।
विष्कम्भितंत(? तमु)त्कटुकं [3]मुक्तजानु तथा समम् ॥ १ ॥

जानुगतं विमुक्तं च स्थानकान्यु[4]पवेशने ।
विष्कम्भिताञ्चितौ पादौ वक्षः किञ्चित्समुन्नतम् ॥ २ ॥

हस्तौ कट्यूरुविन्यस्तौ स्वस्थौ स्वस्थोपवेशने ।
एकः प्रसारितः पादस्त्वन्यश्चैवासनाश्रितः ॥ ३ ॥

पार्श्वे नतं तथा कार्यं स्थानं मन्दालसं तु [5]तत् ।
चिन्तायां तु तथौत्सुक्ये निर्वेदे विरहे तथा ॥ ४ ॥

विषादेषु सदादेयं स्थानमेतत्प्रयोक्तृभिः ।
चिबुकापाश्रितौ हस्तौ [6]बाहुशीर्षाञ्चितं शिरः ॥ ५ ॥

सर्वा(? बाष्पा)भिनयनं चैव विज्ञेयं [7]क्रान्तमासनम् ।
बलिना निगृहीतस्य रिपुणा खण्डितस्य च ॥ ६ ॥

शोकग्लानस्य च तथा स्थानमेतद्विनिर्दिशेत् ।
स्रहौ(? स्रस्तौ)हस्तौ विमुक्तं च शरीरमलसं तथा ॥ ७ ॥

खेदालसं तथा चक्षुर्यत्र स्वस्था(? स्रस्ता)लसं तु तत् ।
श्रमे ग्लानौ [8]मदे चैव मूर्च्छायां व्यथिते तथा ॥ ८ ॥

मोहे प्राणभये चैव स्थानमेतत्प्रयोजयेत् ।
विष्कम्भिताञ्चितौ पादौ [9]ऊरू [10]विष्कम्भितौ भुजौ ॥ ९ ॥

निमीलितं तथा चक्षुः स्थाने [11]विष्कम्भनामनि ।
स्ववक्षोगतया दृष्ट्या योगे ध्याने विधीयते ॥ १० ॥

---

१. B.C.V. –मन्दालस. २. A.B. प्रस्थाल– ३. A.B. मुकुटानु.– ४. B. न्युपवेशनम्.
५. A. तम् ६. V. बाहुशीर्षाचित्तं. ७. C.V. क्रान्तमानसम्. V. क्रान्तनायकम्. ८. A. मध्ये.
९. B.C.V. कुरु. १०. V. throughout विष्कुम्भितौ instead of विष्कम्भितौ.
११. V. विष्कुम्भिता सति. C. विष्कम्भनामपि.

स्वभावसंस्थया चैव सभ्यानामुपवेशने ।
समौ पादौ समाधाय समं [1]यदुपदिश्यते ॥ ११ ॥

अस्पृष्टभूतलं चैव ज्ञेयमुत्कटकासनम् ।
[2]पित्र्ये समाधौ जप्ये च होमादिकरणेषु च ॥ १२ ॥

एतत्स्थानं विधातव्यं यथागमनकर्मणि ।
एकं [3]जानु यदास्यैव महीपृष्ठे विधीयते ॥ १३ ॥

ज्ञातव्यं भूमिपश्रेष्ठ [4]मुक्तजानुकमासनम् ।
एतत्कृतव्यलीकानां प्रियाणां [5]सम्प्रसादने ॥ १४ ॥

[6]मज्जने कुटिलानां (? मार्जने कुट्टिमानां) च तथा भूम्यनुलेपने ।
महीगताभ्यां जानुभ्यां स्थानं [7]जानुगतं भवेत् ॥ १५ ॥

राज्ञां विज्ञापने कार्यं सुराणां चैव पूजने ।
भूमौ यदूर्ध्वपतनं [8]तद्विमुक्तमिति स्मृतम् ॥ १६ ॥

प्रहारतः प्र(? रे तत्प्र)योक्तव्यमावेशे(? गे) क्रन्दने तथा ।
भद्रासनं तु देवानां राज्ञां सिंहासनं भवेत् ॥ १७ ॥

रूप्यासनं तु दातव्यं सांवत्सरपुरोधसोः ।
[9]वेत्रासनममात्यानां मन्त्रिणां तु तथा भवेत् ॥ १८ ॥

[10]मण्डासनं तु दातव्यं सेनानीयुवराजयोः ।
मुनीनां च द्विजानां च तथा सब्रह्मचारिणाम् ॥ १९ ॥

बृसी देया महाराज ये चान्ये नियमे स्थिताः ।
स्थानीयाः पुरुषा ये च मुख्याः पौराश्च ये तथा ॥ २० ॥

[11]वणिजश्च तथा मुख्यास्तेषां [12]देया तु पीठिका ।
वेशस्त्रीणां कुमाराणां तथा भृत्यजनस्य च ॥ २१ ॥

---

१. A. यदुपश्यशयते. २. A.B. पैत्र्ये. ३. V. जानु यदास्ये च. ४. A. मुकुटानुसमासनम्. B. मुक्तजानुकसमानम्. C. मुक्तजानुसमासनम्. ५. A. सम्प्रसाधने. ६. A. मज कुटिलनानां च. B. सज्जकुटिलानां च. ७. A. जानुगतो. ८. B. तद्विमुक्तोमिति. ९. A.B. वेत्रासनं सुमान्यानां. १०. V. मन्दासनं. ११. A. वनिजाश्च. १२. B.C.V. भवति पीठिका.

मसूरकं तु दातव्यं शेषे भूम्यासनं भवेत् ।
सिंहासनं विना [1]राजन् गृहे [2]स्वच्छन्दमासनम् ॥ २२ ॥

नैकासनं स्याद् गुरुणा तु [3]राजन् गजे रथे वापि शिलातले च ।
नैकासने स्याद् गुरुणा तु [4]दोषोऽथवातिदीर्घे फलके च नित्यम् ॥ २३ ॥

इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे आसीका( ? सना )ध्यायो नाम ॥ २२ ॥

---

१. A. राजं गृहे. २. V.C. स्वच्छमानसम्. ३. A. राजन्गजे रणे नापि. B. राजन् रथे गजे नापि. ४. A.B.C. दोषेऽथ.

## त्रयोविंशोऽध्यायः ।

मार्कण्डेय :—

वैष्णवं समपादं च वैशाखं मण्डलं तथा ।
प्रत्यालीढमथालीढं षट् पुंसां स्थानकानि तु ॥ १ ॥

स्वभावसंश्रितः पादः त्र्यश्रः पक्षगतोऽपरः ।
किञ्चिदञ्चितजङ्घश्च वैष्णवं स्थानमुच्यते ॥ २ ॥

स्थानेनानेन कर्तव्यस्संलापस्तु स्वभावतः ।
समपादं तु विज्ञेयं समैस्तालान्तरैः पदैः ॥ ३ ॥

[1]स्वभा[व]सौष्ठवोपेतं रुद्रब्रह्मादिदैवतम् ।
अनेन कार्यं स्थानेन *विप्रमण्ड(? ङ्ग)लकारणम् ॥ ४ ॥

[2]वल्गनं पक्षिणां चैव +वरकौतुकमेव च ।
स्वस्थानं (? नां) स्यन्दनस्थानां विमानस्थायिनामपि ॥ ५ ॥

लिङ्गस्थानां व्रतस्थानां स्थानमेतत्प्रयोजयेत् ।
द्वौ तालावर्धतालं च पादयोरन्तरं भवेत् ॥ ६ ॥

अञ्चिते यत्र जङ्घे तु [3]पादौ पक्षस्थितौ तथा ।
वैशाखं नाम तत्स्थानं स्कन्दश्चैवात्र [4]दैवतम् ॥ ७ ॥

स्थानेनानेन कर्तव्यं अश्वानां वाहनं बुधैः ।
व्यायामो निर्गमश्चैव प्रवेशो धनुषस्तथा ॥ ८ ॥

अतः परं मण्डलं स्यात् त्रींस्ता(? त्रिता)लान्तरमेव च ।
कटी जानुसमा यत्र पादौ पक्षस्थितौ यथा ॥ ९ ॥

धनुर्वज्रप्रहरणं मण्डलेन प्रयोजयेत् ।
वाहनं कुञ्जराणां तु नृत्ते चोद्वहनक्रिया ॥ १० ॥

---

१. A. स्वभावं सौष्ठवोपेतं रुद्र– V. स्वस्वभासौष्ठवोपेतं. B.C. स्वभासौष्ठवोपेतं च. *N. S. विप्रमङ्गलकारणम्. +N. S. परं, २. A. B. V. बलानां, ३. V. पदौ, ४. V. दैवता,

[1]अस्यैव दक्षिणं पादं पञ्चतालं प्रसारयेत् ।
आलीढं नाम तत्स्थानं रुद्रकाल्यत्र दैवतम् ॥ ११ ॥

अनेन कार्या स्थानेन सर्वत्रोद्धरणक्रिया ।
रौद्रपाद[2]प्रचारस्तु सङ्ग्रामस्य निरूपणम् ॥ १२ ॥

[3]सिंहाद्यभिनयं चैव [4]शत्रुसंधानमेव च ।
खड्गयुद्धे नियुद्धे च मण्डलभ्रमणे तथा ॥ १३ ॥

उत्तरोत्तरसंजल्पे रोषामर्षसमुद्भवे ।
मल्लानां चैव संस्फोटे शत्रूणां च[5] निरूपणे ॥ १४ ॥

तथाभिद्रवणं चैव [6]शस्त्राणां च विमोक्षणम् ।
अञ्चितं दक्षिणं कृत्वा वामं पादं प्रसार्य च[7] ॥ १५ ॥

आलीढं [8]परिवत तु प्रत्यालीढमिति स्मृतम् ।
प्रत्यालीढं तु विज्ञेयं [9]स्थानं दानवदैवतम् ॥ १६ ॥

आलीढेनोदितं [10]शस्त्रं [11]प्रत्यालीढेन मोचयेत् ।
अतः परं प्रवक्ष्यामि स्त्रीणां स्थानत्रयं नृप ॥ १७ ॥

आयतं [12]चावहित्थं च हयक्रान्तमथापि च ।
[13]एकः स्वभावो यत्रैव पादः विरचितः समः ॥ १८ ॥

[14]तालमात्रान्तरन्यस्तः त्र्यक्षः(? श्रः) पक्षगतोऽपरः ।
प्रसन्नमाननमुरः समं [15]यत्र समुन्नतम् ॥ १९ ॥

लतानितम्बगौ हस्तौ स्थानं ज्ञेयं तदायतम् ।
रङ्गावतरणे ह्येतत्तथा पुष्पाञ्जलौ भवेत् ॥ २० ॥

---

१. B. अथैव. A.V. आदौ च. २. A. –प्रचारश्च. ३. A.B. सिंहाद्याभिनयं. ४. B. C.V. शत्रुं. ५. A. निरूपिणे. ६. V.B. शास्त्राणां. ७. C. तु. ८. V.C. परिवर्तितं-ते. ९. V. स्थानं च नवदैवतम्. १०. V. शस्तं. ११. V. प्रत्यालीढं. १२. V. वावहित्थं. १३. V. एकश्चानुयुतो यत्र पादौ A.B. एकः स्वभावो यत्रैव पादौ. १४. A. तालमाभ्यन्तर–न्यस्तः. B. तालमभ्रान्तरन्यस्तः. १५. A.C. त्रय.

[1]पादो विरचितस्त्र्यश्रस्तदन्योऽपसृतः समः ।
[2]पादस्तलान्तरन्यस्त[3]स्त्रिकमीषत्समुन्नतम् ॥ २१ ॥

अवहित्थं समाख्यातं [4]स्थानमेतन्नरोत्तम ।
विलासलीलालावण्यशृङ्गारात्मनिरूपणे ॥ २२ ॥

स्थानमेतत्प्रयोक्तव्यं वरमार्गावलोकने ।
[5]समः स्थितो यत्र पादस्तदन्यः पाद[6]स्तुलाञ्चितः ॥ २३ ॥

तालैरनियतैरेष स्थानको हि विधीयते ।
सूचिविद्धमविद्धं वा तदश्वक्रान्तमिष्यते ॥ २४ ॥

[7]शाखावलम्बे स्तबकोच्चये च
विघूर्णनेत्रासनसम्प्रलापे ।
स्वभावसंलापविधौ च कार्यं
स्थानं त्विदं यादववंशमुख्य ॥ २५ ॥

इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे उदित्थ[ ?पुंस्त्री ]स्थानकं नाम ॥ २३ ॥

---

१. A.B.C. पादौ  २. V. पादास्तलान्तर. C. पादास्तालान्तर. A. पादस्तुलान्तर. ३. A. B.C.-स्त्रिकमेषत्.- ४. B. स्थानमेनं नरोत्तम. ५. C.V. समस्थितो. ६. -V. पादस्तलाचितः B.C. पादस्तलाञ्चितः ७. B.C.V. शाखावलम्ब–

## चतुर्विंशोऽध्यायः ।

मार्कण्डेय :—

शिरसः प्रथमं कर्म गदतो मे [1]निबोध तत् ।
[2]स्वभावादृजुनोर्ध्वापक्षेपेणाकम्पितं सकृत् ॥ १ ॥

संज्ञोपदेशपृच्छासु स्वभावाभाषणे भवेत् ।
बहुशः *कथि(? म्पि)तं यच्च तदा कम्पितमिष्यते ॥ २ ॥

रोषतर्जनतर्केषु [3]प्रतिज्ञासु च दृश्यते ।
शिरसो रेचनं यत्तु शनैस्त[4]द्धुतमिष्यते ॥ ३ ॥

विषादे विस्मये चैव प्रतिषेधे तदिष्यते ।
विधुतं नामतः प्रोक्तं तथा पार्श्वविकम्पनैः ॥ ४ ॥

शीतग्रस्ते [5]जरार्ते च मत्ते च ज्वरिते भवेत् ।
[6]मण्डलभ्रमणाच्चैव भवेत्तु [7]परिगर्हि(? वाहि)तम् ॥ ५ ॥

साधने विस्मये हर्षे लीलायां च तदिष्यते ।
सकृदुद्वाहितं चोर्ध्वं तदुद्वाहितमिष्यते ॥ ६ ॥

उच्छ्राये दर्शने गर्वे तत्तथोर्ध्वे [8]निरीक्षणे ।
आक्षिप्तं सकृदेव स्यादर्धत्र×(? वधू)तमधोगतम् ॥ ७ ॥

[9]संदेशालापसंज्ञासु तत्तथावाहनादिषु ।
किञ्चित्पार्श्वनतग्रीवं शिरो [10]विज्ञेयमञ्चितम् ॥ ८ ॥

मूर्च्छिते व्यथिते चैव सचिन्ते दुःखिते भवेत् ।
उत्क्षिप्त[11]बाहुशिखरं तथाञ्चितशिरोधरम् ॥ ९ ॥

*निकुञ्चितं च तद्गर्वे विलासे च प्रयोजयेत् ।
परावृत्तं(? त्ते) परावृत्तं कार्यं पृष्ठनिरीक्षणे ॥ १० ॥

---

१. A.B.N.S. निबोधत. २. A.B.C. स्वभावाऋजुनो– * A.B.C.V. कथितं. N.S. कम्पितं. ३. A. प्रत्यज्ञासु. ४. V.A.B. –स्तद्युत– ५. V. ज्वरार्ते. ६. V. मण्डलारम्भणं. ७. N.S: परिवाहितम्. A.B.C.V. परिगर्हितम्. ८. A. निरीक्षिणे. × N.S. अवधूत. ९. V. सन्देहालाप– १०. B. विज्ञेयसंचितम्. ११. C. –बहु– * N.S. निहञ्चितं.

उत्क्षिप्तं चापि [1]विज्ञेयमुन्मुखावस्थितं शिरः ।
[2]प्रांशुदिव्यार्थयोगे च कार्यं तच्च प्रयोक्तृभिः ॥ ११ ॥

अधोमुखस्थितं चापि बुधाः प्राहुरधोगतम् ।
लज्जायां च [3]प्रणामे च दुःखे तच्च प्रयोजयेत् ॥ १२ ॥

सर्वतो लोलनाच्चैव परिलोलितमुच्यते ।
व्याधिते मूर्च्छिते मत्ते भवेत्तु [4]परिलोलितम् ॥ १३ ॥

एतत्तु शिरसः कर्म [5] कथितं [6]तन्नराधिप ।
अञ्चितं रेचितं मुक्तं विवृत्तं चतुरं तथा ॥ १४ ॥

प्रसारितं तथा स्तब्धं ग्रीवाकर्म( ? र्मा )णि निर्दिशेत् ।
अञ्चितं किञ्चिदेकांशं लोलनाद्रेचितं तु तत् ॥ १५ ॥

रेचितं भ्रमणान्मुक्तं विवृत्तं वलितं च तत् ।
मधुरं चतुरं प्रोक्तमायतं स्यात्प्रसारितम् ॥ १६ ॥

स्तब्धं स्तब्धंतथा( ? स्तब्धतया ) प्रोक्तं शिरः [7]कर्मानुगामि च ।
अञ्चितं स्याद्विलसादौ रेचितं मण्डलेक्षणे ॥ १७ ॥

मुक्तं मूर्च्छादियोगेषु विवृत्तं ललितादिषु ।
सौम्यभावे तु चतुरं हृष्टौ कार्यं प्रसारितम् ॥ १८ ॥

स्तब्धं [8]शीते तथा व्याधौ अविकारी स्वभावतः ।
विबु( ? रु )द्धं विनिवृत्तं च निर्भुग्नं भुग्नमेव च ॥ १९ ॥

विवृत्तं च तथैवर्जु [9]कर्माण्य( ? ण्या )स्यवि( ? स्य ) निर्दिशेत् ।
व्यावृत्तं स्याद्विबु [10]( ? रु )द्धाख्यं निवृत्तं पिहितं भवेत् ॥ २० ॥

[11]अवाङ्मुखमवाभुग्नं निर्भुग्नं चोर्ध्वगं तु तत् ।
भुग्नं स्यादानतं किञ्चिन्निवृत्तं विवृतं( ? त्तं )भवेत् ॥ २१ ॥

---

१. A. विज्ञेयं चोन्मुखा– २. V. आशु ३. V.A. प्रमाणे. ४. C. परिलोहित. ५. A.B. कथिते. ६. V.C. ते नराधिप. ७. A. कर्मनुगानि च. ८. V. शीतेऽथवा व्याधौ. ९. V. कर्मणस्य. १०. A. –बुद्धार्द्ध. ११. A.B. अवात्माखमवा.

ऋजु स्वभावसंस्थं च तयोः (? तेषां) कर्माणि [1]चक्षते ।
[2]विरुद्धवारणे कार्यं मैवमित्येवमादिषु ॥ २२ ॥

विनिवृत्तमसूयायामीर्ष्याकोपकृतेषु च ।
विभु (? निर्भु)ग्नं चापि विज्ञेयं गम्भीरालोकनादिषु ॥ २३ ॥

भुग्नं तु लज्जिते योज्यं यतीनां तु स्वभावतः ।
[3]विवृत्तं चापि कर्तव्यं हास्यशोकभयादिषु ॥ २४ ॥

ऋजु स्वभावसंस्थाने कर्तव्यं यदुनन्दन ।
आभुग्नमथ निर्भुग्नं तथा चैव[4] प्रकम्पितम् ॥ २५ ॥

उद्वाहितं समं चैव [5]पञ्चधोरः प्रकीर्तितम् ।
धार्यते यच्च निर्भुग्नं(? म्नोर्ध्वं) तदाभुग्नं प्रकीर्तितम् ॥ २६ ॥

शस्त्रक्षते विघाते च हृद्रोगे च तदिष्यते ।
स्तब्धं च निम्नपृष्ठं च निर्भुग्नं नाम तत्स्मृतम् ॥ २७ ॥

स्तम्भे सविस्मये माने विषादे च तथेष्यते ।
[6]उरसस्तूर्ध्वविक्षेपः प्रकम्पितमिहोच्यते ॥ २८ ॥

हसिते [7]रुदिते कार्यं श्रमे व्याधिभये तथा ।
उद्वाहितं [8]यदूर्ध्वं तु तदुद्वाहितमुच्यते ॥ २९ ॥

ऊर्ध्वं निगमि(? श्वसि)ते कार्यं जृम्भितेषु [9]प्रयोगतः ।
चतुरस्रं समं नाम विज्ञेयं सौष्ठवेषु तत् ॥ ३० ॥

समुन्नतं नतं चैव प्रसारितविवर्तिते ।
तथाप[10]सृतमेवं हि पार्श्वयोः कर्म पञ्चधा ॥ ३१ ॥

कटिपार्श्वभुजांसान्तै(? सैस्तै)रुन्नतैः [11]स्यात्समुन्नतम् ।
कटी यत्र[12] तु निर्भुग्ना पार्श्वं तद्विनतं भवेत् ॥ ३२ ॥

---

१. A.B.C. वक्ष्यते. २. A. विरुद्धं वारुणे कार्यं सैव. ३. V.A.B. निवृत्तं. ४. A.B. प्रकीर्तितम्. ५. V. पञ्चरोधः. ६. B. ऊरभस्तू- ७. A.C.V. रुचिते. ८. A.B. तदूर्ध्वं. ९. A.B. तु योगतः C. प्रत्ययोगतः. १०. A. –पसृतमेवैहि. ११. V. स्यात्स सुन्नतम्. १२. V.C.. यत्र सु निर्भुग्ना.

प्रसारणादुभयतः पार्श्वयोः स्यात्प्रसारितम् ।
परिवर्तनात्त्रिकस्यापि विवर्तितमिहे[1]ष्यते ॥ ३३ ॥

अस्य चैवो(? वा)पगमनाद्धवेदपसृतं पुनः ।
नतं त्वपसृते कार्यं चोन्नतं[2]तूपसर्पिते ॥ ३४ ॥

प्रसारितं प्रहर्षादौ त्रासे चापसृते(? तं) पुनः ।
विवर्तितं विवर्ते च कारणं पार्श्वमुच्यते ॥ ३५ ॥

क्षामं निम्नं च पूर्णं च संप्रोक्तमुदरं त्रिधा ।
क्षामं तु हसिते कार्यं तथा चैव विजृम्भिते ॥ ३६ ॥

व्याधिते तपसि श्रान्ते क्षुधार्ते निम्नमेव च ।
पूर्णं निःश्वसिते चैव [3]ह्यारोग्ये ललितेषु च ॥ ३७ ॥

प्रकम्पिता [4]च विच्छिन्ना निवृत्ता रेचिता तथा ।
उद्वा[5]हिता चैव कटिर्नृत्ते पञ्चविधा स्मृता ॥ ३८ ॥

तिर्यग्गतागता क्षिप्रं विज्ञेया व(? वि)प्रकम्पिता ।
मध्य[6]स्य वलनाच्चैव छिन्ना संपरिकीर्तिता ॥ ३९ ॥

पराङ्मुखस्याभिमुखी निवृत्ता परिकीर्तिता ।
[7]सर्वतो भ्रमणाच्चैव रेचितेत्यभिधीयते ॥ ४० ॥

+ निश्चितोद्वा(? तम्बोद्व)हनाच्चैव तथैवोद्वाहिता मता ।
नीचवामन[8]कुब्जानां गतौ कार्या प्रकम्पिता ॥ ४१ ॥

व्यायामे त्वथ संप्राप्ते व्यावृत्तप्रेक्षितेषु च ।
छिन्ना कार्या कटिस्तज्ज्ञैर्निवृत्ता वर्तितेषु च ॥ ४२ ॥

रेचिता रेचिते कार्या अन्या [9]लीलागतं स्त्रियाः ।
कम्पनं वलनं चैव स्तम्भनोद्वर्तने तथा ॥ ४३ ॥

---

१. C. –मिहोष्यते. २. B. रूपसर्पिते. ३. A.B.C. ह्यारोग्यं V. ललितं तथा. ४. V. च चिछन्ना च. ५. A.B. उद्वाहिका. ६. B.C.V. मध्यस्थ– ७. A.B. सर्वत्रभ्रमणाच्चैव. + N.S. नितम्बोद्वहना– ८. A.B. कुब्जाभ्यां. ९. V. लीलागतं त्रिधा. C. लीलागतं स्त्रिधा.

विवर्तनं च पञ्चैव ऊर्वोः [१]कर्माणि कारयेत् ।
नमनोन्नमने पारन्त्यो×(? ष्ण्यों)र्महीपृष्ठेद्धु(? द्धु)ते यदा ॥ ४४ ॥

[२]स्थित्वा पादतलाग्रेण [३]कम्पितं तु तदिष्यते ।
गच्छेदभ्यन्तरं जानु शनैर्यद्वलितं तु तत् ॥ ४५ ॥

स्तम्भनं चापि विज्ञेयं अपवृत्तौ† [४]क्रियाकुलम् ।
बलिताविद्धभावं स्यादुद्वर्तनमथापि च ॥ ४६ ॥

पार्ष्णिरभ्यन्तरं गच्छेद्यत्र तत्र नि(? वि)वर्तितम् ।
गतिष्वधमपात्राणां कम्पितं संप्रयोजयेत् ॥ ४७ ॥

वलनं चैव कर्तव्यं स्त्रीणां स्वैरपरिक्रमे ।
[५]भीमोर्ध(? ह्रीसाध्व)सविषादेषु स्तम्भनं संप्रयोजयेत् ॥ ४८ ॥

व्यायामे ताण्डवे चैव कार्यमुद्वर्तनं तथा ।
[६]विवर्तनं च कर्तव्यं [७]संभ्रमादिपरिक्रमे ॥ ४९ ॥

आवर्तितं नतं [८]क्षिप्तं चोद्वाहितमथापि च ।
परिवृत्तं तथा पञ्च जङ्घाकर्माणि निर्दिशेत् ॥ ५० ॥

आवर्तितं तु [९]व्यत्यासाद्वामदक्षिणजङ्घयोः ।
[१०]जान्वोराकुञ्चनाच्चैव नतं ज्ञेयं प्रयोक्तृभिः ॥ ५१ ॥

विक्षेपाच्चैव जङ्घायाः क्षिप्तमित्यभिधीयते ।
उद्वाहितं तु विज्ञेयमूरूद्वाहनकर्मणा ॥ ५२ ॥

प्रतीपनयनं यत्र परिवृत्तं तदिष्यते ।
आवर्तनं प्रयोक्तव्यं विदूषकपरिक्रमे ॥ ५३ ॥

नतं चापि हि कर्तव्यं स्थानासनगतादिषु ।
क्षिप्तं व्यायामयोगेषु [११]ताण्डवेषु प्रयोजयेत् ॥ ५४ ॥

---

१. V. कर्माणि निर्दिशेत्. × N.S. पार्ष्णी: २. V.B. स्थिता. ३. V.C. कम्पितं तत्तदिष्यते. † N.S. अपविद्ध (G.O.S.) ४. B. कुलक्रियाम्. N.S. साध्वसे च विषादे च. ५. A. भीमोर्ध्वैविषमार्ध्वेषु B. भीमोर्ध्वमविषार्धेषु. ६. A.B. निवर्तनं. ७. V. संक्रमादि– ८. C. क्षिप्तमुद्वाहित– ९. A.B. विन्यासा– १०. A. जान्वनः कुञ्चनाश्चैव, C. जानुर कुञ्चनाश्चैव. ११. C. ताण्डवे च.

तथा चोद्वाहितं कार्यमाविद्धगमनादिषु ।
ताण्डवादौ प्रयोक्तव्यं परिवृत्तं प्रयोक्तृभिः ॥ ५५ ॥

उद्घाटितसमश्चैव [1]पार्ष्णिरेचित[2]सञ्चरः (? पादो रेचितसंज्ञितः)।
अञ्चितः कुञ्चितश्चैव पादः पञ्चविधः स्मृतः ॥ ५६ ॥

स्थित्वा पादतलाग्रेण पार्ष्णिर्भूमौ [3]निपात्यते ।
यस्य पादस्य करणात्स [4]उद्घाटित उच्यते ॥ ५७ ॥

[5]कार्योऽनुरक्तकरणे प्रचारे ललिते तथा ।
स्वभावरचिता भूमौ समस्थानः समः स्मृतः ॥ ५८ ॥

एष कार्यः सदा पादः स्वभावाभिनयाश्रयः ।
उत्क्षिप्ता तु भवेत्पार्ष्णिः पादेऽग्रतलसञ्चरे ॥ ५९ ॥

[6]निक्षिप्ते रेचिते भ्रान्ते पादे [7]यस्ताडिते भवेत् ।
ललितश्चायमेव स्यात्पादो रेचितसंज्ञितः ॥ ६० ॥

एष [8]प्रचारसञ्चारे [9]ललितोद्वर्तिते भवेत् ।
उत्क्षिप्ताग्रतलः पादः कथितस्तु तथाञ्चितः ॥ ६१ ॥

नानाभ्रमणकालेषु(? रके चैव) कार्यः पादोऽयमञ्चितः ।
पादः कुञ्चित[10]मध्योऽयं भवेत्कुञ्चितसंज्ञितः ॥ ६२ ॥

अतिक्रान्ताभिगमने पादमेतत्प्रयोजयेत् ।
एकपादप्रचारो यस्स चारीत्येव संज्ञितः ॥ ६३ ॥

द्विपादक्रमणं यत्र [11]करणं नाम तद्भवेत् ।
[12]करणानां समायोगः खण्ड इत्यभिधीयते ॥ ६४ ॥

द्वाभ्यां त्रिभिर्वा यदि वा चतुर्भि-
र्युक्तं भवेन्मण्डलमेव नाम्ना ।

---

१. B.C. drop पार्ष्णिरेचितसञ्चरः। There is a lacuna here in B. & C.
२. A. सञ्चरौ. ३. B. निपायते. ४. V. तद्घटित. ५. A. कार्योऽनरक्तचरणे. ६. V. निक्षिप्त-रेचिते. ७. V. यस्ताडितो. ८. V. प्रदानसञ्चारे. ९. V. ललितोद्वहितं. १०. B. मध्येयं. ११. A. कारणं. १२. A. कारणानां.

इत्यङ्गकर्माभिहितं ब्रवीमि
निबोध राजँस्त्वमुपाङ्गकर्म ॥ ६५ ॥

**इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे अङ्गकर्माध्यायो नाम ॥ २४ ॥**

## पञ्चविंशोऽध्यायः ।

मार्कण्डेय :— *[1]कान्ता भयानका हास्या करुणा ह्यद्भुता तथा ।
[2]रौद्रा वीरा च बीभत्सा विज्ञेया [? शान्ता च] रसदृष्टयः ॥ १ ॥

स्निग्धा हृष्टा च जिह्मा च क्रुद्धा [3]भीताथ लज्जिता ।
तृ (? दृ)प्ताथ विस्मिता सौम्या स्थायिभावेषु दृष्टयः ॥ २ ॥

मलिनाऽऽकेकरा श्रान्ता चाभितप्ताथ विप्लुता ।
विषण्णा शङ्किता चैव [4]त्रस्ता शोका निमीलिता ॥ ३ ॥

विभ्रान्ता कुञ्चिता शून्या [5]मुकुला तु वितर्किता ।
मदिरा ललिता ग्लाना इत्येवं [6]दृष्टिसंग्रहः ॥ ४ ॥

षट्त्रिंशद्दृष्टयो ह्येता नामतोऽभिहिता मया ।
सभ्रूक्षेपकटाक्षा तु कान्ता ज्ञेया [7]समन्मथा ॥ ५ ॥

उद्वृत्तपुटपक्ष्माग्रा चलत्तारा भयानका ।
किञ्चिदाकुञ्चितपुटा हास्य(? स्या) विभ्रान्त[8]तारिका ॥ ६ ॥

पतितोर्ध्वपुटा [9]सास्रा करुणा नष्टतारिका ।
किञ्चित्कुञ्चितपक्ष्माग्रा किञ्चिदुद्वृत्ततारिका ॥ ७ ॥

समा विकसिता चैव साद्भुता दृष्टिरिष्यते ।
[10]उद्वृत्ता कथिता रौद्रा भ्रुकुटिः कुटिला तथा ॥ ८ ॥

उत्फुल्लमध्या वीरा तु कथिता समतारिका ।
बीभत्सा कथिता दृष्टिर[11]पाङ्गा क्षिप्ततारिका ॥ ९ ॥

ध्यानादनिमिषा शान्ता [12]ह्यधोभागविचारिणी ।
व्याकोशमध्या मधुरा स्निग्धा [13]प्रहसिता मता ॥ १० ॥

---

* Ślo. 1 completely agrees with N.S. Chap. 8. ślo. 38, Nirṇaya Sāgar edition.

१. V. क्षान्ता. २. C. रौद्री. ३. V. भीता च लज्जिता. ४. A. रुक्षा त्रस्ता निमीलिता. ५. V. मुत्कला च. ६. A.B. दृष्टिसंग्रहाः. ७. V. समञ्जसी. ८. V. तारका instead of तारिका. ९. A. सामा. १०. V. उद्भूता. ११. A. दृष्टिरपाङ्गक्षिप्त- १२. V. ह्यधोमार्ग- १३. A.B. प्रहसिता शया. C. प्रहसितो मया.

उत्फुल्लमध्या प्रचला हृष्टा पर्यन्तवीक्षिणी ।
जिह्माधोगततारा च [1]गूढं मग्ना निरीक्षिणी ॥ ११ ॥

भ्रुकुटीकुटिला क्रुद्धा तथा निष्टब्धतारका ।
आकुञ्चितपुटा भीता रूक्षा व्यावृत्ततारका ॥ १२ ॥

[2]सत्त्वमुद्गिरतीवेष्टा (? दृष्टि) दृप्ता विकसिता भवेत् ।
समा विकसिता[3]पाङ्गा विस्मिता सा निगद्यते ॥ १३ ॥

समा सौम्या विनिर्दिष्टा तथा च समतारका ।
आकुञ्चिता लज्जिता स्यात्तथा निश्चल(? व्यावृत्त)तारका ॥ १४ ॥

पुटौ प्रस्फुरितौ यस्या मलिना सा [4]निगद्यते ।
आकुञ्चितपुटा या तु दृष्टिराकेकरा भवेत् ॥ १५ ॥

किञ्चिदुन्नमितपुरा [5]श्रां(? श्रां)ता सा तु विधीयते ।
अभितप्ता तथा मन्दा मन्दतारापुटा तु या ॥ १६ ॥

विप्लुता विप्लुता प्रोक्ता [6]स्त्रस्ता विस्फुरिता च या ।
किञ्चिन्निष्टब्धतारा तु विषण्णा दृष्टिरुच्यते ॥ १७ ॥

अनवस्थिततारा च शङ्किता परिकीर्तिता ।
रूक्षा ललिततारा[7]च त्रस्ताख्या समया भवेत् ॥ १८ ॥

उत्फुल्ला तु विशोकाख्या तथा च निमिषेक्षणा ।
अनवस्थितनेत्रा च विभ्रान्ता भ्रान्ततारका ॥ १९ ॥

कुञ्चिताकुञ्चिता दृष्टिः किञ्चिदञ्चिततारिका ।
[8]स्थिरतारापुटा शून्या संक्षुब्धा समदर्शना ॥ २० ॥

प्रस्पन्दमानपक्ष्माग्रा [9]मुकुला मुकुला भवेत् ।
उद्वृत्तपुटपक्ष्मा तु वितर्का स्तब्धतारिका ॥ २१ ॥

---

१. A. गूढंमाना B.V. गूढा मग्ना. २. A. सत्त्वमुद्दिरती. B.V. सत्त्वमद्गिरती. ३. A.B. –पंगा. ४. C. विधीयते. ५. V.C. शान्ता. ६. A.B. तन्वा प्रस्फुरिता तु या. C. तन्वा प्रस्फुरिता च या. ७. V. च प्रताख्या. C. तु त्रस्ताख्या. ८. V.B. स्थिततारापुटा. ९. V. मुकुला मुत्कला भवेत.

उत्फुल्ला मदिरा नाम तथा वलिततारिका ।
फुल्लितान्ता सलावण्या सस्मिता ललिता मता ॥ २२ ॥

प्रलूनपक्ष्मा सा [1]सास्रा ग्लानाख्या मुकुलीकृता ।
कान्ता दृष्टिः [2]कटाक्षे तु घातने तु भयानका ॥ २३ ॥

[3]हास्या हास्ये च विज्ञेया करुणा [4]करुणे रसे ।
त्वद्भुते चाद्भुता कार्या [5]रौद्रा रौद्रे विधीयते ॥ २४ ॥

वीरा वीरे च कर्तव्या बीभत्सा च जुगुप्सिते ।
शान्ता शान्ते तु निर्दिष्टा स्निग्धा स्निग्धावलोकने ॥ २५ ॥

हृष्टा हृष्टे तु कर्तव्या जिह्मा [6]कार्याभ्यसूयिते ।
क्रुद्धा क्रुद्धे तु निर्दिष्टा भीता भीते तथा भवेत् ॥ २६ ॥

लज्जिता लज्जिताख्या स्या[ त् ] [7]दृप्तोत्साहगतेषु सा ।
विस्मिता विस्मये दृष्टिः सौम्या सौम्यावलोकने ॥ २७ ॥

मलिना विरहे कार्या संभोगे केकरा भवेत् ।
श्रान्ता श्रान्तस्य कर्तव्या निर्वेदे त्वभितप्तका ॥ २८ ॥

विप्लुताख्या तु दैन्ये स्याद्विषादे तु विषण्णिका ।
शङ्किते शङ्किता चैव त्रस्ते त्रस्ता विधीयते ॥ २९ ॥

ज्ञाने [8]विशोका च तथा स्पर्शे कार्या निमीलिता ।
विभ्रान्ता विभ्रमे कार्या कुञ्चिता सूक्ष्मदर्शने ॥ ३० ॥

चिन्तान्वितस्य शून्या [9]स्यान्मुकुला घ्राणकर्मणि ।
वितर्के तु वितर्का [10]स्यात्समदे मदिरा भवेत् ॥ ३१ ॥

स्त्रीणां हेलासु ललिता ग्लाने ग्लाना विधीयते ।
उत्सेध(? न्मेष)श्च निमेषश्च प्रसारितविवर्तिते ॥ ३२ ॥

---

१. A.V. सास्रा. २. C. drops कटाक्षे तु. ३. C. हास्य हास्ये च. ४. C. करुणा रसे. ५. V. रौद्री रौद्रे. ६. A.C. कार्याभिसूचिते. B. कार्याभिसूचते. ७. A.–दृष्टयोत्साहगतेषु सा. C. ता. B. दृष्टोत्साहगतेषु सा. V. –दृष्टोत्साहगतेषु च. ८. A. विकोशा. ९. V.B. स्यान्मुत्कला. १०. V.– स्यान्मदे तु मदिरा.

आकुञ्चितं समं चैव स्फुरितं [1]वि(? पि)हितं ततः ।
ताडितं पुटयोः कर्म नवधा परिकीर्तितम् ॥ ३३ ॥

[2]समागमः पुटानां यः स निमेष इति स्मृतः ।
विश्लेषश्चैव यस्ताभ्यां स उन्मेषः प्रकीर्तितः ॥ ३४ ॥

प्रसारितौ पुटौ यत्र भवेत्तद्धि विवर्तितम् ।
आकुञ्चिताभ्यां ताभ्यां तु ज्ञेयमाकुञ्चितं बुधैः ॥ ३५ ॥

स्वभावपुटसंस्थानं समं तद्धि प्रकीर्तितम् ।
पुटौ प्रस्फुरितौ यत्र स्फुरितं तदिहोच्यते ॥ ३६ ॥

पुटावभि(? पि)हितौ यत्र पिहितं नाम तद्भवेत् ।
स्रस्तमूलौ पुटौ यत्र तद्धि ताडितमुच्यते ॥ ३७ ॥

गन्ध[3](? न्धे) स्पर्शे तथानिष्टे ज्ञेयमाकुञ्चितं [4]बुधैः ।
विस्मयार्थे तथा वीरे तच्च कार्यं प्रसाधि (? रि)तम् ॥ ३८ ॥

शृङ्गारे तु समं कार्यमभिघातेऽ[5]वताडितम् ।
स्त्रीणां प्रणयरोषेषु स्फुरितं [6]तदिहेष्यते ॥ ३९ ॥

[7]शीतवातोष्णवर्षेषु वि(? पि) हितं कार्यमेव तु ।
क्रोधे विवर्तितं कार्यं निमेषोन्मेषयोः [8]स्वकौ ॥ ४० ॥

वलनं भ्रमणं चैव चलनं संप्रणा(? वे)शनम् ।
[9]विवर्तनं पातनं च विज्ञेयं निष्क्रमं तथा ॥ ४१ ॥

उद्वर्तः प्राकृतं चैव [10]तारकाकर्म चेष्यते ।
मण्डलावर्तनं मध्ये पुटयोर्भ्रमणं स्मृतम् ॥ ४२ ॥

वलनं गमनं [11]तिर्यक्चलनाच्चलनं भवेत् ।
आभ्यन्तरत आकर्षः प्रवेशात्संप्रवेशनम् ॥ ४३ ॥

---

१. V.C. विहृतं. A.B. विह्वितं. २. A.C. समागमं. ३. A. गंधः स्पर्शे. ४. B. बुधः. ५. A.B.C. –वतारितम्. ६. B.C. तदिहोष्यते. ७. V. शीते. ८. V. समम्. ९. V. विवर्तितं पाटनं तु विज्ञेयं विस्मितं तथा. १०. A. तारकः कर्म. ११. V. तिर्यग्वलनाच्चलितं.

तथा चापाङ्गस[1]ञ्चारादुद्व(? द्विव)र्तितमुदाहृतम् ।
पातनं [2]स्रस्तभावश्च [3]निष्कामान्निष्क्रमं तथा ॥ ४४ ॥

उद्वर्तना(? नं)त्परावृत्तिः(? नं परावृत्तेः) प्राकृतं तु स्वभावतः ।
हास्ये तु वलनं कार्यं मदे भ्रमणमेव च ॥ ४५ ॥

वीरे रसे स्याच्चलनं बीभत्से संप्रवेशनम् ।
विवर्तितं तु शृङ्गारे पातनं करुणे रसे ॥ ४६ ॥

भयानके निष्क्रमणं वीरे चोद्ववर्तनं तथा ।
प्राकृतं [4]शेषभावेषु यथायोगं प्रयोजयेत् ॥ ४७ ॥

समं साचीकृतं च स्यादनुवृत्तमतः परम् ।
आलोकितं [5]चोल्लोकितमवलोकितमेव (? आलोकितोल्लोकिताव-
लोकितविलोकितं )च ॥ ४८ ॥

समतारं च सौम्यं च दृष्टिकर्म समं भवेत् ।
पक्ष्मान्तर्गततारं च साचीकृतमिहोच्यते ॥ ४९ ॥

रूपनिर्वर्तनायुक्तमनुवृत्तमिति स्मृतम् ।
सहसा दर्शनं यत्स्यात्तदालोकितमिष्यते ॥ ५० ॥

ऊर्ध्वमुल्लोकितं ज्ञेयं सर्वतो [6]लोकितं तथा ।
विलोकितं तु पार्श्वाभ्यां पृष्ठतश्चावलोकितम् ॥ ५१ ॥

दृष्टीनामनुगं चैव भ्रुवोः कर्म प्रयोजयेत् ।
यथा नेत्रं प्रसर्पेद्धि नानाभावरसाश्रयम् ॥ ५२ ॥

नेत्रस्यानुक्रमेणैव भ्रुवोस्तु चलनं भवेत् ।
उत्क्षेपः [7]पतनं चैव भ्रुकुटी चतुरं तथा ॥ ५३ ॥

निकुञ्चितं [8]रेचितं च तथा स्वाभाविकं भवेत् ।
भ्रुवोरुद्गममुत्क्षेपः पातनं पतनं भवेत् ॥ ५४ ॥

---

१. V. सञ्चारादुद्धर्षितमु- २. A.C. स्रस्तभावाश्च. ३. V. निष्कामा- ४. V.C. शेष-भावे तु. ५. A. ह्यल्लोकितम- B. ह्यल्लोकितुम- C. ह्यलोकितम- ६. A. लोक्यतं. C. लोकिते. ७. N.S. पातनं. ८. V. कुञ्चितं.

[1]द्वयोर्मूलोर्ध्वविक्षेपाद्भ्रुकुटी परिकीर्तिता ।
चतुरं किञ्चिदुच्छ्वासान्मधुरायतया भ्रुवा ॥ ५५ ॥

एकस्या उभयोर्वापि [2]मृदुभङ्गान्निकुञ्चितम् ।
एकस्या [3]ललितोत्क्षेपाद्रेचितं नाम कीर्तितम् ॥ ५६ ॥

यथास्थिते स्वभावस्थे भ्रुवोः कर्म निबोध मे ।
समुत्क्षेपस्तु लीलायाः कारुण्यात्पा(? त्प)तनं भवेत् ॥ ५७ ॥

क्रोधे च भ्रुकुटीर्ज्ञेया [4]शृङ्गारं(? रे) चतुरं तथा ।
*क्षामं कृशं तु विज्ञेयं फुल्लं विकसितं भवेत् ॥ ५८ ॥

संपूर्णं पूर्णमित्युक्तं कम्पितं [5]परिधूनितम् ।
[6]सृक्काभिन्नं कुञ्चितकं सरोमाञ्चं तथाविधम् ॥ ५९ ॥

प्राकृतं तु[7] स्वभावस्थं [8]मन्दं(? गण्डं) प्रोक्तं मनीषिभिः ।
क्षामं दुःखे तु कर्तव्यं फुल्लं [9]हर्षे प्रयोजयेत् ॥ ६० ॥

पूर्णं तुष्टे तु कर्तव्यं तथा रोषे च कम्पितम् ।
हास्ये त्वाकुञ्चितं स्पर्शे सरोमाञ्चं विधीयते ॥ ६१ ॥

प्राकृतं तु स्वभावस्थं त्वर्थयोगेन योजयेत् ।
नता मन्दा विकृष्टा च सोच्छ्वासा [10]कुणितानना†(? सविकूणिता) ॥६२॥

स्वाभाविके (? की) च कर्तव्या प्रयोगे नासिका बुधैः ।
नतानता तु विज्ञेया मन्दा नतपुटा भवेत् ॥ ६३ ॥

---

१. V. द्वयोर्मूलोर्ध्व— २. V. स्यादुद्भग्नं त्रिकुञ्चितम्. ३. V. ललितोद्योगाद्रेचितं. ४. A. शृङ्गारं चतुरं V.B. शृङ्गार चतुरं. C. शृङ्गा...च तु and drops रं. ५. A.B.C. परिकीर्तितम्. ६. V.C. शृङ्गभिन्न. ७. A.B.C. च. ८. A. मण्डं. ९. C. हर्षे तु योजयेत्. १०. V कूणिता नता.

* मोट्टायिते कुट्टमिते विलासे किलकिञ्चिते ।
निकुञ्चितं तु कर्तव्यं नृत्ये योज्यं तु रेचितम् ।
अनाविद्धेषु भावेषु विद्यात्स्वाभाविकं बुधः ॥
N.S. Ad. 8, N. Sagara edition.

† N.S. सविकूणिता. Ms. of G.O.S.

विकृष्टा कुञ्चिता चोर्ध्वं सोच्छ्वासा वायुपूरिता।
[1]संकुणनात्कुणिता स्यात्स्वभावस्था स्वनासिका ॥ ६४ ॥

नता तु रुचिते कार्या मन्दा [2]शोके विधीयते।
[3]तीव्रे गन्धे विकृष्टा तु सोच्छ्वासा तु तथा प्रिये ॥ ६५ ॥

विकूणिता जुगुप्सायां शे[4]षा स्वाभाविकी मता।
[5]कूण(? कुट्ट)नं खण्डनं च्छिन्नमु[6](? न्नं चु)क्कितं समता तथा ॥६६॥

[7]जिह्वाधरौष्ठमर्दं वै [8]दन्तकर्मणि कारयेत्।
[9]कुट्टनं [10]बलवच्छेदं खण्डनं तु विघट्टनम् ॥ ६७ ॥

छिन्नं निकृतमेव स्याच्छु[11](? च्चु)कितं विद्धमेव च।
व्याधौ तु कुट्टनं कार्यं [12]उत्सादे खण्डनं भवेत् ॥ ६८ ॥

छिन्नं क्रोधे परं हास्ये समं शेषेषु कारयेत्।
विवर्तनं तथा कम्पो विमर्शो(? सर्गो)ऽथ विगूहनम् ॥ ६९ ॥

[13]संदष्टश्च समुद्गश्च [14]कर्माण्यधरजानि तु।
[15]सृक्कासु वक्रकरणं विवर्तितमिति स्मृतम् ॥ ७० ॥

[16]वेपनं चापि विज्ञेयमधरस्य तु [17]कम्पनम्।
यो निष्क्रमोऽधरस्याथ स विसर्ग इति स्मृतः ॥ ७१ ॥

अन्तःप्रवेशनं चैव विनिगूहितमुच्यते।
दन्तौष्ठपीडनाच्चैव सन्दष्टकमिति स्मृतम् ॥ ७२ ॥

पिण्डिताभ्युद्गतश्चैव समुद्गक इति [18]स्मृतः।
विवर्तितमसूयायां रोषे कम्पितमिष्यते ॥ ७३ ॥

भयानके विसर्गश्च [19]कर्षणेऽथ [20]विगूहनम्।
त(? र)तोन्मादविकारेषु सन्दष्टं वीररौद्रयोः।

---

१. A. सकूणना–. २. C. शोकं. ३. V. तीव्रगधे. ४. A.C. शेषे. ५. A.B. कूणनां. ६. V.B. –मुकितं. C. –मुक्तितं. S.R. gives कुट्टनं and चुक्कितं. ७. B.C. –धरोष्ठमन्दं ८ A.B. नृत्तकर्मणि. C. नृत्ते कर्मणि. ९. A.B C तुट्टनं. १०. V. भक्तवच्छेदं ११. C. –च्छुकिते. १२. B.V. उत्साहे. १३. V. संदष्टश्च समुद्रश्च. १४. A.C. कर्माण्यवरजानि तु. V. कर्माण्यधरजानि च. १५. A.B. सृकांत वक्रकरणं. C. सृक्का तु करणं. १६. C. वेपगं. १७. V. कंपने. १८. B. स्मृताः. १९. C. कृषणेय. २०. A.B.V. निगूहनम्.

समुद्गमनुकम्पायां[1] शेषे कार्यं स्वभावजम् ॥ ७४ ॥

उपाङ्गकर्माभिहितं तथैत-
न्मया [2]समासेन नरेन्द्रचन्द्र ।
कार्यः प्रयत्नोऽत्र सदा बुधेन
यस्मादुपाङ्गाश्रयमेव [3]नृत्तम् ॥ ७५ ॥

इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे उपाङ्गिकाध्यायो नाम ॥ २५ ॥

---

१. A. शेषं. २. C. समान नरेन्द्रचन्द्र. ३. V. नृत्यम्.

## षड्विंशोऽध्यायः ।

मार्कण्डेयः—

पताकस्त्रिपताकश्च तथा वै कर्तरीमुखः ।
अर्धचन्द्रो [1]ह्यरालश्च गुरु[2](? शुक)तुण्डस्तथापरः ॥ १ ॥

मुष्टिश्च शिखराख्यश्च कपित्थः [3]खटकामुखः ।
सूच्यर्धः (? च्यास्यः) पद्मकोशश्च मृ(? श्चोर)गशीर्षो मृगस्य च ॥ २ ॥

ला(? का)ङ्गूलः [4]कोलपद्मश्च चतुरो भ्रमरस्तथा ।
[5]हंसास्यो हंसपक्षश्च संदंशो मुकुलस्तथा ॥ ३ ॥

असंयुताः करा ह्येते द्वाविंशतिरुदाहृताः ।
अथ संयुक्ततो हस्तान्गदतस्ता[6]न्निबोध मे ॥ ४ ॥

अञ्जलिश्च कपोतश्च कर्कटः स्वस्तिकस्तथा ।
खटको(? का)वर्धमानश्च उत्सङ्गो [7]निषधस्तथा ॥ ५ ॥

दोलः पुष्पपुटश्चैव तथा मकर एव च ।
गजदन्तोऽवहित्थश्च वर्धमानस्तथैव च ॥ ६ ॥

एते वै संयुता हस्ता मया प्रोक्तास्त्रयोदश ।
[8]नृत्तहस्तान्पुनश्चैव भूयो नाम निबोधत ॥ ७ ॥

चतुरस्रस्तथावृ(? थोद्वृ)त्तस्तथा लवुमुखौ स्मृतौ ।
तथा चैव तु[9]विज्ञेयौ ह्यरालखटकामुखौ ॥ ८ ॥

आविद्धवक्र[10]संव्याख्यौ(? सूच्यास्यौ) रेचितावर्धरेचितौ ।
अवहित्थः पल्लवितो नितम्बः केशवर्धनौ ॥ ९ ॥

लताख्यौ करिहस्तौ च प[11]क्षोद्योतोर्थवर्धितौ(? तावथाञ्चितौ) ।
ज्ञेयौ गरुडपक्षौ च दण्डपक्षौ तथैव च ॥ १० ॥

---

१. V. ह्यटालश्च. २. N.S. & S.R. शुकतुण्ड. ३. A.B.C. कटकामुखः. ४. V. कालपद्मश्च. ५. B. हंसासो. ६. C. –त्रिबोधत. ७. V. निषिधस्तथा. A. निषदस्तथा. ८. V. नृत्तहस्तार्थुपश्चैव. A.B. नृत्तहस्तान्पुटश्चैव. ९. C. विज्ञेयावराल–. १०. A.B.C. संव्याख्यौ. V. –संव्यास्वौ. ११. V. पक्षोद्योतार्थवर्धितौ.

ऊर्ध्वमण्डलजौ चैव पार्श्वमण्डलजावपि ।
[1]पार्श्वोर्ध्वमण्डलौ चैव उरोमण्डलकौ तथा ॥ ११ ॥
[2]मुष्टस्वस्तिककावन्यौ तथा वै [3]पद्मकोशकौ ।
[4]अलपल्लवसंज्ञौ च तथा चोल्बणसंज्ञितौ ॥ १२ ॥
ललितौ वलितौ चैव ज्ञेया [5]नृत्तकराः सदा ।
अतः परं प्रवक्ष्यामि कराणां कर्मलक्षणम् ॥ १३ ॥
[6]प्रसारिताग्राः सहिता यस्याङ्गुल्यो भवन्ति हि ।
कुञ्चितश्च तथाङ्गुष्ठः स [7]पताक [8]इति स्मृ[तः] ॥ १४ ॥
एष प्रहारग्रहणे रोवने स्यात्प्रताप(? पात)ने ।
चलिताङ्गुलिरप्येष वायुवृष्टिनिरूपणे ॥ १५ ॥
ऊर्ध्वगश्च तथोत्साहे छत्रादिष्वप्यधोमुखः ।
[9]पुष्करप्रहितस्ताले समः प्रचलिताङ्गुलिः ॥१६ ॥
*पक्ष्मो(? क्षो)त्क्षेपे रेचितक उत्क्षिप्तश्चैव धारणे ।
[10]अस्यैवानामिका वक्रा [11]त्रिपताकस्तथा भवेत् ॥ १७ ॥
आवाहने प्रयुञ्जीत [12]मुकुटाभिनये यतः ।
[13]प्रचलाङ्गुलिरप्येष लघुपक्षिनिरूपणे ॥ १८ ॥
[14]तथानामिकया कार्यं तथैवाश्रुप्रमार्जनम् ।
[15]मङ्गल्यस्नपनं कार्यं शिरसश्च निवेशनम् ॥ १९ ॥
श्रोत्रसंवरणं चैव कार्यं भूमिमुखेन तु ।
भुजङ्गानामभिनयं (?) भ्रमराणां तथैव च ॥ २० ॥
[16]त्रिपताके यदा हस्ते भवेत्पृष्ठावलोकिनी ।
तर्जनी तु [17]यदा ज्ञेयः कर्तरीमुख[18]संज्ञकः ॥ २१ ॥

१. B. पार्श्वोर्ध्व– C. पार्श्वार्ध– V. पार्श्वार्ध–. २. A.V. इष्ट– ३. V. पद्मकोशिकौ. ४. V. अलिपल्लवसंज्ञो. A.B. अलिपल्लवसंज्ञौ. ५. V. नृत्यकराः सदा. B. नृत्तकरास्यदा. ६. B.C.V. प्रसारिता सहिता. ७. A. पाताक. ८. A. इति स्मृताः B. इति स्मृतौ. ९. A. पुष्करप्रहितास्ताले. १०. V. अस्यैकानामिका. ११. A.B.V. त्रिपताका तथा. १२. C. मुकुटाभिनये युतः. V. मुकुटाभिनयेप्युनः. १३. V अचलाङ्गुलिरप्येव. C. प्रचलाङ्गुलिरप्येव. १४. V.C. तया नासिकया. १५ V. मङ्गलस्पर्शनं B C. मङ्गल्यस्पर्शनं. १६. V. त्रिपताका. १७. V. तदा. १८. A.B. –सञ्ज्ञिकः. *N.S. पक्षोत्क्षेप–.

कार्योऽयं[1] परिवा(? थि चा)रेषु भिन्नश्च(? न्ने च) पतनेषु च ।
अनामिका तु साङ्गुष्ठा अर्धचन्द्रे करे भवेत् ॥ २२ ॥
[2]बालचन्द्रोऽभिनेयः स्यात्तालाश्च तरवस्तथा ।
मेखलां जघनं चैव कुर्याच्चानेन कुण्डलम् ॥ २३ ॥
[3]खण्डा प्रदेशिनी कार्या अङ्गुल्यः(? ष्ठः) कुञ्चिता(? त)स्तथा ।
[4]शेषा भिन्नोर्ध्ववलिता [5]अरालेऽङ्गुलयः करे ॥ २४ ॥
गाम्भीर्यसत्त्व[6]शौण्डीर्यकेशसङ्ग्रहणादिषु ।
स्वेदस्य चापनयने [7]रोपे [8]चैव करो भवेत् ॥ २५ ॥
[9]अरालः शुकतुण्डश्च वक्रितानामिकाङ्गुलिः ।
[10]नाहंत्वमित्यथैतेन नित्यं चाभिनयेद् बुधः ॥ २६ ॥
अङ्गुल्यो यस्य हस्तस्य [11]तलमध्येऽग्रसंस्थिताः ।
तासामुपरिता(? चा)ङ्गुष्ठः स मुष्टिरिति संज्ञितः ॥ २७ ॥
एष प्रहारे व्यायामे निर्दयस्तनपीडने ।
संधारणेऽसिय[12]ष्ट्योश्च ग्रहणे [13]कुन्तदण्डयोः ॥ २८ ॥
[14]ऊर्ध्वाङ्गुष्ठोऽयमेव स्यात्करः शिखरसंज्ञितः ।
एष रश्मिग्रहे [15]कार्यश्चापाङ्कुशधनुर्ग्रहे ॥ २९ ॥
मुष्टिमध्य[16]गताङ्गुष्ठः कपित्थ इति कीर्तितः ।
अनेनाभिनयः कार्यो मध्ये चक्रे शरे तथा ॥ ३० ॥
उत्क्षिप्तवक्रा तु यदानामिका सकनीयसी ।
अस्यैव तु कपित्थस्य ततः स्यात्खटकामुखः ॥ ३१ ॥
होत्रे छत्रग्रहे चैव कर्षणे [17]व्यजने तथा ।
[18]स्रग्दामधारणे कार्यः बुधैः सङ्केतसङ्ग्रहः ॥ ३२ ॥

---

१. A. परिचारेषु. २. V. बालचन्द्राभिनयने बालस्यात्तरवस्तथा । A.B. बालचन्द्रोऽभिनेयः स्याद्बालाश्च तरवस्तथा । C. बालचन्द्रोऽभिनेयः स्युत्तालाश्च तरवस्तथा. ३. V.C. खण्डप्रदेशिनी. ४. A. शेषाभिन्नोर्ध्ववलिता. ५. V. अरालेङ्गुल्यः. B. आरालेङ्गुलयः. ६. A.B. –शौटीर्य. ७. C.V. शेषे. ८. V.A.B. चैष. ९. V. अरालः. १०. A.B. नाहंत्वमित्यथैतेऽपि नित्यं चाभिनयन्बुधः । ११. A. ताल– १२. A. यष्टौ च. १३. C. दन्तकुण्डयोः. १४. A.C. ऊर्ध्वोङ्गुष्ठो- १५. A. कार्याश्चा– १६. V. –गतोङ्गुष्ठः. १७. A.B. विजने. १८. V. स्रद्दामधारणे कार्योऽथ-सङ्को चौस्यसंग्रहः । C. स्रद्दामधरणे कार्यः. B. स्रद्दामधारे कार्यः.

प्रसृता तर्जनी चात्र यदा सूचीमुखस्तदा ।
[1]निशादिनं [2]चाभिनयेन्नेत्रे [3]शक्रमहेशयोः ॥ ३३ ॥

अस्याङ्गुल्यस्तु [4]विरलास्सहाङ्गुष्ठेन कुञ्चिताः ।
ऊर्ध्वा हंसन(? मु)[5]खस्येव स भवेत्पद्मकोशकः ॥ ३४ ॥

[6]श्लिष्टाङ्गुष्ठो निम्नमध्यः पताकोऽहिशिरो भवेत् ।
सलिलस्य प्रदाने तु [7]कार्यान्ते(? र्यं ते)न च [8]सूचनम् ॥ ३५ ॥

अधोमुखीनां सर्वासामङ्गुलीनां यदा भवेत् ।
[9]कनिष्ठाङ्गुष्ठकौ [10]चोर्ध्वौ तदा स्यान्मृगशीर्षकः ॥ ३६ ॥

सूचिते छेदिते कार्यं शबया(? क्ते) स्वो (? चो)चालने तथा ।
त्रेताग्निसंस्थिता [11]मध्या तर्जन्यङ्गुष्ठयोर्यदा ॥ ३७ ॥

[12]काङ्गूलेऽनामिका वक्रा तथा चोर्ध्वा कनीयसी ।
अनेन खलु कर्तव्यं फलानां तु निरूपणम् ॥ ३८ ॥

आवर्त्यन्ते करतले यस्याङ्गुल्यः करस्य वै ।
पार्श्वागतविकीर्णाश्च [13]कोऽऽपद्म इति स्मृतः ॥ ३९ ॥

प्रतिषेधकृते योज्यो नास्ति शून्येषु चाप्यथ ।
तिस्रः प्रसारिताङ्गुल्यस्तथा चोर्ध्वा कनीयसी ॥ ४० ॥

तस्या मध्याश्रितोऽङ्गुष्ठः करः स चतुरः स्मृतः ।
वचसां विनियोगे च [14]पाठ्ये चैव प्रयोजयेत् ॥ ४१ ॥

अनेनैव तथा कार्यं वर्णानां तु निरूपणम् ।
[15]ऊर्ध्वस्थेन भवेच्छ्वेतं रक्ते स्यादर्धमण्डलम् ॥ ४२ ॥

[16]मण्डलेन भवेत्पीतं नीलं च मृदितं (? ते) भवेत् ।
स्वभावस्थेन [17]कृष्णं च शेषा वर्णास्तथैव च ॥ ४३ ॥

---

१. V. निष्पादने. C निपादिनं. २. A.B. चाभिनये नेत्रे. ३. B. —चक्रमहेशयोः ४. A.B.V. विपुला. ५ V. हंसनखस्यैव. ६. V.B. श्लिष्टोङ्गुष्ठो. ७. V. कार्यं तेन. ८. A.B. सूदनम्. ९. V. कनिष्ठाङ्गुष्ठका. १०. A. चोर्ध्वौ. V. चोर्ध्वा. ११. C. मध्ये. १२. A.B. काङ्गुल्ये. १३. V. (f.) कलेपद्म. C. केलपद्म. १४. A.B. पाठे चैव. C. पाठ्ये चैव. V. माध्ये चैव. १५. V.B. ऊर्ध्वस्थे च नवे श्वेतं. १६. V. मण्डलं न. १७. V. कृत्स्नं च.

मध्यमाङ्गुष्ठ[1]सन्दंशो वक्रा चैव प्रदेशिनी ।
ऊर्ध्वमन्याः प्रकीर्णाश्च भ्रमरश्च तदा भवेत् ॥ ४४ ॥

पद्मादिग्रहणे कार्यं कर्णपूरे तथाप्ययम् ।
तर्जनीमध्यमाङ्गुष्ठास्त्रेताग्निस्था निरंतरम् ॥ ४५ ॥

[2]भवेयुर्हंसवक्त्रस्य शेषा ह्यन्याः प्रसारिताः ।
श्लक्ष्णलाघवनिस्सारमार्दवेषु प्रयोजयेत् ॥ ४६ ॥

तिर्यक्पिण्डीकृता [3]यस्मिन्नुन्नता च कनिष्ठिका ।
अङ्गुष्ठः कुञ्चितस्त्वेवं हंसपक्ष इति स्मृतः ॥ ४७ ॥

गण्डसंश्रयमेतेन भोजनः सपरिग्रहः ।
स्पर्शे [4]चैवानुलेपार्थे कार्यस्संवाहने तथा ॥ ४८ ॥

तर्जन्यङ्गुष्ठसंदंशस्त्वरालस्य यदा भवेत् ।
निर्भुग्नतलमध्यश्च ससंदंश इति स्मृतः ॥ ४९ ॥

संदंशस्त्रिविधो [5]ज्ञेयस्त्वग्रजो मुखजस्तथा ।
तथा पार्श्वकृतश्चैव तस्य कर्माणि मे शृणु ॥ ५० ॥

संदंश(?शो) ग्रहणे कार्यश्शल्योद्धारे तथाग्रजः ।
*[6]आलेखरञ्जने चैव [7]स्तनज(?स्य) पीडने तथा ॥ ५१ ॥

यज्ञोपवीती पार्श्वस्थः शिरःसंदर्शने तथा ।
समागताग्राङ्गुलिको [8]मुकुलः पद्मकोशकः ॥ ५२ ॥

देवार्चाकरणे कार्यो बलो(?लौ) पद्मनिरूपणे ।
असंयुताः करा ह्येते यथावत्कीर्तिता मया ॥ ५३ ॥

पताकाभ्यां तु हस्ताभ्यां [9]संपुटोऽञ्जलिरुच्यते ।
देवतानां गुरूणां च पितॄणां चेष्यते पुनः ॥ ५४ ॥

---

१. A. B.V. –सन्देशो. २. B. भवेयुर्वक्रहंसस्य. ३. B.C.V. यस्मिनुन्नता. ४. V. चैवानुलापार्थे कार्ये संवाहने. ५. V.C. ज्ञेयस्त्वग्रहो. ६. V.B. आलेखारञ्जने A, आलेख्यरञ्जने. ७. A.C.B.V. तर्जनीपीडने. ८. V. मुकुलः ९. V. सस्फुटोञ्जलि–. A.B. सम्पुटोञ्जलि–

* The Śloka describing the use of मुखसंदंश is missing in our text. I have given it from N.S.:—

* वृन्तात्पुष्पोद्धरणं वर्तिशलाकादिपूरणं चैव । धिगिति च वचनं रोषान्मुखसंदंशस्य कर्माणि ॥

[1]अन्योऽन्य[2]पार्श्वसक्ताभ्यां कराभ्यां स्यात्कपोतकः ।
शीते भये च कार्योऽयं [3]विनयोपगमे तथा ॥ ५५ ॥

अङ्गुल्यो यस्य हस्तस्य अङ्गुल्यन्तरनिस्सृताः ।
स कर्कट इति ज्ञेयः कर्तव्यस्तु विजृम्भिते ॥ ५६ ॥

मणिबन्धनविन्यस्तावरालौ वर्धमानकः(?कौ) ।
उत्तानौ नतपार्श्वस्थौ स्वस्तिकः परिकीर्तितः ॥ ५७ ॥

विस्तीर्णं सर्वमेतेन ऋतवो गगनं घनम् (?नः) ।
[4]समुद्रश्चाभिनेयस्स्याद्भूमिश्च [5]मनुजेश्वर ॥ ५८ ॥

खटकः खटके न्यस्य खटकावर्धमानकः ।
[6]शृङ्गारार्थे प्रयोक्तव्यः प्रणामकरणेषु च ॥ ५९ ॥

[7]अरालौ तु विपर्यस्तावुत्तानौ वर्धमानकौ ।
उत्सङ्ग इति विज्ञेयः स्पर्शस्य ग्रहणे [8]करः ॥ ६० ॥

[9]मुकुलं तु यदा हस्तं [10]कपित्थं परिवेष्टयेत् ।
स विज्ञेयस्तदा हस्तो निषधो नाम नामतः ॥ ६१ ॥

संक्षिप्ते [11]चैष निक्षिप्ते तथा कार्यः प्रपीडिते ।
पताकौ लम्बितौ हस्तौ दोलेति परिकीर्तिता ॥ ६२ ॥

ध्यानादिदाने कर्तव्यो भक्ष्यादिकरणेषु च ।
*द्वितीयपार्श्वसंश्लिष्टः पूर्वः पुष्पपुटः स्मृतः ॥ ६३ ॥

पूर्वाणि चाभिनेयानि [12]करणानेन(?न्यैव) पार्थिव ।
पताकौ तु यदा हस्तौ मूर्त(?र्ध)हस्तावधोमुखौ ॥ ६४ ॥

---

१. C. अतोन्य. २. A.B. –पार्श्वमुक्ताभ्यां. ३. V. विनियोगगमे. B. विनियोपगमे. ४. A. समुद्राश्चा– ५. A. मनुजेश्वरः. ६. A.B. शृङ्गारार्थेषु योक्तव्यः. ७. A. अरालो. ८. V. षरः ९. V. मुत्कलं. १०. A. कपित्थः ११. A.B. चैव. १२. B.V. करणानेव.

* The first line in our Mss. is missing. I have supplied it from the corresponding Śloka from N.S.:—

* यस्तु सर्पशिराः प्रोच्तस्तस्याङ्गुलिनिरन्तरः ।

उपर्युपरि विन्यस्तौ तदा स मकरः करः ।
सिंहव्याघ्रमृगाद्यानां कर्तव्योऽभिनयो भवेत् ॥ ६५ ॥

अञ्चितौ [1]कूर्परांसौ तु यदा स्यात्सर्पशीर्षके ।
गजदन्त[2]स्तदा नाम्ना कार्यः शैलनिबर्हणे ॥ ६६ ॥

शुकतुण्डौ करौ कृत्वा वक्षस्यभिमुखाञ्चितौ ।
[3]शनैरधोमुखाविद्धाववहित्थ इति स्मृतः ॥ ६७ ॥

[4]दौर्बल्यश्वसिते कार्यो गात्राणां च निदर्शने ।
ज्ञेयो वै वर्धमानस्तु हंसपक्षौ पराङ्मुखौ ॥ ६८ ॥

जालवातायनादीनां प्रयोगस्तेन चेष्यते ।
संयुतानां कराणां तु लक्षणं कथितं मया ॥ ६९ ॥

एवं [5]ज्ञेयाः कराः सर्वे नानारससमुद्भवाः ।
अत [6]ऊर्ध्वं प्रवक्ष्यामि [7]नृत्तहस्त( ? हस्तं नृत्त )समाश्रयम् ॥ ७० ॥

वक्षसोऽष्टाङ्गुलस्थौ तु प्राङ्मुखौ खटकामुखौ ।
समान[8]कूर्परांसौ तु चतुरस्रौ प्रकीर्तितौ ॥ ७१ ॥

[9]हंसपक्षौ स्मृतौ हस्तौ व्यावृत्तौ तालवृन्तवत् ।
उद्वृत्ताविति [10]विज्ञेयावथवा तालवृन्तकौ ॥ ७२ ॥

[11]चतुरस्रीकृतौ हस्तौ हंसपक्षीकृतौ तथा ।
तिर्यङ्मुखावूर्ध्वतलौ ज्ञेयौ लघु( ? तल )मुखाविति ॥ ७३ ॥

तावेव [12]मणिधन्व ( ? बन्धा )न्तावरालकचि( ? विच्यु )तौ करौ ।
ज्ञेयावभिनये [13]त्वेतावरालखटकामुखौ ॥ ७४ ॥

[14]भुजांसकूर्परायैस्तु कुटिलावर्तितौ करौ ।
अधोमुखतलाविद्धावाविद्धाविति कीर्तितौ ॥ ७५ ॥

---

१. V. कूर्परासा. २. V.B. –स्तथा. ३. B.V. शनैरधोमुखौ. ४. V. दौर्बल्यं श्वसिते. ५. A. ज्ञेयः करः. ६. A. ऊर्ध्वं प्रविक्ष्यामि. ७. A. नृत्तहस्तमुपाश्रयम् . B. नृत्तहस्तमपाश्रयम्. V. नुस्तुहस्तमपाश्रयम्. ८. V. –कूर्परासौ. ९. B. हेमपक्षौ. १०. A. विज्ञेयौ त्वथ. ११. A.B. चतुरश्रे कृतौ. १२. B.V. मणिधन्वांतावराल–. C. मणिधन्वान्तेवरालौ–. १३. A.B.V. त्वेतौ ह्यराल–. १४. A.B.C.V. भुजौ सकूर्परायौ तु ।

सर्पशीर्षौ यदा हस्तौ [1]भवेतां स्वस्तिकस्थितौ ।
तिर्यक्प्रसारितास्यौ च ज्ञेयौ सूचीमुखाविति ॥ ७६ ॥
रेचितौ चापि विज्ञेयौ [2]हंसपक्षौ द्रुतभ्रमौ ।
प्रसारितोत्तानतलौ रेचितावेव संज्ञितौ ॥ ७७ ॥
[3]चतुरस्रो भवेद्वामः सव्यहस्तश्च रेचितः ।
विज्ञेयो [4]नृत्ततत्त्वज्ञैरेवं (? रर्ध )रेचितसंज्ञितः ॥ ७८ ॥
[5]अञ्चितौ कूर्पराभ्यां तु त्रिपताकौ यदा करौ ।
किञ्चित्तिर्यग्गता [6]वेताववहित्थः प्रकीर्तितः ॥ ७९ ॥
मणिबन्धननिर्मुक्तौ शिथिलौ पल्लवौ स्मृतौ ।
[7]बाहुशीर्षविनिष्क्रान्तौ नितम्बौ परिकीर्तितौ ॥ ८० ॥
*अंसदेशे प्रवृत्तौ तु परिपार्श्वोत्थितौ तथा ।
विज्ञेयौ [8]केशबन्धाख्यौ करावाचार्य[9]सम्मतौ ॥ ८१ ॥
तिर्यक्प्रसारितावेव पार्श्वसंस्थौ तथैव च ।
लताख्यौ तु करौ [10]ज्ञेयौ नृत्ताभिनयनं प्रति ॥ ८२ ॥
[11]समुन्नतो लताहस्तः [12]पार्श्वात्पार्श्वे[13]विलोडितः ।
द्वितीयः [14]खटकाख्यश्च करिहस्तः प्रकीर्तितः ॥ ८३ ॥
कटिशीर्षनिविष्टाग्रौ त्रिपताकौ यदा करौ ।
पक्षावञ्चितकौ [15]नाम तदा ज्ञेयौ प्रयोक्तृभिः ॥ ८४ ॥
[16]तावेव तु परावृत्तौ [17]पक्षोद्योतौ कराविति ।
अधोमुखतलाविद्धौ ज्ञेयौ गरुडपक्षकौ ॥ ८५ ॥
तथा प्रसारितभुजौ [18]दण्डपक्षाविति स्मृतौ ।
[19]तौ चोर्ध्वमण्डलौ ज्ञेयौगुरु( ? यावूर्ध्व )देश[20]विवर्तनात् ॥ ८६ ॥

---

१. V.B. भवतां. २. A. हंसपक्षौद्भुतभ्रमौ. B.V. हंसपक्षाद्भुतभ्रमौ. ३. A. चतुरश्रौ ४. A.B.C.V. give नाट्य– but N.S. gives नृत्त–. ५. N.S. gives अञ्चितौ कूर्परांसौ. ६. V. –वैतावावहित्थः. B. वेरावबहित्थः. ७. B.C.V. बाहू . ८. A. केशबंधाक्षौ. ९. A. –सस्मतौ. १०. C. ज्ञेया. ११. V. समुन्नता. १२. A. पार्श्वात्पार्श्वं. १३. N.S. विलोलितः १४. C. कटकाख्यश्च. १५. A.B.V. वामे. १६. C. तावेवौ तु परावृत्ता. १७. A. पक्षोघातौ. V. पक्षाघातौ. १८. A.C. दण्डापक्षाविति. १९. A. ऊरूर्ध्व– C. तरौर्ध्व–. २०. C. निवर्तनात्.
* N.S. केशदेशाद्वि–.

*तावेव पार्श्वविन्यस्तौ विज्ञेयौ पार्श्वमण्डलौ ।
[1]वेष्टितावे(? तोद्वे)ष्टितौ हस्तौ [2]तयोर्म(? स्तावुरोम)ण्डलकौ स्मृतौ ॥८७॥
तावेव [3]मणिबन्धान्ते स्वस्तिका[4]कृतिसंज्ञितौ ।
स्वस्तिकाविति विख्यातौ [ विच्युतौ ] च प्रकीर्णकौ ॥ ८८ ॥
द्वावेव पद्मकोशाभौ पद्मकोशाविति स्मृतौ ।
[5]करावुद्वेजि(? ष्टि)ताग्रौ तु विज्ञेया[6]वलपल्लवौ ॥ ८९ ॥
ऊर्ध्वप्रसारितौ विद्धौ [7]विज्ञेयावुल्वणाविति ।
पल्लवौ तु [8]शिरोदेशे संप्राप्तौ ललिताविति ॥ ९० ॥
कूर्परस्वस्तिकन्यस्तौ ललिता(? तौ) वलितौ स्मृतौ ।
संयुता [9]वियुताश्चैव नृत्तहस्ताः प्रकीर्तिताः ॥ ९१ ॥
नानार्थरससंयुक्तं प्रयोगं कालसंश्रयम् ।
विज्ञेयं नृत्तहस्तानां तेन नाभिहितं मया ॥ ९२ ॥
[10]व्याधिग्रस्ते [11]जरार्ते च नियमस्थे जरा(? भया)र्दिते ।
मत्ते प्रमत्ते चिन्तायां नाभिनेयः करो भवेत् ॥ ९३ ॥
उद्वेष्टं समवेष्टं च [12]विवेष्टितविवर्तिते ।
कर्मेदं नृत्तहस्तानां विज्ञेयं च चतुर्विधम् ॥ ९४ ॥
कार्या ललितसञ्चारा [13]नृत्तहस्तास्सदा बुधैः ।
लालित्यमेव विज्ञेयं नृत्तस्य प्रतिबोधनम् ॥ ९५ ॥
देशं कालं प्रयोगं च [14]ह्यर्थयुक्तिमवेक्ष्य च ।
[15]हस्ता एते [16]प्रयोक्तव्याः स्त्रीणां नृणां च [17]नर्तकैः ॥ ९६ ॥

---

१. A. वेष्टितौ वेष्टितौ. २. A. तरोर्मण्डलकौ. B. तरोन्मण्डलकौ. C. तरोमण्डलकौ. ३. B.V. मणिबंद्धान्तौ. ४. C. –कृतसंज्ञितौ. ५. V. ( $f_1$ ) –वुद्वेजिताग्रौ. ( $f_2$ ) –उद्धजिताग्रौ. ६. A. –वल्लिपल्लवौ. V.–वलिपल्लवौ. ७. A. विज्ञेयावुल्लनाविति. B. विज्ञेयावल्लणाविति. ८. A. शिरोद्देशे. ९. B. वियुतश्चैव नृत्तहस्तः प्रकीर्तितः १०. V. आधिग्रस्ते. ११. B.C.V. जरान्ते. १२. V. विचेष्टित– १३. V. नृत्तहस्तापरा– C. नृत्तहस्ताम्परा– १४. C. ह्यर्थयुक्त– १५. C. हस्ता ह्येते. १६. V.C. प्रयोक्तव्या. १७. V.B. नर्तके.

* The Ślokas describing पार्श्वोर्ध्वमण्डलौ and मुष्टि are missing. So I have given them from N.S. ( Nirnaya Sagara edition ).

अरालपल्लवकरावुरोर्ध्वभ्रमणक्रमात् । पार्श्वावर्तश्च विज्ञेयावुरःपार्श्वार्धमण्डलौ ॥
हस्तौ तु मणिबन्धान्ते कुञ्चितावञ्चितौ यदा । खटकाख्यकृतौ स्यातां मुष्टिकस्वस्तिकौ तदा ॥

हस्ता मयैते कथिता नृवीर
'सर्वं करायत्तमिदं हि नृत्तम् ।
यत्नश्च कार्यस्तु करेषु तस्मा-
च्चातुर्यलास्याभिनयोपपन्नम् ॥ ९७ ॥

इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे हस्ताध्यायो नाम ॥ २६ ॥

---

१. A. सर्वे.

## सप्तविंशोऽध्यायः ।

मार्कण्डेयः—

वाचिकश्च तथाहार्यस्त्वाङ्गिकस्सात्त्विकस्तथा ।
चतुष्प्रकारोऽभिनयः कीर्तितो [1]नाट्यकोविदैः ॥ १ ॥

वाचिको वचसा प्रोक्तः [2]शृण्वाहार्यं नराधिप ।
चतुर्विधं तु विज्ञेयं [3]प्र(? पु)स्तोऽलङ्कार एव च ॥ २ ॥

तथाङ्गरचना चैव ज्ञेया [4]सज्जी(? ञ्जी)वमेव च ।
[5]मृदा वा दारुणा वापि वस्त्रेणाप्यथ चर्मणा ॥ ३ ॥

लोहैरनुकृतिर्वापि प्र(? पु)स्त [6]इत्यभिधीयते ।
देवदानवयक्षाणां गजाश्वमृगपक्षिणाम् ॥ ४ ॥

कार्याणि प्रतिशीर्षाणि नाट्यज्ञैः प्र(? पु)स्तकर्मणा ।
अलङ्कारस्तु विज्ञेयो माल्याभरणवाससाम् ॥ ५ ॥

नानाविधः [7]समायोगो ह्यङ्गोपाङ्गविनिर्गतः ।
तच्च कार्योऽनयोर्बुद्ध्वा नियोगं जातिमेव च ॥ ६ ॥

[8]आधिपत्यं तथा स्थानं [9]देशं च नृपसत्तम ।
अतोऽङ्गरचनां तुभ्यं वक्ष्यामि नृप [10]वर्णजाम् ॥ ७ ॥

श्वेतो रक्तस्तथा पीतः कृष्णो हरितमेव च ।
मूलवर्णाः समाख्याताः पञ्च पार्थिवसत्तम ॥ ८ ॥

एकद्वित्रिसमायोगाद्भावकल्पनया तथा ।
[11]संख्यैवान्तरवर्णानां लोके कर्तुं न शक्यते ॥ ९ ॥

अत्यर्थसमयोगित्वाल्लोकेऽहं नृपपुङ्गव ।
विभागं संप्रवक्ष्यामि वर्णयोः श्यामगौरयोः ॥ १० ॥

---

१. A. नाटिकोविदैः २. V. श्रृणु हार्यं. C. श्रृण्व हार्यं. ३. N.S. पुस्तो. ४. N.S. सञ्जीव & सज्जीव ५. C. मृद वा दरुणा. ६. A. इतिभिधीयते. ७. V. समायोगे. ८. C. आदिपत्यं. ९. V. देशे. १०. C. वर्णजात. ११ A. B.C. सांख्यै–.

द्विप्रकारा छविर्यस्मात्सर्वस्येह प्रकीर्तिता ।
गौरी पञ्चविधा तत्र श्यामा द्वादशधा भवेत् ॥ ११ ॥

[१]रुक्मगौरी दन्तगौरी स्फुटचन्दनगौर्यपि ।
[२]शरद्गौरी चन्द्रकवद्गौरी पञ्चविधा स्मृता ॥ १२ ॥

[३]रक्तश्यामा भवेत्पूर्वं मुद्गश्यामा [४]त्वनन्तरम् ।
ततो दूर्वाङ्कुरश्यामा पाण्डुश्यामा च पार्थिव ॥ १३ ॥

[५]ततश्च हरितश्यामा पीतश्यामा ततो [६]भवेत् ।
ततः [७]प्रियङ्गुश्यामा च कपिश्यामा च पार्थिव ॥ १४ ॥

ततो नीलोत्पलश्यामा चाषश्यामा ततः [८]परम् ।
ततो रक्तोत्पलश्यामा घनश्यामा तथा परा ॥ १५ ॥

[९]द्रव्यानुरूपैर्वर्णैस्तु तासां व्यक्तिरुदाहृता ।
रङ्गव्यतिकरैः शोभामधिकृत्य महीयते ॥ १६ ॥

वक्ष्यामि वर्णान्देवानां [१०]मत्वा रूपविनिश्चयम् ।
तत्र येषां न वक्ष्यामि ते कार्या गौरवर्णकाः ॥ १७ ॥

श्यामस्तु वासुकिः कार्यो नागा [११]गौरास्तथापरे ।
दैत्याश्च दानवाश्चैव राक्षसा गुह्यकानुगाः ॥ १८ ॥

पिशाचा [१२]जलसंकाशाः [१३]संमितास्तु विवर्णतः ।
षट्सु द्वीपेषु पुरुषाः [१४]कर्तव्याः कनकप्रभाः ॥ १९ ॥

जम्बूद्वीपस्य वर्षेषु [१५]मुक्त्वैकं भारतं नृप ।
भारतेषु तथा कार्या नानादेशभवास्तथा ॥ २० ॥

पुलिन्दा दाक्षिणात्याश्च प्रायशो वर्णतोऽसिताः ।
शकाश्च यवनाश्चैव पह्लवा [१६]बाह्लिकाश्च ये ॥ २१ ॥

---

१. A. रुक्तगौरी. २. V.A.B. शरद्धन. ३. V. रक्तश्याम्या. ४. V. निरन्तरम्. ५. B. omits ślo. 14. ६. A. परा. ७. V. प्रियङ्गुकुश्यामा. ८. A. परा. ९. A. द्रव्यावुरूपैर्वर्णैस्तु V. द्रव्यानुरूपत्रर्णैस्तु. १०. V. मत्वापतु. ११. V. गौरास्तु द्वापरे. A. रौरास्तथापरे. १२. A.B. जल्माकाल. C. जलसाकाल. १३. V.C. सम्मितानि तु वर्णतः. १४. A. कर्तव्यः. १५. B. मुत्सैकं. १६. C. वालिकाश्चये.

प्रायेण गौराः कर्तव्या [1]उत्तरापथसंश्रयाः ।
[2]पञ्चालाः शूरसेनाश्च तथा ये [3]चात्र मागधाः ॥ २२ ॥

अङ्गा वङ्गाः कलिङ्गाश्च प्रायशो वर्णतोऽसिताः ।
चन्द्रवर्णा द्विजाः कार्या राजन्याः पद्मसन्निभाः ॥ २३ ॥

आपाण्डुरास्तथा वैश्याः श्यामा[ः] शूद्राश्च वर्णतः ।
नानावर्णाः स्मृता भूता गंधर्वाप्सरसस्तथा ॥ २४ ॥

राजानः पद्मवर्णाभा ये चापि सुखिनो [4]नराः ।
कुकर्माणो ग्रहग्रस्ता व्याधितास्तपआश्रिताः ॥ २५ ॥

आयस्त[5](? स)कर्मिणश्चैव असिताः [6]कुलजातयः ।
वर्णः प्रत्यक्षदृष्टस्य कर्तव्यः सदृशस्तथा ॥ २६ ॥

देवगन्धर्वसिद्धानां कुमाराणां च पार्थिव ।
श्म तेषां न कर्तव्यं ये च दीक्षां समाश्रिताः ॥ २७ ॥

दिव्या ये पुरुषाश्चैव तथा विद्याधराश्च ये ।
शृङ्गारिणो नरेंद्राश्च चित्रश्मश्रुधरास्तथा ॥ २८ ॥

शुद्धं तु लिङ्गिनां कार्यं तथामात्यपुरोधसाम् ।
मध्यस्था ये च पुरुषा ये च दीक्षां [7]समाश्रिताः ॥ २९ ॥

अनिर्णीत[8]प्रतिज्ञानां दुःखितानां तपस्विनाम् ।
मुनीनां चिरबद्धानां दीर्घं श्मश्रु प्रकीर्तितम् ॥ ३० ॥

धर्मप्रवृत्तेर्वं(? र्वे)शश्च [9]भवेच्छूद्रो (? च्छुद्धो) नराधिप ।
वणिजां कञ्चुकीयानां ब्राह्मणानां तथैव च ॥ ३१ ॥

राज्ञां विचित्रो वेशः स्याद्वेश्यास्त्रीणां च यादव ।
यथालिङ्गं भवेद्वेशस्तथान्येषां तु लोकतः ॥ ३२ ॥

---

१. A.B.V. उत्तरापथसंश्रया. २. A.C.V. पाञ्चालाः ३. C. चोत्र. ४. A. B.V. जनाः ५. V.—कर्मणश्चैव. B.—कर्मणिश्चैव ६. V.B. कुलजालयः ७. A. समाश्रिता. ८. A. —प्रत्यज्ञानां. ९. A. भवेच्छुद्धौ.

त्रिविधा मुकुटा ज्ञेया देवपार्थिवसंश्रयाः ।
देवानां पार्थिवानां च कर्तव्यास्तु [1]किरीटकाः ॥ ३३ ॥

देवानां सप्तशिखराः पञ्चभिर्भूभृतां तथा ।
त्रिभिश्च शिखरैः कार्या महिषीयुवराजयोः ॥ ३४ ॥

सेनाध्यक्षश्च कर्तव्यः तथैकशिखरो नृप ।
दैत्यदानवयक्षाणां [2]पन्नगानां [3]सरक्षसाम् ॥ ३५ ॥

एकपट्टास्तु विस्तीर्णाः कर्तव्या मुकुटाः शुभाः ।
विद्याधराणां सिद्धानां [4]वानराणां तथैव च ॥ ३६ ॥

ग्रन्थिमन्तस्तु कर्तव्या मुकुटास्तु प्रयोक्तृभिः ।
देवदानवगंधर्वाः कृष्णपक्षाः प्रकीर्तिताः ॥ ३७ ॥

दैत्यदानवयक्षाश्च [5]पिशाचा नागराक्षसाः ।
हरिश्मश्रुकचाः कार्यास्तथा पिङ्गेक्षणा नृप ॥ ३८ ॥

कञ्चुकीयाश्च कर्तव्यास्तथा शुक्लशिरोरुहाः ।
अमात्यकञ्चुकीयानां तथा श्रेष्ठपुरोधसाम् ॥ ३९ ॥

वेष्टनापट्ट[6]बद्धानि प्रतिशीर्षाणि कारयेत् ।
[7]पिशाचोन्मत्तभूतानां तापसानां तथैव च ॥ ४० ॥

अनिस्तीर्णप्रतिज्ञानां लम्बकेशं भवेच्छिरः ।
बालानामपि कर्तव्यं [8]शिखण्डक[9]विभूषणम् ॥ ४१ ॥

जटाजूटयुतं कार्यं मुनीनामपि पार्थिव ।
चेटानामपि कर्तव्यं [10]त्रिशिरः[11]खण्डमेव च ॥ ४२ ॥

विदूषकस्य खलतिस्स्यात्काकपदमेव वा ।
शेषाणामर्थयोगेन शेषजाति[12]समाश्रयम् ॥ ४३ ॥

---

१. A.B.C. किरीट्यः २. A.C. पन्नगाणां. ३. A.C. सराक्षसाम्. ४. N.S. चारणानां. ५. B.V. पिशाच– ६. A. –बन्धानि. ७. V. (f.) पिशाचो मतु (f. 2) पिशाचोर्भ्मतु. ८. V. शिखिण्ड–. ९. C. विभूषितम्. १०. A.C. त्रिशरः. ११. A.B.C. खण्डमेव वा. १२. A.B.C. समाश्रयाम्.

[1]सज्जी( ? सञ्जी )व इ( ? मि )ति यत्प्रोक्तं तस्य वक्ष्यामि लक्षणम् ।
प्रवेशस्तु तिरश्चां वै सज्जी( ? ञ्जी )व इति संज्ञितः ॥ ४४ ॥

तेषां [2]पुस्तेन कर्तव्या प्रकृतिः पुरुषान्तरा ।
तथैवायुधहस्तानां कर्तव्या हेतवः( ? यः ) शुभाः ॥ ४५ ॥

एवं लोकोपचारेण स्वबुद्ध्या विभवेन च ।
नाट्योपकरणा[3]नीह यथावत्परिकल्पयेत् ॥ ४६ ॥

हेति[4]प्रमोक्षो न तु रङ्गमध्ये कार्यो भवे[5]त्पार्थिववंशमुख्य ।
आहार्यमेतत्कथितं समासाद्वक्ष्याम्यतश्चाङ्गिकमेव तुभ्यम् ॥ ४७ ॥

इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे आहार्याभिनयो नाम ॥२७ ॥

---

१. N.S. सञ्जीव २. V.A.B. प्रस्तेन. ३. A. —नीहं. ४. A.B.C.–प्रमोक्षं.
५. A.—त्पार्थिवं.

## अष्टविंशोऽध्यायः ।

मार्कण्डेय :—

अतः परं प्रवक्ष्यामि सामान्याभिनयं तव ।
तस्मिन्कार्यः प्रयत्नस्तु नाट्यान्तर( ? ट्यं तत्र )प्रतिष्ठितम् ॥ १ ॥

शब्दः स्पर्शश्च रूपं च रसो गन्धस्तथैव च ।
इन्द्रियाणीन्द्रिया[1]र्थांस्तु [2]भावेनाभिनयेद् बुधः ॥ २ ॥

कृत्वा साचीकृतां दृष्टिं शिरः किञ्चिन्नतं भवेत् ।
तर्जनी कर्णदेशे तु शब्दं त्वभिनयेद् बुधः ॥ ३ ॥

किञ्चिदाकुञ्चिते नेत्रे [3]कृत्वोत्फुल्लां तु नासिकाम् ।
एकश्वासो भवेच्चापि गन्धमेवं विनिर्दिशेत् ॥ ४ ॥

इन्द्रियार्थास्तु पञ्चैते त्रिविधाः परिकीर्तिताः ।
इष्टास्तथा ह्यनिष्टाश्च मध्यस्था नृपसत्तम ॥ ५ ॥

गात्रप्रह्लादनेनेह तथा पुलकितेन च ।
नितान्तास्रक्रियाभिश्च सर्वमिष्टं निरूपयेत् ॥ ६ ॥

परावृत्तेन [4]शिरसा तथा चानेन [5]चक्षुषा ।
नेत्रनासाञ्चितत्वेन [6]ह्यनिष्टमिति निर्दिशेत् ॥ ७ ॥

[7]मध्यस्थेनैव भावेन मध्यस्थकरणं भवेत् ।
[8]आत्मानुभावी योऽर्थस्स्यादात्मस्थ इति संज्ञितः ॥ ८ ॥

परार्थवर्णनं यच्च परस्थेति च कीर्तितम् ।
उत्तानौ तु करौ कृत्वा स्वस्तिकौ पार्श्वसंस्थितौ ॥ ९ ॥

उद्वाहितेन शिरसा तथा [9]चोर्ध्वनिरीक्षणात् ।
प्रभातं गगनं रात्रिं प्रदोषं दिवसं तथा ॥ १० ॥

---

१. A —र्थैस्तु. २. C. भावनोभिनये— ३. A. कृतोत्फुल्लां. B. कृतोत्फुल्लं तु नामिकाम्. C.V. त्वनामिकाम्. ४. C. शरसा. ५. V.B. चक्षुषाः A. चाक्षुषा. C. चक्षुषः ६. A.B. ह्यनिष्टिमिति— ७. A.B. मध्यस्थे चैव. ८. A.B. आत्मानुभावे. ९. V. चोर्ध्वनिरीक्षणम्.

[१]ऋतून्घनान्धरांचैव (? कारांश्च) [२]विस्तीर्णांश्च जलाशयान् ।
[३]दिशो ग्रहान्सनक्षत्रान्यच्चान्यत्स्व(? ख)गतं नृप ॥ ११ ॥

तस्य त्वभिनयः कार्यो नानादृष्टिसमन्वितः ।
एभिरेव करैर्भूयः स्तनैश्च शिरसा तथा ॥ १२ ॥

अधोनिरीक्षितेनाथ [४]भूमिष्ठान्संप्रयोजयेत् ।
चन्द्रं ज्योत्स्नां मु(? सु)खं वायुं स्पर्शेनाभिनयेद् बुधः ॥ १३ ॥

वस्त्रा(? स्त्रा)त्र[५]गुण्ठनात्सूर्यं रजोधूमानलांस्तथा ।
भूमितापमथोष्णं च [६]कुर्याच्छायाभिलापतः ॥ १४ ॥

ऊर्ध्वैकेकरदृष्ट्या तु मध्याह्नस्थं दिवाकरम् ।
उदयास्तगतं चैव विस्मयार्थे प्रदर्शयेत् ॥ १५ ॥

चन्द्रं विस्मितया दृष्ट्या तथा ताराश्च दर्शयेत् ।
[७]सुख(? खे) स्पृश्यानि सर्वाणि(? गात्राणि)रोमाश्चं न तु दर्शयेत् ॥१६॥

दुःखानि च [८]तथोद्वेगैर्मुखस्य तु विकूणनैः ।
[९]गम्भीरोदात्तसंयुक्तानर्थान्सौष्ठवसंयुतान् ॥ १७ ॥

( साटोपैश्च सवर्गे (? गर्वै)श्च गात्रैः सौष्ठवसंयुतैः । )
यज्ञोपवीतदेशस्थमवा(? रा)लं हस्तमादिशेत् ।
हारावहारयोगेषु स्रग्दामस्य च दर्शने ॥ १८ ॥

भ्रमरेण प्रदेशिन्या दृष्टेः परिगमेन च ।
[१०]अलपद्म(? द्मां)कपीडायास्सर्वार्थग्रहणं भवेत् ॥ १९ ॥

[११]श्रव्यं श्रवणयोगेन [१२]दृश्यं दृष्टिविलोकनैः ।
आत्मसंस्थं परस्थं वा मध्यस्थं वा विनिर्दिशेत् ॥ २० ॥

---

१. N.S. ऋतून्घनान्धकारांश्च. २. A. विस्तीर्णा च जलाशयान्. B. विस्तीर्णं च जलाशयाम्. ३. A.B. दिशो ग्रहान्सनक्षत्रान्यच्चा–V.C. दिशो ग्रहान्सुनक्षत्रायच्चा–N.S. दिशो ग्रहश्चान्सनक्षत्रा[न्?]दृष्टयश्च. ४. A. भूमिष्ठां. ५. V. (f.) –गुण्ठनात्पूर्वं. ६. V. कुर्याच्छ्वासाभिलापतः; ७. B. मुख–. ८. V. तथोद्वेगं मुखस्य. B. तथोद्वेगंर्दुखस्य. ९. A. गम्भीरोदात्तु. १०. A.B.V. अलंपद्माक. ११. B. द्रव्यं. C. धन्यं. १२. A.B. दृष्टं.

विद्युदुल्का घनरवो [१]विस्फुलिङ्गार्चिषस्तथा ।
[२]स्रस्ताङ्गाक्षिनिमेष(?षै)श्च [३]तेऽभिनेयाः प्रयोक्तृभिः ॥ २१ ॥

मुखावगुण्ठनं कार्यं भ्रमरादिनिवारणे ।
कृत्वा स्वस्तिकसंस्थानौ पद्मकोशावधोमुखौ ॥ २२ ॥

सिंहर्क्षवानरादीनां कर्तव्यं तु निरूपणम् ।
स्वस्तिकौ त्रिपताकौ तु गुरूणां [४]पादवन्दने ॥ २३ ॥

खट[५]कास्वस्तिकौ चापि प्रतोदग्रहणे भवेत् ।
[६]एकाद्यानां दशान्तानां संख्या त्वङ्गुलिभिर्भवेत् ॥ २४ ॥

दशाख्या च शताख्या च स्थानसंख्या ततः परम् ।
पताकाभ्यां तु हस्ताभ्यां वाचा चाभिनयो भवेत् ॥ २५ ॥

छत्रध्वजपताकाश्च विज्ञेया दण्डधारणात् ।
नानाप्रहरणं चैव विज्ञेयमिह वा(?धा)रणैः ॥ २६ ॥

एकचित्तो ह्यधोदृष्टिः शिरः किञ्चिन्नतं भवेत् ।
सव्यहस्तश्च संदंशो स्मिते [७]ध्याने वितर्किते ॥ २७ ॥

उद्वाहितं शिरः कृत्वा हंसपक्षं प्रदक्षिणम् ।
अपत्यरूपणे [८]कार्यमुच्छ्रायं च प्रयोक्तृभिः ॥ २८ ॥

अरालं च शिरःस्थाने [९]समुद्वाह्या(?ह्यं) च वामतः ।
गते निवृत्ते ध्वस्ते च [१०]श्रान्ते वाक्यं(?क्ये) नियोजयेत् ॥ २९ ॥

जितेन्द्रियतया युक्तं प्रसन्नवदनं तथा ।
विचित्रकुसुमालोकां शरदं तु निरूपयेत् ॥ ३० ॥

गात्रस्य [११]कम्पनात्तज्ज्ञैस्तथा [१२]चाग्न्यभिलाषतः ।
हेमन्तस्त्वभिधेयस्स्यात्पुरुषैर्मध्यमाधमैः ॥ ३१ ॥

---

१. V. विस्फुलिङ्गविषस्तथा २. A.B. स्रस्ताङ्गोक्षिनिमेषश्च. V. प्रतोदोऽक्षिनिमेषश्च. ३. तेभिनीयाः. ४. A. यादवन्दने. ५. C. खटकास्वस्तिका. ६. A. एकास्यानां. ७. C.V. ध्याने वितङ्किते. ८. V. कार्यमुश्वायं C. कार्यमुञ्छ्रायां. ९. V. (f.) समुद्वाप्स्यातु. १०. A.B.V. श्रान्तं. ११. V. (f.) कम्पनात्तु ज्ञैः तथा. C. कम्पनात्यज्ञैस्तथा. १२. V. चान्याभिलाषितः. C. चान्यभिलाषतः

शिरोदन्तौष्ठकम्पेन गात्रसङ्कोचकेन च ।
कूजितैश्च [1]ससीत्कारैः [2]शीतस्याभिनयोऽधमे ॥ ३२ ॥

[3]अवस्थान्तरसंप्राप्तैर्मध्यमाधिकयोस्तथा ।
शीतस्याभिनयेनैव शिशिराभिनयो भवेत् ॥ ३३ ॥

प्रसादजननारम्भैरुपभोगैः ससंभ्रमैः ।
वसन्तस्त्वभिनेतव्यो नानापुष्पप्रदर्शनात् ॥ ३४ ॥

स्वेदापमार्जनाच्चापि [4]भूमिपातोपजीवनैः ।
उष्णस्य वायोः स्पर्शैश्च ग्रीष्मस्याभिनयो भवेत् ॥ ३५ ॥

गम्भीरनादश्रवणात्प्रावृष्यभिनयो भवेत् ।
वचसाभिनयः कार्यो ऋतूनां सुखदुःखयोः ॥ ३६ ॥

स्वभावाभिनये स्थानं पुंभिः कार्यं तु वैष्ण[5]वम् ।
[6]आयतं चावहित्थं च स्त्रीभिः कार्यं स्वभावतः ॥ ३७ ॥

धैर्यशीलाङ्गसम्पन्नं पुरुषाणां विचेष्टितम् ।
[7]मृत(?दु)शीलाङ्गहारैस्तु स्त्रीणां कार्यं विचेष्टितम् ॥ ३८ ॥

आलिङ्गनं तु कर्तव्यं स्मितरोमाञ्चसंयुतम् ।
रोमाञ्चेन तु [8]हर्षः स्यात्क्रोधमुद्वृत्तचक्षुषा ॥ ३९ ॥

ईर्ष्या[9]क्रोधस्तु कर्तव्यो माल्याभरणवर्जितम् ।
शिरसः [10]कम्पनाच्चैव मर्मभङ्गैस्तथैव च ॥ ४० ॥

अधोमुखः सनिःश्वासो दुःखं संदर्शयेन्नरः ।
भूमिहस्ताभिघातेन स्त्रीणां [11]स्याद्रुदितेन तत् ॥ ४१ ॥

[12]आनन्दा‌त्ति(?र्ति)समुद्भूतं रुदितं द्विविधं स्मृतम् ।
हृष्टेन [13]चाप्यहृष्टेन [14]तन्मुखेन निरूपयेत् ॥ ४२ ॥

१. V. (f.) ससीत्करै. २. C. शीतस्याभिनयो धसे. V. शीतस्याभिनयो भवेत् । ३. V. omits अवस्थांतर...भवेत् । ४. V. भूमिपांतोपजीविन: ५. A.B. वैष्णवैः ६. V.B. आयुसं चावहित्थं. ७. A. मृतशूलाङ्ग. ८. A.B.C. हर्षं. ९. A.B.C. क्रोधं तु. १०. A.B.V. कम्पनं. ११. A. स्याद्रुदितं तु तत्. १२. A. आनन्दान्ति. B.V. आनन्देति. १३. B. चापिहृष्टेन. १४. B.C.V. तं मुखेन.

सम्भ्रमावेगचेष्टाभिः पुरुषाणां भयं भवेत् ।
त्रातुरन्वेषणादेव उच्चैराक्रन्दितेन च ॥ ४३ ॥

नरालिङ्गनतश्चैव भयं कार्यं भवेत्स्त्रियः ।
त्रिपताकाङ्गुलीभ्यां तु चलिताभ्यां प्रयोजयेत् ॥ ४४ ॥

शुकश्च शारिका चैव सूक्ष्मा ये [1]चैव पक्षिणः ।
शिखिसारसहंसाद्यास्स्थ*( ? स्थू )ला ये च स्वभावतः ॥ ४५ ॥

पक्षाङ्गहारैर्द्विविधैस्तेषामभिनयो भवेत् ।
भूताः पिशाचा यक्षाश्च दानवा राक्षसास्तथा ॥ ४६ ॥

अङ्गहारैर्विनिर्देश्याः प्रत्यक्षा न भवन्ति ये ।
प्रत्यक्षा अभिनेयाः स्युस्तथोद्वेगैस्सविस्मयैः ॥ ४७ ॥

देवान्प्रणामकरणैः प्रत्यक्षे तु नराधिप ।
परोक्षे विविधैश्चिह्नैस्तथानुकरणैः शुभैः ॥ ४८ ॥

सव्योत्थितेन हस्तेन त्वरालेन शिरः स्पृशेत् ।
नरेऽभिवादनं [2]ह्येतत्कपोतेन तथा स्त्रियाः ॥ ४९ ॥

महाजनं [3]सखीवर्गं विटधूर्तजनं तथा ।
परिमण्डलसंज्ञेन हस्तेनाभिनयेद् बुधः ॥ ५० ॥

प्रवृत्ता( ? पर्वता )न्प्रांशुयोगेन वृक्षांश्चैव [4]समुच्छ्रितान् ।
प्रसारिताभ्यां [5]बाहुभ्यां चोत्क्षिप्ताभ्यां प्रदर्शयेत् ॥ ५१ ॥

समूहं सुमहत्सेनां बहुविस्तीर्णमेव च ।
पताकाभ्यां तु हस्ताभ्यां चोत्क्षिप्ताभ्यां प्रदर्शयेत् ॥ ५२ ॥

शौर्यं च [6]धैर्यं दर्पं च गर्वमौदार्यमुच्छ्रयम् ।
ललाटस्थानसंस्थेन त्वरालेन प्रदर्शयेत् ॥ ५३ ॥

[7]प( ? व )क्षोदेशपदाविद्धौ करौ तु मृगशीर्षकौ ।
विस्तीर्णप्रद्रुतोत्क्षेपौ योज्यौ यत्स्यादुपावृतम् ॥ ५४ ॥

---

१. C. चापि. २. C.V. ह्येतत्कपोलेन. ३. V. सखिवरं. ४. V.C. समुत्थितान्. ५. B. बाहुभ्यां तु हस्ताभ्यां. ६. B.C.V. धैर्यदर्पं. ७. V. प्रज्ञो देहामदाविद्धौ. C. पक्षो देहापदाविद्धौ.
* N.S. स्थूला.

अधोमुखोत्तानतलं हस्तं किञ्चित्प्रसारितम् ।
कृत्वा [1]चाभिनयेद्व च(?द् ध्वान्तं)[2]बिलग्राहं गृहं गृह(?गुहा)म् ॥५५॥

कामार्ताञ्ज्वरितांश्चैव शापोपहतचेतसः ।
तेषामभिनयः [3]कार्य उच्छ्वासैः कम्पनैस्तथा ॥ ५६ ॥

[4]प्रत्यक्षोऽभिनयः कार्यो दोलायाः परिदोलने ।
आकाशर(?व)चनानीह वक्ष्याम्यात्मगतानि [5]तु ॥ ५७ ॥

अपवारितकं चैव जनान्तिकमथापि च ।
परसंभाषणं यत्स्यात्तदाकाशवचः स्मृतम् ॥ ५८ ॥

अन्यैरश्रवणीयं तु जनान्तिकमिहोच्यते ।
अपवारितकं कर्णे पुनरुक्तं प्रचक्षते ॥ ५९ ॥

हस्तमन्तरितं कृत्वा त्रिपताकं प्रयोक्तृभिः ।
जनान्तिकं प्रयोक्तव्यमपवारितकं तथा ॥ ६० ॥

[6]स्वप्नायिते चाभिनयं वाचा गद्गदया भवेत् ।
वृद्धानां [7]योजयेत्पाठ्यं गद्गदस्खलिताक्षरम् ॥ ६१ ॥

असमाप्ताक्षरं चैव बालानां तु [8]कलस्वनम् ।
दीर्घोच्छ्वासयुतं ग्लानं व्याधितानां तु योजयेत् ॥ ६२ ॥

उच्छ्वासेन तु दीर्घेण मृत्युकालं तु नाटयेत् ।
[9]गात्रनिस्पन्दभावेन मृतस्याभिनयो भवेत् ।

सात्त्विकाभिनयं [10]वक्ष्ये रसभावेषु पार्थिव ॥ ६३ ॥

एतावदेवाभिनये तु तुभ्यं
शक्यं मया पार्थिवमुख्य वक्तुम् ।

---

१. B.C.V. चाभिनयो. २. C.V. बिलग्राहं गृहं गृहम्. A.B. बिलग्राहंग्रहं ग्रहम्. ३. A. कार्यश्चोच्छ्वासैः. ४. B.C.V. प्रत्यक्षाभिनयः. ५. V. च. ६. V.B. स्वप्नायते चाभिनये. ७. V. योजयेत्पाठ्यं. ८. B. कलंबनम्. ९. A. गात्रनिःस्पन्द– १०. A. वक्ष्येन स्वभावेषु.

नाट्यं हि विश्वस्य यतोऽनुकारं
कृत्स्नं ततो वक्तुमशक्यमीश ॥ ६४ ॥

इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे सामान्याभिनयो नाम ॥ २८ ॥

## एकोनत्रिंशोऽध्यायः ।

मार्कण्डेय :—

अतः परं प्रवक्ष्यामि [1]गतीनां लक्षणं तव ।
[2]स्वभावेनोत्तमगतौ कार्यं जानु कटीसमम् ॥ १ ॥

युद्धचारी[3]प्रचारेषु जानु स्तनसमं न्यसेत् ।
[4]ज्वरार्ते च क्षुधार्ते च तपःश्रान्ते रुजान्विते ॥ २ ॥

विक्रु(? स्मि)ते चावहित्थे च तथौत्सुक्यसमन्विते ।
शृङ्गारे चैव शोके च स्वच्छन्दगमने तथा ॥ ३ ॥

एतेष्वेव तु सर्वत्र स्थिरा कार्या गतिर्बुधैः ।
अस्वस्थे [5]कम्पिते चैव भये वित्रासिते तथा ॥ ४ ॥

आवेगे चैव हर्षे च [6]कार्ये चातित्वरान्विते ।
अनिष्टश्रवणे चैव क्षेपे चाद्भुतदर्शने ॥ ५ ॥

अपि चात्ययिके कार्ये तथा चैवारिमार्गणे ।
[7]अपराधा(? द्धा)नुसारेण(? सरणे) श्वापदानुगतौ तथा ॥ ६ ॥

एवंविधेषु कार्येषु गतिं शीघ्रां प्रयोजयेत् ।
गतिः शृङ्गारिणी कार्या स्वस्थकामितसम्भवे ॥ ७ ॥

दूतीदर्शितमार्ग(? र्गै)स्तु [8]ह्यवेशपरिक्रमे ।
[9]ससौष्ठवसमायुक्तैर्लयतालव[10]शानुगैः ॥ ८ ॥

पादयोरनुगौ चापि हस्तौ कार्यौ प्रयोक्तृभिः ।
प्रच्छन्नकामिते [11]गच्छेन्न चात्यर्थं विभूषितः ॥ ९ ॥

[12]कृष्णवासाः पदैर्मन्दैः शब्दाशङ्की मुहुर्मुहुः ।
वेपमानशरीरश्च शङ्कितः प्रस्खलन्मुहुः ॥ १० ॥

---

१. V.A.B. गीतानां. २. V.C. स्वभावेनोत्तुङ्गगतौ. N.S. स्वभावेतुत्तमगतौ. N.S. (f) स्वभावैरुत्तमगतौ. ३. A.–प्रचारीषु. N.S. प्रयोगेषु. ४. V.B.C. ज्वरान्ते च क्षुधान्ते ५. A. कमितं. N.S. कामिते. ६. V.C. कार्यं यच्चत्वरान्वितम्. B. कार्यं यश्चात्वरान्विते. ७. N.S. अपराध्वानुसरणे N.S. (f.) अमराद्धानुसरणे. ८. V. ह्यवेशपरिक्रमे. V. (f.) युद्धवेष-परिक्रमे. ९. A. सुसौष्ठव– १०. B.C.V. –वशोनुगैः ११. V.B. गच्छन्न. १२. V.A. कृष्णवासः.

अङ्गस्वभाव[1]नेपथ्यो रौद्रस्तु त्रिविधो मतः ।
रुधिरक्लिन्नदेहस्तु [2]पद्मान्त्राङ्गधरस्तथा ॥ ११ ॥

बह्वायुधधरो रौद्रो नेपथ्येन प्रकीर्तितः ।
[3]बहुबाहुमुखो रौद्रो नानाप्रहरणाकुलः ॥ १२ ॥

स्थूलाङ्गो विकृतः प्रांशुरङ्गरौद्रः प्रकीर्तितः ।
[4]रूक्षो बि( ? बी )भत्सनकथो निर्घृणस्तु स्वभावतः ॥ १३ ॥

त्रिविधस्यापि रौद्रस्य चतुस्तालान्तरा गतिः ।
अहृद्या तु मही यत्र श्मशानरण[5]संकुला ॥ १४ ॥

आसन्ना च विकृष्टा च तत्र बीभत्सिका गतिः ।
गतिर्वीरे च कर्तव्या पादविक्षिप्तसंयुता ॥ १५ ॥

विस्मये चैव हर्षे च विक्षिप्तपदविक्रमा ।
गतिः स्थिरपदा प्रोक्ता तथैव [6]करुणे रसे ॥ १६ ॥

न तत्र सौष्ठवं कार्यं न प्रमाणं तथाविधम् ।
विघूर्णितशरीरा च स्तब्धा च शिथिला गतिः ॥ १७ ॥

गाढप्रहारिते कार्या गतिः पिण्डितविग्रहा ।
द्रुता भयानके कार्या स्तब्धा कार्यवशादथ ॥ १८ ॥

सत्त्वे तु विकृते दृष्टे [7]गतिर्विस्फारितेक्षणा ।
तापसानां भवेन्मन्दा युगमात्रेक्षणा गतिः ॥ १९ ॥

हस्तसंस्पर्शना[8]न्मन्दा त्वन्धकारे गतिर्भवेत् ।
रथस्थस्यापि कर्तव्या [9]गतिर्मन्दपदैरथ ॥ २० ॥

समपादं [10]बुधः स्थानं कृत्वा रथगतिं व्रजेत् ।
धनुर्गृहीत्वा हस्तेन तथा चैकेन कूबरम् ॥ २१ ॥

---

१. A.C.– नेपथ्य. २. B. पद्मांताङ्गधरस्तथा. ३. A. omits. बहुबाहुमुखो...कुलः । V. omits. बहुबाहुमुखो ... प्रकीर्तितः । ४. A.B.V. रूक्षो निर्भत्सनकथो. ५. A.B.–रणमङ्गला. ६. A B.V. करुणा. ७. V.B. गतिर्विस्फुरितेक्षणा. ८. V.–न्मन्दाप्यन्धकारं ९. A.B. गति-र्दूरपदैरथ. १०. V.C. बुधस्थानं.

सूतश्चास्य भवेदेव प्रतोदग्रहणाकृतिः ।
विमानस्थस्य कर्तव्या [1]गतिरान(? र्या स्य)न्दिनी भवेत् ॥ २२ ॥

आरोहाश्चावरोहाश्च [2]ऊर्ध्वाधोवीक्षणैर्गतैः ।
मण्डलावर्तनैः [3]कार्यं चाकाशगमनं तथा ॥ २३ ॥

ऋज्वा[4]गतोन्नतैः [5]पादैर्भ्रंशमानस्तु खाद्भवेत् ।
उच्छ्रितारोहणं [6]कार्यमपक्रान्तपदैरथ ॥ २४ ॥

तथावतरणं कार्यं शङ्कितैरिव [7]संहतैः ।
उत्क्षिप्तपदसञ्चारा सलिले च गतिर्भवेत् ॥ २५ ॥

उत्क्षिप्तहस्तसञ्चारा पादपारोहणे भवेत् ।
सूचीविद्धैरपक्रान्तैः [8]पदैः पार्श्वगतैरथ ॥ २६ ॥

अङ्कुश[9]ग्रहणान्नागं खलीनग्रहणाद्धयम् ।
प्रग्रहग्रहणादेव अन्येषां कारयेद्गतिम् ॥ २७ ॥

[10]अश्वयाने गतिः कार्या वैशाखस्थानकेन ह ।
पन्नगानां गतिः कार्या [11]पादैः स्वस्तिकसंयुतैः ॥ २८ ॥

विटस्यापि तु कर्तव्या गतिर्ललितविक्रमा ।
कञ्चुकीयस्य कर्तव्या कम्पिता स्खलिता गतिः ॥ २९ ॥

विष्टम्भन[12]गतिप्राणा कृशस्यापि गतिर्भवेत् ।
व्याधिग्रस्तस्य च तथा तपःश्रान्तस्य चैव हि ॥ ३० ॥

[13]दीर्घाध्वनि गतस्यापि शनैर्मन्दपरिक्रमा ।
मत्तस्य तु गतिः कार्या स्खलिता पार्श्वयोर्द्वयोः ॥ ३१ ॥

उन्मत्तस्यापि कर्तव्या गतिस्त्वभिनय(? नियत)क्रमा ।
असम्बद्धप्रलापी स्यान्मलिनो लोमशस्तथा ॥ ३२ ॥

विकलानां गतिः कार्या यथाकार्यानुरूपतः ।
स्थूलदेहस्य कर्तव्या गतिर्देहानुकर्षिणी ॥ ३३ ॥

---

१ A. गतिरानन्दिते. २. A. कार्या ऊर्ध्वाधोवीक्षणैः B.C. कार्या ऊर्ध्वाधवीक्षणैः ३. V.C. कार्यमाकाशगमनं. ४. C. –गतोन्नतो पादै– ५. –पादैर्भ्रश्यमानस्तु. ६. C. कार्यमपक्रान्तैः पदैरथ. ७. V.B. संहितैः. A. संहतै. ८. A. पादैः. ९. B. ग्रहणाद्धयं. १०. B. अश्वयागे. ११. V. पदैः १२. A. –गतिः प्राणा. १३. A.B.C. दीर्घाध्वान–

विदूषकस्य कर्तव्या गतिर्हास्यप्रदा तथा ।
स्वभावजातं विन्यस्य कुटिलं वामके करे ॥ ३४ ॥

गतौ र(? न)मेत चेटानां [1]दृष्टिश्चार्ध(? र्थ)विचारिणी ।
नानादेश[2]समुत्थानां पुरुषाणां स्वभावतः ॥ ३५ ॥

श्वापदानां पशूनां च गतिः कार्या नराधिप ।
[3]शेषाणामर्थयोगेन स्थानकानि प्रयोजयेत् ॥ ३६ ॥

धैर्योपपन्ना गतिरुत्तमानां
मध्या गतिर्मध्यमसंमितानाम् ।
द्रुता गतिश्च प्रचुराधमानां
लयत्रयं सत्त्ववशेन योज्यम् ॥ ३७ ॥

रङ्गे विकृता तु नृपप्रधान
गतागतैः [4]पादगतिप्रचारैः ।
[5]कार्या वशादेव गृहस्य नित्यं
समीक्ष्य रङ्गं तु यथानुरूपम् ॥ ३८ ॥

स्त्रीणां गतिः स्याल्ललितप्रचारा
धीरा नराणां च तथोद्धता स्यात् ।
गतिप्रचारोऽर्थवशेन योज्य-
श्चैतावदुक्तं तव राजसिंह ॥ ३९ ॥

वयोनुरूपः प्रथमस्तु वेशो
वेशानुरूपश्च गतिप्रचारः ।
गतिप्रचारानुगतं च [6]पाठ्यं
पाठ्यानुरूपोऽभिनयश्च कार्यः ॥ ४० ॥

**इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे गतिप्रचारो नाम ॥ २९ ॥**

---

१. V. दृष्टिश्चार्यविचारिणी. २. V.C. –समुद्भूता. ३. C. शेषामर्थयोगेन स्थानिकानि. ४. A.C.V. पादगतिप्रचार ५. A.C. कार्यो. ६. V. नाट्यं नाट्यानुरूपो–Compare N.S. Ad. 13. Ślo. 64.

## त्रिंशोऽध्यायः ।

मार्कण्डेयः—

हास्यशृङ्गार[1]करुणवीररौद्रभयानकाः ।
बीभत्साद्भुतशांताख्या नव[2] नाट्ये रसाः स्मृताः ॥ १ ॥

शान्तो रसः स्वतन्त्रोऽत्र पृथगेव [3]व्यवस्थितः ।
शृङ्गाराद्धि भवेद्धास्यो रौद्राच्च करुणोदयः ॥ २ ॥

वीराच्चैवाद्भुतोत्पत्तिर्बीभत्साच्च [4]भयानकः ।
[5]एतेषामङ्गवर्णाश्च [ देवताश्च नराधिप ] ॥ ३ ॥

शान्तः स्वभाववर्णस्तु रसः प्रोक्तो नराधिप ।
शृङ्गारस्तु भवेच्छ्यामो रक्तो रौद्रः प्रकीर्तितः ॥ ४ ॥

सितो हास्यश्च विज्ञेयः कृष्णश्चैव भयानकः ।
गौरो वीरस्तु विज्ञेयः पीतश्चैवाद्भुतः स्मृतः ॥ ५ ॥

[6]कापोतः करुणश्चैव नीलो [7]बीभत्स एव च ।
[8]हास्यः प्रमथदेवस्तु शृङ्गारो विष्णुदैवतः ॥ ६ ॥

रौद्रो [9]रुद्राधिदेवश्च करुणो यमदैवतः ।
बीभत्सस्य महाकालः कालदेवो भयानकः ॥ ७ ॥

वीरो महेन्द्रदेवस्स्यादद्भुतो ब्रह्मदैवतः ।
शान्तस्य देवो विज्ञेयः परः पुरुष एव च[10] ॥ ८ ॥

शान्तस्य तु समुत्पत्तिर्नृप वैराग्यतः [11]स्मृता ।
स चाभिनेयो भवति लिङ्गग्रहणतस्तथा ॥ ९ ॥

सर्वभूतदयाध्यानमोक्षमार्गप्रवर्तनैः ।
नास्ति यत्र सुखं दुःखं न द्वेषो नापि मत्सरः ॥ १० ॥

---

१. V. —करुणा— २. A.B. नाट्यरसाः. ३. C. विवस्थितः ४. A. भयानकाः
५. A.B.C.V. एतेषामङ्गवर्णानि सात्त्विकोऽभिनयस्स्मृतः ।
N.S. एषां रसानां उत्पत्तिवर्णदैवतनिदर्शनानि अभिव्याख्यास्यामः ।
६. A.B. कपोतः ७. V.C. बीभत्समेव च. ८. C. हास्यप्रथमदेवस्तु. ९. A.B.C. रौद्राधिदैवश्च. १०. A.B.V. तु. ११. C. स्मृतः.

समः सर्वेषु भूतेषु स शान्तः प्रथितो रसः ।
हास्यस्य तु समुत्पत्तिर[1]सम्बद्धप्रलापतः ॥ ११ ॥

असम्बद्धा[2]त्तथा वेशाद्भवतीति विनिश्चयः ।
आत्मस्थश्च परस्थश्च द्विविधः [3]स च कीर्तितः ॥ १२ ॥

आत्मस्थश्च स्वयं हासात्परस्थः परहासनात् ।
उत्तमाधममुख्या(? मध्या )नां त्रिविधः स भवेत्तदा ॥ १३ ॥

[4]ईषद्विकसितैर्गण्डैः कटाक्षैस्सौष्ठवान्वितैः ।
अलक्षितद्विजं चैव उत्तमानां स्मितं भवेत् ॥ १४ ॥

तथा दर्शितदन्त[5]स्तु मध्यमानां प्रकीर्तितम् ।
सास्रं तदधमानां स्यात्सस्वनं च [6]महाभुजाम् (? महीभुज) ॥ १५ ॥

शृङ्गारो द्विविधः प्रोक्तः सम्भोगाद्विरहात्तथा ।
विप्रलम्भकृतस्यात्र निर्वेदोऽभिनयक्रियः ॥ १६ ॥

विप्रलम्भे तु निर्दिष्टाः कामावस्थास्तथा दश ।
चक्षुःप्रीतिर्विनिर्दिष्टा प्रथमायां नराधिप ॥ १७ ॥

मनसश्च तथा सङ्गो द्वितीयायां प्रकीर्तितः ।
स्मरणं च तथा प्रोक्तं तृतीयायां निरन्तरम् ॥ १८ ॥

[7]निद्राभेदश्चतुर्थ्यां तु पञ्चम्यां तनुता तथा ।
व्यावृत्तिर्विषयेभ्यस्तु षष्ठ्यां प्रोक्ता नराधिप ॥ १९ ॥

लज्जाप्रणाशः [8]सप्तम्यामुन्मादस्तदनन्तरम् ।
नवम्यां तु [9]तथा मूर्च्छा दशम्यां मरणं भवेत् ॥ २० ॥

द्वयोरुज्ज्वलयोस्तत्र सम्भोगाभिनयो भवेत् ।
सुख[10]प्रायेष्टसम्पन्नो यत्र माल्यानुलेपकः ॥ २१ ॥

पुरुषप्रमदायुग्मं शृङ्गार इति संज्ञितः ।
शोकाद्भवति राजेन्द्र तथैव [11]करुणो रसः ॥ २२ ॥

---

१. C. —संबन्द्ध— २. B. —त्तथैवेशा. ३. C. परिकीर्तितः. ४. V.C. ईषद्विकम्पितै— ५. V. दन्तंतु. ६. A. महीभुजम्. V. महीभुजाम्. ७. A.B. निद्राछेद— ८. C. सप्तम्यां चोन्माद— ९. B. तदा. १०. B. प्रायोष्ट— ११. A.B.C. करुणा.

[1]त्रस्तगात्रत्वनिःश्वासपरिदेवितरोदनैः ।
मुखवैवर्ण्यशोषैश्च तस्येहाभिनयो भवेत् ॥ २३ ॥

*क्रोधाद्भवति रौद्रस्य रसस्य तु समुद्भवः ।
रक्तत्वनेत्रभ्रुकुटिक्रोधामर्षैः ससाहसैः ॥ २४ ॥

पीडनैः [2]शस्त्रसम्पातैस्तस्येहाभिनयो भवेत् ।
[3]भयाद्भयानकस्येह रसस्य तु समुद्भवः ॥ २५ ॥

†मुखवैवर्ण्यसन्त्रास[4]शोषैरभिनयो भवेत् ।
जुगुप्सया च भवति बीभत्सस्य समुद्भवः ॥ २६ ॥

नासा[5]विकूणनात्तस्य चोद्वेगेन तथैव च ।
आश्चर्येण समुत्पत्तिरद्भुतं तत्प्रकीर्तितम् ॥ २७ ॥

प्रस्फुरिताक्षि[6]रोमाञ्चैरङ्गुलीभ्रमणादिभिः ।
स्वेदेन चाभिनेयस्स्यादद्भुतस्तु तथा रसः ॥ २८ ॥

नाट्यस्य मूलं तु [7]रसः प्रदिष्टो
रसेन हीनं न हि [8]नृत्तमस्ति ।
तस्मात्प्रयत्नेन रसाश्रयस्य
[9]नृत्तस्य यत्नः पुरुषेण कार्यः ॥ २९ ॥

**इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे रसाध्यायो नाम ॥ ३० ॥**

---

१. V. त्रस्तगात्राद्विनिःश्वास– C. त्रस्तगात्रद्वनिःश्वास– २. V.B. शस्त्रसङ्घातै– ३. V. omits. भयाद्भयानक...भवेत्. ४. V. –शेषै– ५. V.C. विघूर्णनार्तस्य. A. –विकुणनार्तस्य. ६. A. रोमाञ्च अङ्गुली. ७. A.B.C. रसं प्रदिष्टं. ८. V. वृत्तमस्ति. ९. V. वृत्तस्य यत्नं.

* उत्साहाध्यवसायादविषादित्वादविस्मयान्मोहात् । विविधादर्थविशेषाद्वीररसो नाम संभवति ॥ ६८ ॥
स्थितिधैर्यवीरगर्वैरुत्साहपराक्रमप्रभावैश्च । वाक्यैश्चाक्षेपकृतैर्वीररसः सम्यगभिनेयः ॥ ६९ ॥

† विकृतरवसत्त्वदर्शनसङ्ग्रामारण्यशून्यगृहगमनात् । गुरुनृपयोरपराधात्कृतकश्च भयानको ज्ञेयः ॥ ७० ॥
गात्रमुखदृष्टिभेदैरूरुस्तम्भाभिवीक्षणोद्वेगैः । सन्नमुखशोषहृदयस्पन्दनरोमोद्गमैश्च भयम् ॥ ७१ ॥
ना. शा. अ. ६ 'निर्णय सागर'

## एकत्रिंशोऽध्यायः ।

मार्कण्डेय :— भावाध्यायमतो वच्मि तन्मे निगदतः शृणु ।
[1]हासाद्याः कथिता भावाः पञ्चाशत्त्वेकवर्जिताः ॥ १ ॥

परचेष्टानु[2]करणाद्धासः समुपजायते ।
स्मितहासाभि(?ति)हसितैरभिनेयः स पण्डितैः ॥ २ ॥

इष्टार्थविषयप्राप्तौ रतिरित्युपजायते ।
सौम्यत्वादभिनेया सा वाङ्माधुर्यादिभिस्तथा ॥ ३ ॥

इष्टबन्धुवियोगेन धननाशेन पार्थिव ।
शोको भवति तस्य स्याद्रुदिताभिनयक्रिया ॥ ४ ॥

क्रोधश्चतुष्प्रकारश्च कर्तव्यो नाट्ययोक्तृभिः ।
रिपुजो गुरुजश्चैव भृत्यजः प्रणयोद्भवः ॥ ५ ॥

निर्यन्त्रितस्स शत्रूणां गुरूणां स्वेदसंयुतः ।
भृत्यानां च दयालु[3]स्स्यात्सास्रुस्स्यात्प्रणयोद्भवः ॥ ६ ॥

कर्मातिशयनिर्वृत्तौ विस्मयो हर्षसंभवः ।
[4]सिद्धिस्थाने त्वसौ साध्यो रोमाञ्चहसनादिभिः ॥ ७ ॥

[5]असम्मोहाभिनिर्वृत्तौ व्यवसायनयात्मकः ।
उत्साहस्त्वभिनेयस्स्यादप्रमादक्रियादिभिः ॥ ८ ॥

स्वापराधसमुद्भूतं भयं नामेह जायते ।
वेपथुत्रासपतनैर[6]भिनेयस्ससंभ्रमैः ॥ ९ ॥

बीभत्सदर्शनाद्यैस्तु जुगुप्सा नाम जायते ।
उद्वेजनैः स हृल्लेखैरभिनेयो विकूणनैः ॥ १० ॥

दारिद्र्येष्टविनाशे च निर्वेदो नाम जायते ।
परस्परविनिःश्वासै[7]स्तस्याभिनयनक्रिया ॥ ११ ॥

---

१. A.B. हास्याद्याः. २. V.C. –करणाद्यद्धास्यमुपजायते. ३. B.–स्स्यात्सास्र– V.C.–स्स्यात्स्त्रीणां च प्रणयोद्भवः ४. A. सिद्धस्थाने. ५. V असौ मोहाभि– ६. V.C.– भिनेयस्य-सम्भ्रमैः ७. C. स्तथाभि–

[1]वान्ते विरक्ते श्रान्ते च ग्लानिः स्यात्तपसा तथा ।
मन्दाक्रमणकम्पाद्यैः क्षामत्वेन च दर्शयेत् ॥ १२ ॥

चौर्यादिभिर्गृहीतस्य शङ्का नामेह जायते ।
आकारावरणं तस्याः कार्यं दिगवलोकनम् ॥ १३ ॥

परापराधसंभूता असूया नाम जायते ।
गुणनाशनविद्वेषैः साभिनेया तथा बुधैः ॥ १४ ॥

म[2]द्योपयोगेन मदो जायते च त्रि[3]भिस्तु सः ।
उत्तमाधममध्यत्वात्पुरुषाणां स्वभावतः ॥ १५ ॥

दृग्भ्रमेणोत्तमानां स्यान्मध्यानां वाक्प्रलापतः ।
अधमानां च पतनैर[4]सम्बद्धपरिक्रमैः ॥ १६ ॥

[5]आयासेनाध्वना चैव श्रमो नामेह जायते ।
गात्रमर्दनवि(? निः)श्वासजृम्भणैस्तत्प्रयोजयेत् ॥ १७ ॥

गर्वे(? र्भे)ण खेदाद्रोगेण ह्यालस्यं स्यात्स्वभावतः ।
तस्य प्रयोगः कर्तव्यः शयनासनसेवनात् ॥ १८ ॥

दौर्गत्येन मनस्तापाद्दैन्यं नामेह जायते ।
*हृदयस्य वितर्केण तस्य त्वभिनयो भवेत् ॥ १९ ॥

[6]अस्थाने तस्करान्दृष्ट्वा त्रासनैर्विविधैस्तथा ।
तत्प्रतीकारशून्यस्य मोहस्समुपजायते ॥ २० ॥

व्यसनेनाभिघातेन वैरानुस्मरणेन च ।
सर्वेन्द्रियाणां मोहेन स तु कार्यः प्रयोक्तृभिः ॥ २१ ॥

स्मरणात्पूर्ववृत्तानां स्मृतिर्नामेह जायते ।
[7]भृशमु(? भ्रुव उ)त्क्षेपणात्तस्याः प्रयोगः कार्यलोलनात् ।

---

१. C. दान्ते. २. A.B. सद्यो– ३. V. त्रिभिस्तथा. ४. A. –सम्बन्ध. ५. V. आयासेनाध्वमनाध्व. ६. V. आस्थाने. ७. A.B.C. omit this verse. *सर्वेन्द्रिया परिहारैर्विविधोऽभिनयो भवेत्तस्य । * ना. शा. ( चौ. सं. सि. ) अ. ७. श्लो. ४९.

(लोकं(? क)वृत्तान्तविज्ञानाद् वृत्ति(? धृति)र्नामेह जायते ॥)
प्रयोज्यो(? ज्या) लब्धभोगेन [1]त्वलब्धस्य [2]विवर्जनात् ॥ २२ ॥

क्रीडा नामेह भवति चापल्याद्धर्षसम्भवा ।
क्रीडनेन [3]प्रयोज्या सा गुरुवाक्यप्रतिक्रमैः ॥ २३ ॥

कृताकार्यस्य राजेन्द्र व्रीडा नामेह जायते ।
अधोमुखेन सा कार्या [4]भूलेखाकरणेन च ॥ २४ ॥

ज्ञेया चपलता राजन् [5]विचार्यक्रियावतः ।
अयमेव प्रयोगस्य तथैव समुदाहृतः ॥ २५ ॥

मनोरथानां [6]लाभेन हर्षो नामेह जायते ।
[7]मुखप्रसादरोमाञ्चप्रस्वेदैर्दर्शयेद् बुधः ॥ २६ ॥

सम्भ्रमाज्जायते राजन्नावेग इति सर्वदा ।
आः [8]शब्दसहसोत्थानैर्दर्शनीयो बुधैस्तु सः ॥ २७ ॥

*विषादस्य समुत्पत्तिः कार्यनाशेन जायते ।
निद्रानिःश्वसि [9]तव्याजैः साभिनेया तथा भवेत् ॥ २८ ॥

उत्कण्ठा[10]कारणैः सर्वैरौत्सुक्यं नाम जायते ।
आलस्यगुरुमात्रत्वे ध्यानेनाभिनयैश्च(? येच्च) तत् ॥ २९ ॥

रात्रिजागरणालस्यमदैर्निद्रेह जायते ।
नेत्राभिमर्दनात्कार्या जृम्भणा गात्रगौरवात् ॥ ३० ॥

अपस्मारस्तु भवति देवादीनां प्रकोपतः ।
निःसंज्ञत्वं समु[11]त्थानं तस्येहाभिनयो भवेत् ॥ ३१ ॥

---

१. A.B.V. अलब्धस्य. २. V. विवर्जितम्. ३. C. प्रयोज्य. ४. B.V. मूले स्वीकरणेन. ५. C.V. विचार्या क्रियावता. ६. C.V. लाभे तु. ७. C.V. सुख–. ८. V. शब्दैः सहसानर्था दर्शनीया बुधैस्तु ते. ९. A.B.C. –व्याधेः. १०. A.B.V. –करणैः. ११. C.V. समुद्धानं.

---

*इष्टं वानिष्टं वा सुखदुःखे वा न वेत्ति यो मोहात् । तूष्णीकः परवशगो भवति स जडसंज्ञितः पुरुषः ॥६६॥
विद्यायौवनरूपादैश्वर्यादथ धनागमाद्वापि । गर्वः खलु नीचानां दृष्टयङ्गविचालनैः कार्यः ॥ ६७ ॥ अ. ७.

ना. शा. (चौ. सं. सि.)

निद्रासमुत्थं सुप्तत्वं स्वपनं तत्र योजयेत् ।
[1]निद्राच्छेदाद्विबोधं(? धे) तु जृम्भणं तत्र योजयेत् ॥ ३२ ॥

विद्याशौर्य[2]धनैश्वर्यैरमर्षो नाम जायते ।
शिरसः कम्पनैस्तस्य कार्यस्त्वभिनयो बुधैः ॥ ३३ ॥

धाष्टर्यजैह्मादिसम्भूतो ह्यवहित्थो भयात्मकः ।
सर्वाङ्गगोपना[3]त्कार्योऽभिनयो नर्तनस्य च ॥ ३४ ॥

चौर्यादि[4]जातमुग्रत्वं कार्यं निर्भर्त्सनेन तत् ।
[5]मतिश्शास्त्रोद्भवा [6]ज्ञेया कार्या शिष्योपदेशतः ॥ ३५ ॥

व्याधिदो(? दों)षसमुत्थस्य (? श्च) ग्लानिः कार्या प्रयोक्तृभिः ।
वातप्रायस्तथोन्मादो यथा ज्ञेयो वियोगजः ॥ ३६ ॥

असच्चेष्टाप्रलापेन तस्याभिनयकारणम् ।
व्याधिभिर्वा प्रहारैर्वा मरणं नाम जायते ॥ ३७ ॥

कर्तव्योऽभिनयस्तस्य मूढेन्द्रिय[7]विचेष्टितैः ।
महाभैरवनादाद्यैस्त्रासस्समुपजायते ॥ ३८ ॥

संक्षिप्ताङ्गप्रकम्पाद्यैस्तस्य त्वभिनयो भवेत् ।
[8]विचारणार्थे संदेहः कार्यो भ्रक्षेपकम्पनैः ॥ ३९ ॥

क्रोधोऽपराधाद्भवति क्रोधाभिनयदर्शनः ।
भयोऽपराधजो ज्ञेयो ह्यभयाभिनयात्मकः ॥ ४० ॥

मनोरथाप्तिजो हर्षो रोमाञ्चेन प्रदर्शयेत् ।
[9]शीतक्रोधश्रमभये रोमाञ्चस्य समुद्भवः ॥ ४१ ॥

स्वरभेदो भयाद्रौक्ष्यात्स्वरभेदेन दर्शयेत् ।
शोकानन्दस[10]मुद्भूतमश्रु स्याद्रोदनेन तु ॥ ४२ ॥

१. B.V. निद्रोच्छेदाद्वि. २. V. धनादिर्थैरमर्षो. A.B. धनाधैर्य अमर्षो. ३. V. –त्कार्यः प्रदानाज्ञोत्तस्य च. ४. V. जातमर्थस्य ग्लानिः कार्या प्रयोक्तृभिः. ५. V. omits मतिः ...प्रयोक्तृभिः । ६. C. –ज्ञेयो. ७. V. विचेष्टैः. ८. A.B.C. विचारणार्थं. ९. C.V. भीत-क्रोधश्च उभये. १०. A. समुद्भूतं अस्नं.

वर्णविरत्वाद्विज्ञेयं वैवर्ण्यं नाट्ययोक्तृभिः ।
वैवर्ण्यं नाभिनेतव्यं प्रयत्नात्तद्धि [1]दुष्करम् ॥ ४३ ॥

ग्लानिः शङ्काभ्यसूया च श्रमश्चपलता तथा ।
रोमाञ्चहर्षे निद्रा च उन्मादो मद एव च ॥ ४४ ॥

[2]स्वेदश्चैवावहित्थं च भावा हास्यरसे स्मृताः ।
[3]आलस्यौग्र्यजुगुप्साभिर्भावा हि परिवर्जिताः ॥ ४५ ॥

उद्भावयन्ति शृङ्गारं रसमास्वा(? सा)द्य संज्ञक(? ज्ञित)म् । *
[4]निर्वेदस्यै(? श्चै)व चिन्ता च [5]दैन्यग्लान्यश्रुभिस्तथा ॥ ४६ ॥

जडता मरणं चैव व्याधिश्च करुणे रसे ।
[6]असम्मोहस्ततोत्साह आवेगो मद एव च ॥ ४७ ॥

[7]क्रोधश्चपलता हर्षो ह्युग्रतारौद्रसम्भवाः ।
अपस्मारस्तथोन्मादो विषादो मद एव च ॥ ४८ ॥

मृत्युर्व्याधिर्भयं चैव भावा बीभत्ससंश्रयाः ।
स्तम्भः स्वेदश्च [8]मोहश्च रोमाञ्चो विस्मयस्तथा ॥ ४९ ॥

[9]आवेगो जडता हर्षोऽसूया [10]चैवाद्भुते रसे ।
स्वेदश्च वेपथुश्चैव रोमाञ्चो गद्गदस्तथा ॥ ५० ॥

मतिश्चैव तथोग्रत्वममर्षो मद एव च ।
रोमाञ्चस्स्वरभेदश्च क्रोधोऽसूया धृतिस्तथा ॥ ५१ ॥

गर्वश्चैव वितर्कश्च वीरे भावा भवन्ति [11]हि ।
ये चान्ये सात्त्विका भावा नानाभिनययोनिजाः ॥ ५२ ॥

रसेष्वेतेषु ते सर्वे विज्ञेया [12]नाट्ययोक्तृभिः ।
बहूनां समवेतानां रूपं यस्य भवेद्बहु ॥ ५३ ॥

---

१. A. दुःकरम्. २. V.C. स्वेदश्चैव वहित्थश्च. ३. V. आलस्योम्यजुगुप्साभिर्भावा– B. आलस्याग्रजुगुप्साभिर्भावा–. ४. V. वेदस्यैव च चिन्ता च. * ना. शा. (F.N.) cf. उद्दीपयन्ति शृङ्गारं रसमासाद्य संज्ञितम् । १०९. अ. ७ ब. पुस्तके. नि. सा. ed. ५. V. दैन्यग्लान्यश्रुपातनम्. A.B. दैन्यग्लान्यस्तु एव च. ६. V. omits असम्मोह...एव च. ७. V. omits क्रोध... सम्भवाः. ८. V. रोमाञ्चो जुगुप्सा विस्मयस्तथा. ९. V. प्रवेगो. १०. V. दैवाद्भुते. ११. V. वै. १२. V. नाट्यकोविदैः.

स मन्तव्यो रसः स्थायी शेषास्स[1]ञ्चारिणः स्मृताः ।
शृङ्गारं त्रिविधं [2]विद्याद्वाङ्नेपथ्यक्रियात्मकम् ॥ ५४ ॥

अङ्गनेपथ्य[3]भावैश्च [4]हास्यरौद्रौ प्रकीर्तितौ ।
धर्मार्थबन्धुघातेन करुणस्त्रिविधः स्मृतः ॥ ५५ ॥

युद्धवीरं दयावीरं दानवीरं तथैव च ।
रसं [5]वीरमिति प्राहुस्तज्ज्ञास्त्रिविधमेव च ॥ ५६ ॥

[6]व्याजत्रासापराधैश्च त्रिधा विद्याद्भयानकम् ।
न ह्येकरसजं काव्यं किञ्चिदस्ति प्रयोगजम्
*भावो वापि रसो वापि प्रवृत्तिर्वृत्तिरेव च ॥ ५७ ॥

एकोनपञ्चाशदिमे समग्रा
[7]भावास्त्र्यवस्था गदिता मया ते ।
युक्त्या च ये यत्र रसे नियुक्ताः
प्रोक्तं तदप्यत्र नरेन्द्रचन्द्र ॥ ५८ ॥

**इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे भावाध्यायो नाम ॥ ३१ ॥**

---

१. A.B.C. –स्सञ्चारिणाः २. V. विद्याद्वा नेपथ्य–. ३. V. –भावश्च ४. B. ह्रास्यरौद्रौ. ५. A. वीरं रिवति. ६. A.B. व्याजास्त्रासा–. ७. V. भावव्यवस्था. *Compare N.S. Ad. 19. Ślo. 64. (N. Sagar edition.)

# द्वात्रिंशोऽध्यायः ।

मार्कण्डेय :— अथातो मुद्राहस्तान्व्याख्यास्यामः ।

[1]वामस्य प्रसारिताङ्गुष्ठस्योपरि यदा [2]कुब्जा तर्जनी भवति तदोङ्कारः । करमध्यगतासु सर्वास्वङ्गुलीषु क्रमात्कुब्जीकृतास्वङ्गुष्ठाद्यासु अ इ उ ए ओ । प्रसारितासु आ ई ऊ ऐ औ । अं मुकुलः । अः मुकुलविशेषः । अङ्गुष्ठमूलगतया परहस्ततर्जन्या क्रमात्कवर्गः सर्वाधः, परं रेखागतया तवर्गः । तदुपरि [3]ब व श त यैः पवर्गः । [4]तर्जन्याद्यस्तु प्रथमपर्वगतया प(? य)वर्गः । अग्रेषु शवर्गः । मध्यमा नखस्पर्शे र(? ह)क्ष इति । अ वासुदेवः । आ सङ्कर्षणः । अं प्रद्युम्नः । अः अनिरुद्धः । अञ्जलिपुरुषः । करयोः परस्परपृष्ठलग्नयोः कनीयस्या कनीयसी चेति, तर्जन्या तर्जनी अङ्गुष्ठेनाङ्गुष्ठ इति तार्क्ष्यमुद्रा । पताकः कुञ्चिताग्रस्तालः । तिर्यक्[5]प्रसारिताङ्गुष्ठो मकरः । कुञ्चिताङ्गुलिरर्धचंद्रः । [6]द्वयशिखरौ कनीयस्यङ्गुल्यग्रलग्नौ । संहताङ्गुष्ठः शङ्खः । अःकारौ संहतौ स्प(? स्पृ)ष्टाङ्गुलौ पद्मः । [7]कुब्जाङ्गुष्ठो लक्ष्मीः । मकरः प्रसारिताङ्गुलिश्शेषः ॥ तदुपरिशिखरे भोगशयनः । अःकार एव प्रसारितम[8]ध्यमाङ्गुलिर्गरुडः । तत्रैव [9]मध्यमाङ्गुलिः शिखरगृहीता गरुडवाहनम् । [10]मध्यमिकयोरङ्गुष्ठयोश्चाग्रयोगे चक्रः । उपर्युपरि कपित्थयोरुपरि चिबुके [11]गदा । कपित्थकुब्ज[12]मध्यमिको हलः । कर्कटके [13]मुसलम् । [14]कपित्थमध्यभ्रष्टाङ्गुलिश्चर्म । [15]कपित्थपृष्ठतलाङ्गुलिः खड्गः । शिखरो मध्यभ्रष्टाङ्गुलिर्धनुः । तर्जनी[16]मध्यमिकाङ्गुष्ठानां संहतानां वियोगाच्छरः । मुकुलसञ्चितकनीनिकः कौस्तुभः । द्वौ शिखरौ पृथग्वनमाला । [17]अःकारौ पृथग्लग्नौ नृसिंहः । शिखरे प्रसारित[18]कनीनिकाधोमुखो वराहः । इ हयशिरः । ओं वामनः । [19]वितस्ति-

---

१. V. बासस्य. २. C.V. कुब्जतर्जनी. ३. A. बवशतयपवर्गः. ४. A. तर्जनाद्यास्तु. ५. A. प्रसारितोङ्गुष्ठो. ६. A. द्वयः. ७. A. कुब्जाङ्गुष्ठौ. ८. V. –मध्यमाङ्गुलिर्ग रुडः. ९. B. –मध्यमाङ्गुल्यः. १०. V. मध्यमानामिकयो–. ११. A. तदा. १२. A. –मध्यमिकौ. १३. V. सुमूलम्. १४. A. कपित्थो. १५. A. कपित्थः. १६. B.C.V. –मध्यमिकोङ्गुष्ठानां. १७. C.V. अकारो पृथग्लग्नो. १८. A.B. कनीनिकोधो १९. V. वितलिस्त्रिविक्रमः.

त्रिविक्रमः । अर्धचन्द्रो मत्स्यः । अधोमुखः कुब्जपताकः कूर्मः । शिखरप्रसारितकनीयानूर्ध्वमुखाङ्गुष्ठो हंसः । पताकः कुब्जकरमध्यो दत्तात्रेयः । कपित्थः परशुरामः । द्वौ शिखरौ युक्तौ दाशरथी । पताकः कृष्णः । त्रिपताको बलदेवः । शिखरो विष्णुः । उत्तानः पताकः पृथिवी । कुब्जः पताकः [1]प्रसारिताङ्गुष्ठः तोयः । अङ्गुष्ठाग्राङ्गुलिर्नखपरिमार्जितोऽग्निः । चलत्पताको वायुः । तिर्यङ्मुष्टिप्रसारिततर्जनीकोऽन्तरिक्षम् । वितस्तिद्वययोगो वर्तुलीकृतोऽर्कः । [2]अनामिकार्धेन वक्रश्चन्द्रः । सर्वासु मुकुलितासु प्रसारिते [3]सहिते मध्यमातर्जनी नरनारायणौ । तत्रैव [4]प्रसारिता अनामिका गुणाः ब्रह्मविष्णुमहेश्वराः । वामस्य [5]प्रसारिताङ्गुले तदुपरि तथाविध एव दक्षिणः कपिलः । [6]चतस्रोऽप्यङ्गुल्यः [7]प्रसृतास्तन्मूले कुञ्चितोऽङ्गुष्ठश्चतुरा(? त्वार)श्च [8]तोयः(? वेदाः) । प्रसारित[9]कनिष्ठिको ऋग्वेदः । [10]सैवानामिकया [11]सह प्रसारितो यजुर्वेदः । चतुरात्मा प्रसारिताङ्गुष्ठः सामवेदः । वेष्ट्यमानास्वङ्गुलीषु करमध्यगमनेन गायत्री । सामवेदोऽधोमुखाङ्गुलिः शिक्षा । सैव दक्षिणदिशि नीता कल्पः । [12]तर्जन्यङ्गुष्ठयोगे व्याकरणम् । शिखरेऽङ्गुष्ठेन तर्जनीमध्यगेन निरुक्तम् । [13]खटकामुखाभ्यां ज्योतिषम् । [14]अधोमुखश्छन्दोविचितिः ।

एता रहस्यमुद्रास्ते मयोक्ता नृपसत्तम ।
अतः परं प्रवक्ष्यामि सामान्याँस्तान्निबोध मे ॥ १ ॥

इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे रहस्यमुद्राध्यायो नाम ॥ ३२ ॥

---

१. A.B.V. प्रसारितोङ्गुष्ठः. २. A.B.C. अनामिकायेन चक्रश्चन्द्रम्. ३. V.B. omit सहिते. ४. V.C. प्रसारिताग्रनासिका. ५. A. प्रसारिताङ्गुलीस्तदुपरि. ६. C. चतस्रोङ्गुल्यः ७. A. B.V. प्रसारितास्तन्मूले. ८. A.B. –ङ्गुष्ठश्चतुरात्मा तयोः. V. –ताङ्गुष्ठश्चान्तरात्मा तोयः. ९. A.C. –कनीनीको. १०. B.C. सेवानामिकया. ११. C. सह सह प्रसारिता. B. सहसमारिता. १२. B. तर्जन्यङ्गुष्ठयोगो. १३. A.B. कटकामुखाभ्यां. १४. A.B.C. अधोमुखश्छन्दो विचितः.

## त्रयस्त्रिंशोऽध्यायः ।

मार्कण्डेय :—

उत्तानं तु करं कृत्वा [1]चतस्रोऽङ्गु[ल्यः] कुञ्चिताः ।
[2]अङ्गुष्ठः पार्श्वतो योज्यो भस्ममुद्रा प्रकीर्तिता ॥ १ ॥

सा तिर्यगुच्छ्रि[3]ताङ्गुष्ठा लिङ्गमुद्रा प्रकीर्तिता ।
अङ्गुल्यस्त्रयः(? तिस्रः) [4]सङ्कोच्य अङ्गुष्ठोपरिसञ्चिताः ॥ २ ॥

तर्जनीं प्रसृतां कृत्वा जटामुद्रा प्रकीर्तिता ।
[5]नेत्रमुद्रा यदा तस्यां नेत्रान्ते तर्जनी भवेत् ॥ ३ ॥

[6]बन्धस्यास्य प्रकुर्वीत चाङ्गुष्ठं प्रसृतं तथा ।
उत्तानं मूर्ध्नि संयोज्यं शशाङ्कं तु विनिर्दिशेत् ॥ ४ ॥

अङ्गुल्यः प्रसृताः सर्वा वर्तुलाः शृङ्गरूपकाः ।
मूर्ध्नि कृत्वा तु तां मुद्रां [7]गोवृषं तु विनिर्दिशेत् ॥ ५ ॥

तिर्यक् कृत्वा तु तं हस्तं सर्वसङ्कुचिताङ्गुलिम् ।
[8]अङ्गुष्ठं मध्यमावेष्ट्य पर्यस्तं तु विनिर्दिशेत् ॥ ६ ॥

[9]कनिष्ठिकां सङ्कुचितामङ्गुष्ठोपरि विन्यसेत् ।
[10]प्रसारयेत्ततस्तिस्रः पट्टिसंज्ञं प्रकीर्तितम् ॥ ७ ॥

कनिष्ठा[11]नामिकामध्ये [12]दीक्षाङ्गुष्ठं [13]प्रकीर्तितम् ।
उत्तानौ तु करौ कृत्वा अन्योन्यान्तरिताङ्गुली ॥ ८ ॥

[14]कनिष्ठिकान्ते चाङ्गुष्ठं अनन्तेति [15]प्रकीर्तिता ।
उत्तानं दक्षिणं हस्तं त्वधो वामं [16]तथोपरि ॥ ९ ॥

---

१. V. चतुरांगुलि. A.B.C. चतस्रोङ्गुलिकुञ्चितम्. २. V. अंगुष्ठपार्श्वतो योज्यौ. ३. V. –च्छ्रितांगुलि लिङ्ग–. ४. V. सकौऽस्याग्रांगुष्ठ. A.B. –स्सङ्कोच्या अङ्गुष्ठो. ५. V. वेत्रमुद्रा. ६. V. बन्धस्थां तु प्रकुर्वीत. ७. A.B. गोकुर्षं. ८. C. अङ्गुष्ठं सावेष्ट्यं...परस्तं...विनिर्दिशेत्. ९. A. कनिष्ठिका संकुचिता अंगुष्ठोपरि. १०. V. omits प्रसारयेत्त...प्रकीर्तितम्. ११. A. –नासिका–. १२. V. दक्षांगुष्ठं. १३. A.B.C. प्रकीर्तिता. १४. A.C. कनिष्ठकान्ते. १५. C. प्रकीर्तितम्. १६. A.B. ननोपरि.

करजान्योन्यसंयोगाद्धर्मस्य परिकीर्तिता ।
सा चैव विपरीता तु ज्ञानस्य [1]परिकीर्तिता ॥ १० ॥

कनिष्ठिके द्वे चाङ्गुष्ठौ [2]युग्मे कृत्वा प्रसारयेत् ।
वैराग्यस्य भवेन्मुद्रा सर्वकर्मकरी शुभा ॥ ११ ॥

पृष्ठे पृष्ठं तु संयोज्य करयोरुभयोरपि ।
[3]कनीन्यङ्गुष्ठयोगेन भवत्यैश्वर्यमेव च ॥ १२ ॥

[4]पद्माकारो भवेद्धस्तः कनिष्ठातर्जनीयुतः ।
[5]चतस्र उच्छ्रिताः कृत्वा पृष्ठेऽन्योन्यं तु योजयेत् ॥ १३ ॥

अङ्गुष्ठावेकतः कृत्वा प्रणालं चैव कारयेत् ।
सकलस्य भवेन्मुद्रा दुष्टानां शमनी शुभा ॥ १४ ॥

त्रयः सङ्कुचिता यत्र कनिष्ठाङ्गुष्ठ[6]केवलाः( ? ) ।
उत्तानं दक्षिणाङ्गुष्ठं वामाङ्गुष्ठेन वेष्टयेत् ॥ १५ ॥

दक्षिणाङ्गुलिभिश्चात्र वामाङ्गुष्ठं तु वेष्टयेत् ।
वामस्याङ्गुलिभिश्चात्र [7]त्वङ्गुलीः परिवेष्टयेत् ॥ १६ ॥

तर्जन्यौ कुञ्चितौ कृत्वा मुद्रा निष्कलरूपिणी ।
उत्तानौ तु करौ [8]कृत्वा अङ्गुष्ठाङ्गुलिकुञ्चितौ ॥ १७ ॥

करमध्यस्थिता [9]ह्येता [10]नखाँस्तासां तु गोपयेत् ।
पृष्ठं पृष्ठे तु संयोज्य [11]त्वङ्गुष्ठौ विन्यसेत्समम् ॥ १८ ॥

मालाकारं ततः कृत्वा देव्या मुद्रा प्रकीर्तिता ।
अङ्गुष्ठोऽङ्गुष्ठके योज्यः [12]कनिष्ठायां कनिष्ठिका ॥ १९ ॥

करमध्ये तु [13]तां( ? ताः ) कृत्वा षडाभ्यामेकतः कुरु ।
सङ्कु( ? ङ्को )च्य तु षडेतानि शक्त्याकारं तु कारयेत् ॥ २० ॥

---

१. V. परिकीर्तितम्. २. V. युग्मी. ३. V. ( f. ) कनीयास्यांगुष्ठयोगेन. C. कनीन्यास्यांगुष्ठयोगेन. ४. A.B.C. पद्माकारं भवेद्धस्तं कनिष्ठातर्जनीयुतम् । ५. C. चतस्र उच्छ्रूता. ६. A. केकलाः. ७. B.C.V. स्वङ्गुली. ८. C. कृत्वौ. ९. C. ह्यतौ. १०. A. नखस्तासां. ११. C. अङ्गुष्ठौ. १२. A.B.C. कनिष्ठा तु. १३. A.B. तान्कृत्वा.

स्कन्दस्य तु स्मृता मुद्रा अभेद्या त्रिदशैरपि ।
अधोमुखं करं कृत्वा तिस्रोऽङ्गुल्यस्तु कुञ्चिताः ॥ २१ ॥

त्रिताला मध्यमा तत्र किञ्चित्सङ्कुचिता भवेत् ।
तर्जन्यां [1]योजयाङ्गुष्ठे दन्ताकारं तु दर्शयेत् ॥ २२ ॥

[2]विघ्नराजस्य मुद्रैषा [3]सर्वविघ्नप्रणाशिनी ।
उत्तानौ प्रसृतौ हस्तौ तर्जन्यङ्गुष्ठ[4]संयुतौ ॥ २३ ॥

अस्य वामौ तु संयोज्य शक्रमुद्रा प्रकीर्तिता ।
[5]सङ्कोच्य [6]करजं मध्ये हस्तयोरुभयोरपि ॥ २४ ॥

प्रसृताङ्गुष्ठ[7]मुत्तानं योज्या मुद्रा हुताशने ।
अधोमुखं करं कृत्वा यस्य स्यात्कुञ्चिताङ्गुलिः ॥ २५ ॥

विरूपाक्षस्य मुद्रैषा भवेन्मध्या प्रसारिता ।
उत्ताने प्रसृताङ्गुल्यः करे भवति वारुणी ॥ २६ ॥

तामेव तु यदा तिर्यक्कृतदा भवति मारुती ।
निकुञ्चिताश्च तास्सर्वाः [8]कौबेरी तु प्रकीर्तिता ॥ २७ ॥

मध्ये प्रसारिताः तिस्रो [9]मुद्रेशानी प्रकीर्तिता ।
[10]ब्रह्मणः पद्ममुद्रा स्याद्भोगोऽनन्तस्य [11]कीर्तितः ॥ २८ ॥

वामासक्तस्य वामां तु दक्षिणाना[12]मपक्रमे ।
तयोरग्राणि गृह्णीत तर्जन्यग्रद्वयेन तु ॥ २९ ॥

सङ्कोचयेत्षडेतानि स्वाङ्गुष्ठे तर्जनीं न्यसेत् ।
वज्र [13]एषः समाख्यातः शक्तिः पूर्वमुदाहृता ॥ ३० ॥

करौ बाहुद्वयं चैव दण्डमुद्रा [14]प्रसारिता ।
कनिष्ठानामिके द्वे द्वे अंतर्याङ्गुष्ठकुञ्चितौ ॥ ३१ ॥

---

१. C. V. (f.) योजयोंगुष्ठे. २. B. विघ्नराजसमुद्रैषा. ३. C सर्वविघ्नप्रणाशनी. ४. V. –संवृतौ. ५. V. ($f_1$) –सङ्कोशां. ($f_2$) सकोश. ६. A.B.V. करजां मध्यां. ७. V. –सुत्तानां. ८. A. कौवीरी. B. कौबेरे. ९. A. मुद्रैशानी. १०. V. ब्रह्मजा. V. (f.) ब्रह्मणा. ११. A.V. कीर्तिता. १२. A. –नामुपक्रमे. १३. A. एष. १४. A.B. प्रसारिते.

चत्वारः प्रसृता युग्मः खड्गमुद्रा प्रकीर्तिता।
वर्तुलां तर्जनीं कृत्वा अङ्गुष्ठोपरि विन्यसेत् ॥ ३२ ॥

[1]दक्षिणां तर्जनीं चैव तस्यास्ये तु नियोजयेत्।
दक्षिणं(? णां) कुञ्चितं कृत्वा तिस्रो वामाः प्रसारिताः ॥ ३३ ॥

मुष्टिं कृत्वा तु वामेन [2]त्वङ्गुष्ठं तु समुच्छ्रयेत्।
अङ्गुष्ठेन तु संगृह्य पताका प्रसृताक(? प)रा ॥ ३४ ॥

तिर्यक्करं तु कृत्वा वै सङ्कुच्य [3]चतुरङ्गुलीः।
अङ्गुष्ठं प्रसृतं कृत्वा गदामुद्रा तथापरा ॥ ३५ ॥

[4]अन्योऽन्यं योजयेद्धस्तौ कनिष्ठाङ्गुष्ठयोजितौ।
तदेव युग्मं प्रसृता [5]शूलमुद्रा प्रकीर्तिता ॥ ३६ ॥

नित्यं प्रसारयेद्धस्तं [6]स्वस्त्याकारं तु योजयेत्।
मध्यमे कन्यसे द्वे द्वे प्रसृताग्रे नियोजयेत् ॥ ३७ ॥

तर्जनीद्वयं सङ्कुच्य मध्यमा पृष्ठसंस्थिता।
द्रव्यरूपा स्मृता ह्येषा आत्मभावे नियोजयेत् ॥ ३८ ॥

उत्तानौ तु करौ कृत्वा षडेतेऽङ्गुलयः स्मृताः।
समानाः सुसमानाश्च योजिता वैष्णवी भवेत् ॥ ३९ ॥

तर्जन्यौ कुञ्चिते कृत्वा मध्यमापृष्ठतो न्यसेत्।
कनिष्ठोपरि चाङ्गुष्ठौ [7]घृतमुद्रा प्रकीर्तिता ॥ ४० ॥

उत्तानं वामहस्तं च दक्षिणं चाप्यधोमुखम्।
मध्यमानामिके द्वे द्वे सङ्कुच्याङ्गुष्ठसंस्थिते ॥ ४१ ॥

तर्जनीक[8]न्यका चैव मध्यमाभ्यां समाक्रमेत्।
द्वितीया [9]द्रव्यरूपी च गन्धमुद्रा प्रकीर्तिता ॥ ४२ ॥

उत्तानौ तु करौ कृत्वा [10]कन्यसानामिका तथा।
सङ्कोचयित्वा चत्वारो मध्यमे द्वे प्रसारयेत् ॥ ४३ ॥

---

१. C.V. दक्षिणं तर्जनी. २. C. अङ्गुष्ठं. ३. A. चतुरांगुलीः. ४. C. अतोन्यं. ५. B. कुलमुद्रा. ६. B.C.V. स्वल्पाकारं. ७. V. वृतमुद्रा. ८. A. –कन्यसा. ९. A. द्रव्यरूपा. १०. V. कनिष्ठानामिका. B.C. कन्यसीनामिका.

[1]अङ्गुष्ठगे च तर्जन्यौ पुष्पमुद्रा प्रकीर्तिता ।
उत्तानौ तु करौ कृत्वा षडङ्गुलिनिकुञ्चितौ ॥ ४४ ॥

प्रसृते तर्जनीं कृत्वा [2]चाग्रमग्रे नियोजयेत् ।
तयोर्मूले तथाङ्गुष्ठौ [3]धूपमुद्रा प्रकीर्तिता ॥ ४५ ॥

तर्जन्या तर्जनी यत्र कनीयस्या कनीयसी ।
चतस्र उच्छ्रिताः कृत्वा पृष्ठं पृष्ठे नियोजयेत् ॥ ४६ ॥

अङ्गुष्ठावुच्छ्रितौ कृत्वा दीपमुद्रा प्रकीर्तिता ।
उच्छ्रिताङ्गुल्यस्सर्वाः [4]करयोरुभयोरपि ॥ ४७ ॥

पृष्ठं पृष्ठे तु संयोज्य अङ्गुष्ठाग्रे नियोजयेत् ।
नैवेद्यमुद्रा कथिता फल(? ला)कारकरा शुभा ॥ ४८ ॥

अङ्गुल्यः संहताः सर्वास्तथा सङ्कुचिताश्च याः ।
पुष्पमुद्रा विनिर्दिष्टा द्वितीया यदुनंदन ॥ ४९ ॥

अङ्गुष्ठौ[5] चैकतः कृत्वा अनामा च कनीयसी ।
मध्यमे द्वे च सङ्कोच्य अनामापृष्ठतो न्यसेत् ॥ ५० ॥

दत्त्वा चैव तु तर्जन्यौ [6]मध्यमाः परिविन्यसेत् ।
[7]महामुद्रा भवत्येषा सर्वद्रव्यप्रपूरणी ॥ ५१ ॥

अनामा मध्यमे द्वे तु अन्योन्यांतरिते कृते ।
संयोज्य मध्यमे स्वाग्रं तर्जनीद्वयमेव च ॥ ५२ ॥

कनिष्ठाद्ये तथा [8]द्वे तु स्वाग्रेऽनाम्नि नियोजयेत् ।
[9]अर्धस्थितौ तथाङ्गुष्ठौ अमृताख्या प्रकीर्तिता ॥ ५३ ॥

चण्डीशमुद्रा कथिता अञ्जलिः कुब्ज[10]तर्जनी ।
अस्त्रमुद्रा भवेद्राजन् पद्मः [11]स्यात्संहताङ्गुलिः ॥ ५४ ॥

---

१. A.B.C. अङ्गुष्ठगौ. २. C. अग्रमग्रे. ३. V. धूमसुद्रा. ४. A.V. कनीयोरुभयोरपि. ५. B. चैवतः. ६. A. मध्यमा परिवेशयेत्. B. omits दत्त्वा...परिविन्यसेत्. ७. B. omits महामुद्रा...प्रपूरणी. ८. V. द्वे द्वे स्वाग्रे. ९. B. अवस्थितौ. १० A. –तर्जनीः ११. V. स्यात्संहताञ्जलिः.

दक्षिणेन तु हस्तेन मुष्टिं बद्ध्वा प्रयत्नतः ।
अङ्गुष्ठमुन्नतं कृत्वा वामाङ्गुष्ठे तु निक्षिपेत् ॥ ५५ ॥

[१]दक्षिणां च तथा मुष्टिं वामाङ्गुल्या तु वेष्टयेत् ।
सद्योजातस्य मुद्रैषा कथिता [२]पापनाशिनी ॥ ५६ ॥

इयमेव विपर्यस्ता वामदेवस्य कीर्तिता ।
करसंपुटकं कृत्वा [३]वामांनासां(? मनामां) तु कारयेत् ॥ ५७ ॥

दक्षिणे [४]मध्यमाकुञ्च्य अङ्गुष्ठौ कुञ्चयेत्तथा ।
शूलाकारं ततः कृत्वा हृदयं परिवर्तयेत् ॥ ५८ ॥

अघोरस्य स्मृता मुद्रा सर्वविघ्न[५]विनाशिनी ।
उत्तानौ तु करौ कृत्वा अनामाद्वयकुञ्चितौ ॥ ५९ ॥

तस्यामुपरि चाङ्गुष्ठौ तर्जन्यौ द्वे च[६] कुञ्चिते ।
मध्याऽनामे तु[७] ते द्वे तु कनिष्ठामेकतो न्यसेत् ॥ ६० ॥

मुद्रैषा वज्रसंज्ञस्य सर्वदुष्ट[८]निवारणी ।
कनिष्ठानामिके द्वे द्वे अंतरान्तरयोजिते ॥ ६१ ॥

आकुञ्च्या[९]न्तरिते योज्ये शेषे चैव प्रसारिते ।
ईशानस्य भवेन्मुद्रा सर्वकर्मकरी शुभा ॥ ६२ ॥

तर्जन्यौ कुञ्चिते कृत्वा तथैव च कनीयसी ।
अधोमुखां स्पृष्टनखां स्थितां मध्ये करस्य तु ॥ ६३ ॥

चतस्रश्चोच्छ्रिताः पृष्ठे त्वङ्गुष्ठावेकतः कुरु ।
नालव्यवस्थितौ द्वौ तु मुद्रा व्योम्नः प्रकीर्तिता ॥ ६४ ॥

मुष्टिं [१०]बद्ध्वा तु वामेन तर्जनीं संप्रसारयेत् ।
ग्राह्या दक्षिणमुष्ट्या तु मुद्रा [११]सर्वात्मनो भवेत् ॥ ६५ ॥

वाममुष्टौ तथाङ्गुष्ठं दक्षिणं प्रक्षिपेद् बुधः ।
[१२]करजाः पृष्ठतो योज्या मुद्रैषा शिवसंज्ञिता ॥ ६६ ॥

---

१. C दक्षिणं तु तथा. २. C. पापनाशनी. ३. B. वामं नासां. C. वाम नासां. ४. A. मध्यमाकुञ्चि. ५. C. –विनाशनी. ६. C. तु. ७. C. तौ. ८. B.–निवारणे. ९. B.–न्तरितो योज्य. A.–न्तरिते योज्य. १० V. बध्ना. ११. B.V. सर्वात्मना. C. सर्वात्मनं. १२. A.C.V. करजा.

[1]अङ्गुल्योऽन्तर्हिताः सर्वा वर्तुला गर्भसंस्थिताः ।
प्रसृता मध्यमायुक्ता शिखा मुद्रा प्रकीर्तिता ॥ ६७ ॥

अधोमुखास्तु वै तिस्र[2]स्तिर्यक्कृताश्च सुसंस्थिताः ।
कनीयस्युपरि त्वासां ताश्च सर्वा[3] अधोमुखाः ॥ ६८ ॥

तासामुपरि [4]चाङ्गुष्ठं दक्षिणं संप्रयोजयेत् ।
वामे धर्मज्ञमुद्रैषा [5]कथिता पिङ्गलस्य तु ॥ ६९ ॥

बन्धे त्वनामिका त्वस्मिन्मुद्रा [6]ह्यस्त(? स्त्र)स्य कीर्तिता ।
उत्तानौ तु करौ कृत्वा उभावेकत्र योजयेत् ॥ ७० ॥

करजास्तु स्मृता[7]स्सर्वा मुद्रा गायत्रि(? त्री)संज्ञिता ।
मुष्टौ प्रसारयेदेकामङ्गुलीं तु क्रमान्नृप ॥ ७१ ॥

तर्जन्यन्तां कनिष्ठाद्यां शक्तिमुद्रा प्रकीर्तिता ।
हृदि न्यस्तोऽञ्जलिर्ज्ञेयो नमस्कारो नराधिप ॥ ७२ ॥

[8]कपित्थात्तर्जनीं गृह्य शिखरेण ध्वजो भवेत् ।
अङ्गुष्ठे योज्य तर्जन्यौ हस्तोत्तानौ स्मृताङ्गुली ॥ ७३ ॥

मणिबन्धौ निपीड्यैव शशि(? श)कर्णी भवेन्नृप ।
सम्पुटीकृत्य हस्तौ द्वौ किञ्चि[9]त्संकुचिताङ्गुलिः ॥ ७४ ॥

मुकुला तु समाख्याता पङ्कजं प्रसृतैव सा ।
उत्तानौ तु(? प्र)सृतौ हस्तौ कृत्वाङ्गुष्ठौ तु कुञ्चितौ ॥ ७५ ॥

मध्यसंस्थौ करौ कृत्वा [10]आवाहिन्यास्तु लक्षणम् ।
अङ्गुष्ठौ कुञ्चितौ द्वौ तु स्वकीयाङ्गुलिवेष्टितौ ॥ ७६ ॥

उभौ चाभिमुखौ हस्तौ योजयित्वा तु [11]निष्ठुरा ।
उत्तानं दक्षिणाङ्गुष्ठं वामाङ्गुष्ठेन वेष्टयेत् ॥ ७७ ॥

---

१. A अंगुल्यांतर्हिताः. २. A. –स्तिर्यक्ता अत्र संस्थिताः. ३. C. सर्वास्त्वधोमुखाः. ४ V. चाङ्गुष्ठे. ५. A.B. कथिता मङ्गलस्य तु. V. कथिता लाङ्गलस्य तु. ६. A. ह्यस्तस्य कीर्तिता. C. ह्यस्त्र प्रकीर्तिता. ७. A.C. सर्वे मुद्रा. B. सर्वं मुद्रि गायत्रिसंज्ञिता. V. गायत्रसंज्ञिता. ८. V. कपित्थयजनीं. ९. A. –त्संकुचितांगुली. १०. V. आवाहन्यास्तु. ११. V. रिष्टूरा.

[1]दक्षिणाभिस्तथा वामं लिङ्गमुद्रा प्रकीर्तिता।
वै(? ऐ)श्वर्यस्य तु या [2]मुद्रा साङ्गुष्ठां तां तु कारयेत् ॥ ७८ ॥

भ्रामयेद्वर्तुलाङ्गुष्ठा(? ष्ठं) मुद्रा प्रोक्ता विसर्जने।
वितस्तिद्वयसंयोगा[3]द्भगमुद्रा प्रकीर्तिता ॥ ७९ ॥

[4]मुष्टिः प्रमार्जिता ज्ञेया लिङ्गमुद्रा तथैव च।
संदष्टे मार्जितावोष्ठौ जीर्णमुद्रा प्रकीर्तिता ॥ ८० ॥

प्रसारितौ भुजौ कृत्वा भुजाग्रौ कुञ्चितौ तथा।
अग्राग्रौ [5]कुञ्चितार्धेन करपल्लवसन्निभौ ॥ ८१ ॥

तर्जनीं कुञ्चितां कृत्वा अङ्गुष्ठोपरि विन्यसेत्।
[6]निकुब्जौ बाहुदण्डौ तु बध्नीयाच्च पृथक्पृथक् ॥ ८२ ॥

कैरिणी नाम मुद्रैषा कथिता सूर्यदेवता।
पद्माकारौ करौ कृत्वा [7]संश्लिष्टमध्यमिका(? मा)ङ्गुली ॥ ८३ ॥

[8]अङ्गुल्या [9]धारयेत्तस्मिन्विश्वमुद्रेति कीर्तिता।
सम्मुखौ तु करौ कृत्वा संश्लिष्टौ ग्रथिताङ्गुलीः ॥ ८४ ॥

[10]कनिष्ठा मध्यमे [11]योज्य(? ज्या) तर्जन्यौ मध्यमे तथा।
हृदि मूर्ध्नि शिखाबंधे मुद्रेयं व्योमसंज्ञिता ॥ ८५ ॥

[12]मुष्टिबंधोच्छ्रितां कृत्वा मध्यहस्तस्य [13]तर्जनीम्।
तालशब्दकृताऽसौ तु मुद्रा [14]चास्त्रस्य कीर्तिता ॥ ८६ ॥

मध्यमा तर्जनी चैव सव्यहस्तस्य चोच्छ्रिते।
कनिष्ठानामिके कुब्जे साङ्गुष्ठेनैव संज्ञिता ॥ ८७ ॥

नेत्रप्रदर्शिता ज्ञेया गोवृषागमने तथा।
उत्तानौ तु करौ कृत्वा सर्वाङ्गुल्यो [15]विकुञ्चिताः ॥ ८८ ॥

---

१. V. omits Ślo. No. 78 २. C. मुद्रामाङ्गुष्ठान्ता तु कारयेत्. ३. V. –द्भद्रमुद्रा. ४. A. मुष्टि. ५. A.B.V. कुश्चिताङ्गेन. ६. B. त्रिकुब्जौ. C. त्रिकुष्ठौ. ७. A.B. V. संश्लिष्टौ ग्रथिताङ्गुली ८. B. omits Ślo. 84. ९. A.B.V. कारयेत्त– १०. A.B.V. कनिष्ठा मध्यमे. ११. C.V. योज्यौ. १२. B. मुष्टिबन्धोचितां. १३. A.B. तर्जनी. १४. C. ह्यस्त्रस्य. १५. B. विकुंचितम्.

कृत्वा चोपरि चाङ्गुष्ठं चालयेत पुनः पुनः ।
सर्वासामेव शक्तीनां मुद्रैषा संप्रकीर्तिता ॥ ८९ ॥

दीप्ता सूक्ष्मा जया भद्रा विभूतिर्विमला तथा ।
[१]अमोघा विद्युता चैव नवमा( मी ) सर्वतोमुखी ॥ ९० ॥

इति नामानि शक्तीनां [२]सरहस्यानि निर्दिशेत् ।
सम्मुखौ तु करौ कृत्वा श्लिष्टौ चैव प्रसारितौ ॥ ९१ ॥

इयं मुद्रा नमस्कारे रविसान्निध्यकारिणी ।
अनामिकायाः [३]सन्दंशो रविमुद्रा प्रकीर्तिता ॥ ९२ ॥

सोममुद्रा [४]मध्यमया भौममुद्रा ह्यनामया ।
[५]कनीयस्या बुधे मुद्रा [६]तन्मूले जीवसंज्ञिता ॥ ९३ ॥

अनामिकामूलगा तु शुक्रमुद्रा प्रकीर्तिता ।
मध्यमामूलगाङ्गुष्ठा शनिमुद्रा प्रकीर्तिता ॥ ९४ ॥

[७]तर्जनीमूलगाङ्गुष्ठे राहुमुद्रा प्रकीर्तिता ।
तर्जनी[८]चलनाज्ज्ञेया केतुमुद्रा नराधिप ॥ ९५ ॥

वामहस्तेन शिखराः क्रोधमुद्रा प्रकीर्तिता ।
संपुटौ तु करौ कृत्वा वामोच्छ्रायां नराधिप ॥ ९६ ॥

एषा वराहमुद्रा तु सर्वकर्मकरी शुभा ।
वामेन वेष्टितौ हस्तौ [९]दक्षिणे भैरवी भवेत् ॥ ९७ ॥

हस्तावधोमुखौ यत्र दृष्टिश्चाधस्तथा भवेत् ।
पातालभञ्जिनी नाम मुद्रैषा कथिता नृप ॥ ९८ ॥

[१०]कपित्थेऽनामिका दीर्घा स्तम्भनी तु निगद्यते ।
[११]करमध्यात्तु संग्राह्यमिव मध्येन चाहतम् ॥ ९९ ॥

---

१. C. आमोघा. २. C. सरहस्या विनिर्दिशेत्. ३. B.C.V. सन्देशो. ४. C. मध्यमाया भौममुद्रा त्वनामया. ५. C. कनीयसा ६. V. उन्मूले ७. C. मध्यमामूलमाङ्गुष्ठा. ८. A. चालनाज्ज्ञेया B. चार्जनाज्ज्ञेया. ९. A.B.V. दक्षिणा. १०. V. कपित्थानामिका. ११. A. करमध्यां तु संग्राह्यामिव.

एवं(?व)मध्येन संयुक्ता क्रोधिनी परिकीर्तिता ।
[1]सहमध्या तु संग्राह्या खतमध्ये द्विधाहतम् ॥ १०० ॥

[2]एवमध्येन संयुक्ता बीजमुद्रा प्रकीर्तिता ।
एवमध्येन संयुक्तं(?क्ता) भैरवी चापरा भवेत् ॥ १०१ ॥

[3]क्षत्रमध्या तु [4]संग्राह्या ईरमध्येन [5]संयु[ता] ।
[6]एवमध्येन [7]चाक्रान्तं स्तम्भनी चापरा भवेत् ॥ १०२ ॥

[8]लसमध्या तु [9]संग्रा[ह्या चै]कमध्येन [10]चाह[ता] ।
[11]एवमध्येन संयुक्तं(?क्ता) वाराही चापरा भवेत् ॥ १०३ ॥

जनमध्येन संग्राह्यमेष(?व)मध्येन चाहतम् ।
पातालभञ्जनी नाम मुद्रेयमपरा भवेत् ॥ १०४ ॥

[12]तर्जनी मध्यमा चैव तथा चैव त्वनामिकाम् ।
मध्यमपर्वसु [13]संयुक्ता पृष्ठतः कारयेत्करे ॥ १०५ ॥

शंखमुद्रेयमुद्दिष्टा पूर्वमुक्ता तथापरा ।
प्रसार्य सर्वाश्चाङ्गुल्यः करपृष्ठे च योजयेत् ॥ १०६ ॥

चक्रमुद्रा [14]भवत्येषां (?षा) पूर्वमुक्ता तथापरा ।
कटिभागप्रदेशे तु मुष्टिस्तु [15]सुपिरा भवेत् ॥ १०७ ॥

गदामुद्रा भवत्येषा सर्वविघ्नप्रणाशिनी ।
अन्योऽन्याभिमुखौ [16]कृत्वा करौ संवेष्टिताङ्गुली ॥ १०८ ॥

सहाङ्गुष्ठेन निर्दिष्टा मुद्रा कौस्तुभसंज्ञिता ।
संस्पृश्य [17]वह्निशिखरं वामदक्षिणकं स्पृशेत् ॥ १०९ ॥

इयं मुद्रा विनिर्दिष्टा [18]वनमालेति पार्थिव ।
[19]अनामी नाशने द्रव्ये स्रजं द्रव्यकरद्वये ॥ ११० ॥

---

१. A. सहमध्यां तु संग्राह्य. २. A.B. इवमध्येन संयुक्तं. C. इहमध्येन संयुक्ता. ३. V. B.C. क्षेत्रमध्या. ४. B. संग्राह्याः C. संग्राह्यं ५. A.B.C.V. संयुतम्. ६. A.C. एवं मध्येन. ७. V. च क्रान्तं. ८. V. लसन्मध्या. ९. A.B.V. संग्राह्यमेकमध्येन. C. संग्राह्यमेनमध्येन. १०. A. B. C. V. चाहतम्. ११. V. A. B. omit एवमध्येन...... चाहतम्. १२. A.B. तर्जनीं मध्यमां. १३. C. संयुक्तं. १४. V. भवत्तेषां. १५. V. त्रिशिरा. १६. A.B. भूत्वा. १७. V. वह्नि शिखिरां वाम चक्रिणकं, १८. C. वनेम्रांलेति. १९ V. (f.) अनामे नामने.

जङ्घामध्यगतौ(? ते) कृत्वा चिबुको(? के)ऽर्धसमायुतौ(? ते)।
मुखं विवृतकं कुर्या[1]ज्ज्वलज्जिह्वा तु लेलिहा ॥ १११ ॥

एषा मुद्रा महामुद्रा नारसिंहीति कीर्तिता।
अङ्गुष्ठं मुष्टिना ग्राह्यं [2]हृन्मुद्रा परिकीर्तिता ॥ ११२ ॥

मुष्टिं बद्ध्वैव चाङ्गुष्ठे [3]तिर्यग्गं कारयेच्छिरः।
स्प(? स्पृ)ष्टा तु तर्जनी मुष्टौ [4]शिक्षामुद्रा प्रकीर्तिता ॥ ११३ ॥

[5]तर्जनीप्रांतसंलग्ने द्वे [6]मुष्टी कवचं भवेत्।
मुष्टी बद्ध्वा तु [7]हस्तौ द्वे उभयाङ्गुलियोजितौ ॥ ११४ ॥

गदामुद्रा समाख्याता सर्वकर्मकरी शुभा।
तर्जनी तु तथाङ्गुष्ठं [8]प्रांतश्लिष्टौ तु कारयेत् ॥ ११५ ॥

शेषाः [9]प्रसारिताङ्गुल्या नेत्रमुद्रा भवेन्नृप।
[10]अनाम्यौ वलिनौ कृत्वा [11]तर्जन्यानाम सं(? नीभ्यां समं)श्रयात्
॥ ११६ ॥

मध्यमौ चोन्नतौ कृत्वा अङ्गुष्ठौ श्लेषितौ समौ।
एषा मुद्रा समाख्याता [12]दिव्यास्त्र(? ऽस्त्र)शिरसो नृप ॥ ११७ ॥

अञ्जलिः प्रमदा मुद्रा क्षिप्रं देव प्रसारितम्(? ता)।
वन्दने हृदयास[13][क्तां] पूर्वदक्षिणतो[14]ऽपरा ॥ ११८ ॥

[15]ऊर्ध्वोऽङ्गुष्ठो वाममुष्टिर्दक्षिणोऽङ्गुष्ठबंधनः।
संन्यस्य तस्य चाङ्गुष्ठौ यस्या ऊर्ध्वं प्रतिष्ठितम्(? ता) ॥ ११९ ॥

वासुदेवस्य मुद्रैषा बद्ध्वा स्यात्पाप[16]नाशिनी।
हस्तयोरुभयोरेव कनीयाङ्गुष्ठगर्भकौ[17] ॥ १२० ॥

---

१. C. जलो जिह्वा तु लेलिहा. V. उज्ज्वल जिह्वा तु लोहिता. २. V. हृमुद्रा. ३. C. तिर्यग. ४. V. शिखामुद्रा. A. शिक्षौमुद्रा. ५. A. तर्जने प्रांत. ६. A.B. मुष्टे. ७. A.B.C. हस्ते द्वे उभयोंगुलि योज्यते. ८. C. प्रांतशिष्टौ. V. प्रतिश्लिष्टौ. ९. A. प्रसारितांगुल्यौ. B. प्रमारितांगुल्यो. १० V. अनाम्योऽर्धेलिनौ, ११. A.B. तर्जन्यानां समंश्रयात्. १२. V. दिव्या च शिरसो. १३. B. सत्तां. १४. A.B.C. पराम्. १५. A. ऊर्ध्वांगुष्ठो, C. ऊर्ध्वाङ्गुष्ठं, १६. C. नाशनी, १७. B.V. कनीष्ठाङ्गुष्ठ–

[1]शेषाः प्रसारिताः श्लिष्टा मुद्रा सङ्कर्षणस्य तु ।
[2]तर्जन्यावूर्ध्वतः [3]श्लिष्टौ समाङ्गुष्ठौ तु श्लेषितौ ॥ १२१ ॥

एषा मुष्टिं ततः कृत्वा मुद्रा [4]प्रद्युम्नसंज्ञिका ।
अङ्गुल्यौ वलितौ यत्र सूर्पाकारौ तु कारयेत् ॥ १२२ ॥

[5]वेष्ट्याङ्गुष्ठावधः कार्यावनिरुद्धे तु कारयेत् ।
[6]इत्युद्देशेन ते प्रोक्ता मुद्राहस्ता मया नृप ॥ १२३ ॥

दर्शयेन्मन्त्रयुक्तानां परां [7]सिद्धिमभीप्सताम् ।
यथामन्त्रं [8]यथादेवं यथाविधिरतन्द्रितः ॥ १२४ ॥

मन्त्रेषु देवता [9]युक्ता बह्व्यो [10]मुद्राः प्रकीर्तिताः ।
तासां मन्त्रं तु विज्ञेयं नियोगो नृप इष्यते ॥ १२५ ॥

एतावदुक्तं नृप नृत्तशास्त्रं
[11]समासतः पार्थिववंशमुख्य ।
निःशेषमेतद्वदितं महार्थं
विस्तारतस्सर्वजगत्प्रधानम् ॥ १२६ ॥

इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे नृत्तशास्त्रमुद्राध्यायो नाम ॥ ३३ ॥

---

१. A. शेषा प्रसारित. V.प्रसारितः. २. V.C. तर्जन्यावर्धतः ३. C. श्लिष्टौ. ४. A.C. प्रद्युम्न जायते. B. प्रद्युम्नो जायते. ५. C. omits वेष्ट्या...कारयेत्. A.B. वेष्ट्याङ्गुष्ठमधः ६. V. इत्युद्देशे तु ते ७. V. सिद्धिमभीप्सिताम् ८. C. यथादैवं. ९. A. युक्त्या. १०. A. मुद्रा प्रकीर्तिता. ११. C. समासता.

## चतुस्त्रिंशोऽध्यायः ।

वज्र :— नृत्तमुत्पादितं केन ऋषिणा दैवतेन वा ।
एतन्मे संशयं छिन्द्धि त्वं हि सर्वविदुच्यसे ॥ १ ॥

मार्कण्डेय :— एकार्णवे पुरा लोके नष्टस्थावरजङ्गमे ।
शेषपर्यङ्कशयने [1]सुप्ते च मधुसूदने ॥ २ ॥

संवाह्यमानचरणे लक्ष्म्या यदुकुलोद्वह ।
नाभ्यां तस्य समुत्पन्नं पद्मं [2]पद्मनिभेक्षण ॥ ३ ॥

तत्र जातः स्वयं ब्रह्मा देवः शुभचतुर्मुखः ।
देवैः सह महाभाग सशरीरैर्नराधिप ॥ ४ ॥

पद्मोदबिन्दुसंभूतौ तत्रैव मधुकैटभौ ।
रजस्तमोमयौ घो[3]रौ दानवौ तौ भयानकौ ॥ ५ ॥

ततो जगृहतुर्वेदा[4]न्ब्रह्मणस्तौ नराधिप ।
[5]हृतवेदस्ततो ब्रह्मा तुष्टाव मधुसूदनम् ॥ ६ ॥

वेदा मे परमं चक्षुर्वेदा मे परमं बलम् ।
[6]दानवाभ्यां हृता वेदा अन्धो जातोऽस्मि शत्रुहन् ॥ ७ ॥

एवमुक्तस्तदा विष्णुर्ब्रह्मणा पुरुषोत्तमः ।
उत्थाय सलिलात्तस्माद्बभ्राम सलिलाशये ॥ ८ ॥

अङ्गहारैः सुललितैस्तथा [7]पदपरिक्रमैः ।
तथा भ्रमन्तं तं देवं ददर्शायत[8]लोचनम् ॥ ९ ॥

अतीव ललितं लक्ष्मीर्जातरागा विशेषतः ।
देवोऽप्यश्वशिरो भूत्वा पातालतलगः क्षणात् ॥ १० ॥

---

१. V. सुप्ते मधुनिषूदने. A.B. सुप्ते मधुनिसूदने. २. A. पद्मनिभेक्षणं. ३. A.V. चोरौ. ४. A.B. – न्ब्रह्माणं तं ५. V.C. हतवेद– ६. V. दानवापहृता. ७. A. पादपरिक्रमैः ८. B. लोचन V.C. लोचना.

स दैत्यान् दृष्टवान् वेदाँस्त्यक्त्वाश्वशिरसस्तनुम्।
जघान तौ महाकायौ दानवौ मधुकैटभौ ॥ ११ ॥

हत्वा वेदसहायस्तु संप्राप्तो [1]ब्रह्मणोऽन्तिकम्।
ददौ वेदांस्ततस्तस्मै देवदेवः स्वयंभुवे ॥ १२ ॥

दत्त्वा वेदांस्ततः प्राह सृष्टिं कुरु पितामह।
[2]वेदप्रामाण्यतो ब्रह्मा सर्गं चक्रे ततः प्रभुः ॥ १३ ॥

[3]शेषस्याङ्कगतं देवं लक्ष्मीः पप्रच्छ पार्थिव।
लक्ष्म्युवाच— देवदेव जगन्नाथ शङ्खचक्रगदाधर ॥ १४ ॥

[4]परिक्रमन्मया तोये दृष्टः सललितः प्रभो।
अतीवरमणीयाङ्गं किं तत्प्रब्रूहि मे प्रभो ॥ १५ ॥

श्रीभगवानुवाच— [5]नृत्तमुत्पादितं ह्येतन्मया पद्मनिभेक्षणे।
अङ्गहारैः सकरणैः संयुक्तं सपरिक्रमैः ॥ १६ ॥

नृत्तेनाराधयिष्यन्ति भक्तिमन्तस्तु मां शुभे।
त्रैलोक्यस्यानुकरणं [6]नृत्तं देवि प्रतिष्ठितम् ॥ १७ ॥

[7]एतावदुक्त्वा तां देवो ब्रह्माणं वाक्यमब्रवीत्।
गृहाण नृत्तं धर्मज्ञ लक्ष्यलक्षणसंयुतम् ॥ १८ ॥

एतावदुक्त्वा ब्रह्माणं ग्राहयामास केशवः।
तं गृहीत्वा ततो ब्रह्मा ददौ रुद्राय वेधसे ॥ १९ ॥

गृहीत्वा तच्च रुद्रोऽपि तोषयामास केशवम्।
तेन नृत्तेन सततं देवेशं भक्तवत्सलम् ॥ २० ॥

एवमुत्पादितं नृत्तं वासुदेवेन पार्थिव।
एकार्णवे पुरा लोके नष्टस्थावरजङ्गमे ॥ २१ ॥

ततः प्रभृति देवेशः शङ्करः शङ्करो नृणाम्।
नृत्तेनाराधयन्नास्ते देवं चक्रगदाधरम् ॥ २२ ॥

---

१. V. ब्रह्मणोऽन्तिके. २. V. वेदग्रामयुतो ब्रह्मा. ३. C. शेषपङ्कगतं. ४. V. परिक्रमं मया. ५. A.B. नृत्तमुत्पादितमेतन्मया. ६. V. नृत्ते. ७. A. एतावदुक्त्वा तां.

नृत्तेश्वरत्वं चावाप तुष्टाव [1]मधुसूदनम् ।
सोऽपि तुष्यति नृत्तेन सम्यगाराधितो हरः ॥ २३ ॥

[2]अन्येऽपि देवास्तुष्यन्ति सम्यङ् नृत्तेन तोषिताः ।
आप्यायनं परं ह्येतत्कथितं तु दिवौकसाम् ॥ २४ ॥

एतदेव हि देवत्वं [3]दीव्यतां सततं दिवि ।
पुष्पनैवेद्यदानेभ्यो नृत्तदानं विशिष्यते ॥ २५ ॥

स्वयं नृत्तेन यः कुर्याद्देवदेवस्य पूजनम् ।
विशेषेण महाभाग तस्य तुष्यति केशवः ॥ २६ ॥

नृत्तं गीतं तथा वाद्यं दत्त्वा देवाय विष्णवे ।
सर्वकामसमृद्धस्य यज्ञस्य फलमश्नुते ॥ २७ ॥

नृत्तेन वृत्तिं यः कुर्यात्स तु वर्ज्यः प्रयत्नतः ।
कुशीलवाद्यैर्यः कुर्यान्नृत्तविक्रयकारकः ॥ २८ ॥

देवताराधनं कुर्याद्यस्तु नृत्तेन धर्मवित् ।
स सर्वकामानाप्नोति मोक्षोपायं च विन्दति ॥ २९ ॥

धन्यं यशस्यमायुष्यं स्वर्गलोकप्रदं तथा ।
ईश्वराणां विलासं [4]तदार्तानां दुःखनाशनम् ॥ ३० ॥

मूढानामुपदेशं [5]तत्स्त्रीणां सौभाग्यवर्धनम् ।
शांतिकं[6] पौष्टिकं काम्यं वासुदेवेन निर्मितम् ॥ ३१ ॥

[7]एतत्तदुक्तं तव नृत्तशास्त्रं
समासतो लोकहिताय राजन् ।
नृत्तेन यत्नः पुरुषेण कार्यो
[8]लोकद्वयं जेतुमभीप्सता वै ॥ ३२ ॥

**इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे नृत्तसूत्रं नाम ॥ ३४ ॥**

---

१ C. मधुसूदनात्. २. A.B.V. अन्ये च. ३. A.B.C. दीप्यतां. ४. V. तु चार्तानां. ५. V. च स्त्रीणां. ६. C. पुष्टिकं. ७. V. एतावदुक्तं. ८. V. लोकद्वयञ्जेतु–

# पञ्चत्रिंशोऽध्यायः ।

मार्कण्डेय :—

अतः परं प्रवक्ष्यामि चित्रसूत्रं तवानघ ।
उर्वशीं [1]सृजता [2]पूर्वं चित्रसूत्रं नृपात्मज ॥ १ ॥

नारायणेन मुनिना लोकानां हितकाम्यया ।
प्राप्तनां [3]वञ्चनार्थाय देवस्त्रीणां महामुनिः ॥ २ ॥

सहकाररसं गृह्य उर्व्यां चक्रे वरस्त्रियम् ।
चित्रेण सा ततो जाता रूपयुक्ता वराप्सराः ॥ ३ ॥

यां दृष्ट्वा व्रीडिताः सर्वा जग्मुस्ता देवयोषितः ।
एवं महामुनिः कृत्वा चित्रं लक्षणसंयुतम् ॥ ४ ॥

ग्राहयामास स तदा विश्वकर्माणमच्युतम् ।
यथा [4]नृत्ते तथा चित्रे त्रैलोक्यानुकृतिः स्मृता ॥ ५ ॥

[5]दृष्टयस्तु तथा भावा अङ्गोपाङ्गानि सर्वशः ।
कराश्च ये [6]मता नृत्ते पूर्वोक्ता नृपसत्तम ॥ ६ ॥

त एव चित्रे विज्ञेया नृत्तं चित्रं परं मतम् ।
नृत्ते प्रमाणं [7]यन्नोक्तं तत्प्रवक्ष्याम्यतः शृणु ॥ ७ ॥

हंसो भद्रोऽथ मालव्यो रुचकः शशकस्तथा ।
[8]विज्ञेयाः पुरुषाः पञ्च तेषां वक्ष्यामि लक्षणम् ॥ ८ ॥

उच्छ्रायायामतुल्यास्ते सर्वे ज्ञेयाः प्रमाणतः ।
[9]स्वेनैवाङ्गुलमानेन शतमष्टाधिकं भवेत् ॥ ९ ॥

प्रमाणं नृप हंसस्य भद्रस्य तु षडुत्तरम् ।
चतुर्भिरधिकं ज्ञेयं मालव्यस्य तथा नृप ॥ १० ॥

---

१. V.A.B.S₁. सृजतः २. V.A.B. पूर्वे. ३. S₁. वाञ्चनार्थाय. ४. S₂. नृत्ये. ५. A.B.V. दृष्टयश्च तथा. ६. V.A.C. महानृत्ते. ७. V. येन्नोक्तं, ८. B. विज्ञेयः पुरुषः ९. V.B. स्वनेवाङ्गुलमानेन,

शतं च रुचकस्योक्तं दशोनं शशकस्य च ।
द्वादशाङ्गुलविस्तारस्ताल इत्यभिधीयते ॥ ११ ॥

[1]अङ्गु(? आगु) ल्फन्त(? ल्फान्तं) चतुर्भागं पादोच्छ्रायः प्रकीर्तितः ।
द्वौ च तालौ तथा जङ्घे पादतुल्ये च जानुनी ॥ १२ ॥

[2]जङ्घातुल्यौ तथा [3]चोरू नाभिस्तालं तु मेढ्रतः ।
तावच्च नाभिहृ(? मेढ्रं)दयं [4]हृदयात्कण्ठ एव च ॥ १३ ॥

कण्ठस्तालत्रिभागः स्यात्तालं च वदनं भवेत् ।
तालषड्भागमप्युक्तं ललाटोपरि मस्तकम् ॥ १४ ॥

मध्ये मेढ्रं तु विज्ञेयमिति दैर्घ्यं प्रकीर्तितम् ।
तालः प्रोक्तः करो राजन्बाहू सप्तदशाङ्गुलौ ॥ १५ ॥

प्रबाहू तावदेवोक्तौ वक्षसोऽर्धमथाष्टकम् ।
एतदायामतः प्रोक्तं मानं हंसस्य पार्थिव ॥ १६ ॥

अनेनैवानुसारेण [5]शेषाणामपि कल्पयेत् ।
आयामपरिणाहाभ्यां समाः सर्वे [6]नराधिपाः ॥ १७ ॥

सामान्यतस्ते नृपवर्य मानं
प्रोक्तं मया हंसनराधिपस्य ।
प्रत्यङ्गमानं [7]तु मयोच्यमानं
समासतस्त्वं शृणु राजसिंह ॥ १८ ॥

**इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे चित्रसूत्रे आयामोच्छ्रायमानं नाम ॥ ३५ ॥**

---

१. $S_1$. omits. अगुल्फ...तथा चोरू. A. अगुल्फं तश्चतुर्भागः २. B. जंघातुल्यो ३. A.B.$S_2$. द्वौ तु. ४. A.$S_1$.$S_2$. हृदयात्कण्ठमेव च. B. हृदया कण्ठमेव च. ५. A. शेषाणामधिकल्पयेत्. ६. A.B.V. नराधिप. ७. A.B.V. च.

# षट्त्रिंशोऽध्यायः ।

मार्कण्डेय :— अथ प्रत्यङ्गविभागो भवति । तत्र [1]द्वात्रिंशाङ्गुलपरिणाहो मूर्धा । चतुरङ्गुलोच्छ्रायमष्टाङ्गुलं ललाटम् । शङ्खौ चतुरङ्गुलौ द्व्यङ्गुलोच्छ्रायौ । पञ्चाङ्गुलौ गण्डौ । [2]चतुरङ्गुलो हनुः । द्व्यङ्गुलौ कर्णौ चतुरङ्गुलोच्छ्रायौ । [3]कर्णमध्योऽङ्गुलम् तद्रन्ध्रमुदकाम(?)पालिरनियमेन । [4](कर्णस्य लु(? बु)-टिका पालिः) । नासा चतुरङ्गुला, अग्रे [5]द्व्यङ्गुलोच्छ्राया त्रिकायामा च । नासापुटावङ्गुलिविस्तारौ [6]द्विगुणद्विगुणायामौ । नासौष्ठमध्य-मर्धाङ्गुलम् । ओष्ठश्चाङ्गुलः । चतुरङ्गुलायाममास्यम् । अधरोऽङ्गुलम् । [7]द्व्यङ्गुलं चिबुकम् । चत्वारिंशद्(? चतुर्विंशतिद)न्तास्तेषु अष्टौ दंष्ट्राः । अर्धाङ्गुलोच्छ्रिता [8]दन्ताः । अङ्गुलद्वादशभागिका दंष्ट्रा । अङ्गुल[9] [10]वि-स्तृते त्र्यङ्गुलायामे नेत्रे । नेत्रत्रिभागं कृष्णमण्डलम् । पञ्चभागास्तारा । [11]अर्धाङ्गुलविस्तृते त्र्यङ्गुलायामे भ्रुवौ । [12]तयोर्व्यङ्गुलमन्तरङ्गुलमान्तरम् । चतुरङ्गुलं नेत्रान्त[13]क[र्ण]विवरम् । दशाङ्गुलविस्तृता ग्रीवा एकविंशत्यङ्गुलपरीणाहा । षोडशाङ्गुलं स्तनान्तरम् । षडङ्गुलं [14]स्तनज-[त्र]न्तरम् । षोडश बाहुमूलपरिणाहः द्वादशाग्रे । सप्ताङ्गुलं करतलं पञ्चाङ्गुलं विस्तृतम् । पञ्चाङ्गुलप्रमाणा [15]मध्यमिका । [16]तत्पू(? त्प)र्वदल-हीना प्रदेशिनी । तत्तुल्या चानामिका । तत्परिहीना कनिष्ठिका । सर्वाः [17]समत्रिभागपर्वाः । [18]पर्वार्धा नखाः । [19]त्र्यङ्गुलमङ्गुष्ठं (? ष्ठः) द्विपर्वः । जठरपरिणाहो [20]द्वाचत्वारिंशदङ्गुलः । [21]वेद्यप्रमाणा-भ्यामङ्गुलं नाभिः । कटिरष्टादशाङ्गुला विपुला । तत्परिधिः चतुश्चत्वा-

---

१. A.B.V.S₂. द्वादशाङ्गुल– २. A.B. चतुरंगुलौ हनू. ३. V. कर्णमध्याङ्गुलं ४. C. S₁. omit कर्णस्य पालिः ५. A. द्व्यङ्गुलोच्छ्रायाति चायामा च. B. द्व्यंगुलोच्छ्रायाति च यामा च. C. द्व्यंगुलोच्छ्रायाति दायामा च S. omits. त्रिकायामा. ६. B. विस्तारौ द्विगुणायामौ नासाष्टम-ध्यमर्धांगुलम् । ७. C. द्व्यङ्गुलो. ८. B. दंतः ९. A.B.C. अङ्गुलि. १०. V. विस्तृता. ११. V. अर्धाङ्गुलिविस्तृते त्र्यङ्गुलायामे भ्रुवौ. C. अर्धाङ्गुलो विस्तृते चतुरङ्गुलायामे भ्रुवौ. १२. A. तयोर्घ्यंगुलमांतंगुलमांतरम् । १३. A. करणं विवरम्. १४. A. स्तनजत्रन्तरम्. C. स्तनजत्ववरम्. १५. C. omits मध्यमिका ... कनिष्ठिका । १६. B. तत्सर्वदलहीना. १७. A. समित्रिभागपर्वाः B. समित्रिभागसर्वाः. १८. A.B.C. पूर्वार्धं. १९. S₁. द्व्यङ्गुलमङ्गुष्ठं. २०. V.C. द्वाचत्वारिं-शांगुलः. २१. A.B. वैद्यप्रमाणा–

रिंशत्। चतुरङ्गुलविस्तृतौ वृषणौ। षडङ्गुलं तावत्परीणाहं मेढ्रम्। तन्मध्यत ऊरू चतुरङ्गुलौ। [1]तद्द्विगुणपरिणाहाङ्गुल[2]विपुले जानुनी तत्त्रिगुणपरिणाहे, जङ्घाग्रं पञ्चाङ्गुलं चतुर्दशपरिणाहम्। द्वादश-(? शाङ्गुल) दीर्घौ षडङ्गुलविस्तृतौ [3]पादौ [4]त्रिकायताङ्गुष्ठौ। अङ्गुष्ठतुल्या प्रदेशिनी। [5]तदष्टांशोनाः शेषाः। अङ्गुलचतुर्भागहीनोऽङ्गुष्ठनखः। तदर्धप्रमाणं प्रदेशिन्याः। तदष्टभागः शेषाणाम्। [6]सर्वपादमङ्गुलमष्टाङ्गुलोत्सेधः। [7]त्र्यङ्गुले पार्ष्णी। चतुरङ्गुलोच्छ्रायौ इति हंसप्रमाणं भवति। [8]भवन्ति चात्र—

शेषाणां पार्थिवेन्द्राणां मानं युक्त्या प्रकल्पयेत्।
अनेनैवानुसारेण स्वमानस्यानुसारतः ॥ १ ॥

[9]म[ध्व]क्षश्चंद्रगौरस्तु नागराजभुजो बली।
हंसगामी सुमध्यश्च हंसश्च सुमुखो भवेत् ॥ २ ॥

रोमरुद्धकपोलस्तु गजगामी महामतिः।
वृत्तोपचितबाहुस्तु भद्रः पद्मनिभो भवेत् ॥ ३ ॥

मुद्गश्यामस्तु मालव्यः [10]कृशमध्यस्तनुच्छविः।
आजानुबाहुः पीनांसो दंतिघोणो महाहनुः ॥ ४ ॥

शरद्गौरस्तु रुचकः कम्बुग्रीवो महामतिः।
[11]सत्यस्तु रसिकश्चैव बलवांश्च प्रकीर्तितः ॥ ५ ॥

रक्तश्यामस्तु शशकः [12]किञ्चित्कर्बुरकस्तथा।
पूर्णगण्डश्च चतुरो [13]मध्वक्षश्च प्रकीर्तितः ॥ ६ ॥

इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे चित्रसूत्रे प्रमाणाध्यायो नाम ॥ ३६ ॥

---

१. V.B.$S_1S_2$. –गुणपरिणाहं. २ $S_2$. विपुले च जानुनी. ३. B.V. पदौ. ४. A. त्रिकारयतांगुलौ. B.C.V. त्रिकारयतांगुष्ठौ. ५. A. तदष्टांशेना: ६. C.$S_1$.$S_2$. सर्वपादमङ्गुल मष्टाङ्गोत्सेधः। ७. A.$S_1$.$S_2$. त्र्यंगुली, ८. A.B.$S_1$.$S_2$. भवति. ९. A.B. मधक्ष–$S_1$.$S_2$. मधुक्ष: C.V(f.) मध्यक्षश्चन्द्र– १०. A. कृष्टमध्य– V(f.) कृशमध्यतनु– ११. A. सन्यस्त रसिकश्चैव. C. सत्यस्त... सिकश्चैव, १२. A.B. किंचिदन्तरकस्तथा. C. किंचिद्दर्भुरकस्तथा. V. ($f_1$.) किंचिदभुरकस्तथा. ($f_2$.) किंचि: रन्तुरकस्तथा. १३. C. मध्वाक्षश्च,

# सप्तत्रिंशोऽध्यायः ।

मार्कण्डेय :— अङ्गप्रत्यङ्गमानेन यथा पञ्च नराः स्मृताः ।
स्त्रियः पञ्च तथा [1]ज्ञेयास्ता एव मनुजोत्तम ॥ १ ॥

पुरुषस्य [2]समीपस्था कर्तव्या [3]योषिदीश्वर ।
नरस्कन्धप्रमाणेन कार्यैका सा [4]यथामति ॥ २ ॥

अङ्गुलौ द्वौ नरात्क्षामं स्त्रियो मध्यं विधीयते ।
अधिका च कटिः कार्या तथैव [5]चतुरङ्गुलम् ॥ ३ ॥

उरःप्रमाणतः कार्यौ स्तनौ नृप मनोहरौ ।
नृपाश्च सर्वे कर्तव्या महापुरुषलक्षणाः ॥ ४ ॥

जालपादकराः कार्यास्तथा वै चक्रवर्तिनः ।
ऊर्णेयं च भ्रुवोर्मध्ये तेषां कार्यं तथा शुभम् ॥ ५ ॥

रेखाश्च करयोः कार्यास्तिस्रो राज्ञां मनोहराः ।
शशक्षतजसंकाशाः [6]शस्ता वै [7]क्षामकोटकाः ॥ ६ ॥

[8]तरङ्गभङ्गिनः सूक्ष्मा निजस्नेहाभ्यलङ्कृताः ।
घनेन्द्रनीलसदृशाः केशाः कार्यास्तथा शुभाः ॥ ७ ॥

कुंतला दक्षिणावर्तास्तरङ्गास्सिंहकेसराः ।
वर्धरा जूटटसरा इत्येताः केशजातयः ॥ ८ ॥

चापाकारं भवेन्नेत्रं मत्स्योदरमथापि [9]वा ।
नेत्रमुत्पलपत्राभं पद्मपत्रनिभं तथा ॥ ९ ॥

[10]श[रा]कृति महाराज पञ्चमं परिकीर्तितम् ।
चापाकारं भवेन्नेत्रं प्रमाणेन [11]यवास्त्रयः ॥ १० ॥

---

१. C. ज्ञेयात एव. २. A. समीपस्थाः ३. B. योषिदीद्वर. ४. V. यथामिति. A. यथामतिः ५. B. चतुरङ्गुलीम्. ६. B.C.V. शस्त्रा. ७. C. क्षामकोट्यः ८. A.B.V. तदङ्गभङ्गिनः. ९. C.$S_1$.$S_2$. च १०. A.B.C.V. शानाकृति- $S_1$. शाराकृति- S. शाणाकृति- ११. V. यथास्त्रियः ।

मत्स्योदराख्यं कथितं तथा यवचतुष्टयम् ।
नेत्रमुत्पलपत्राख्यं प्रमाणात्षड्यवं स्मृतम् ॥ ११ ॥

पद्मपत्रनिभं नेत्रं प्रमाणेन यवा नव ।
[1]शराकृति च विज्ञेयं तथैव च यवा दश ॥ १२ ॥

स्वमानाङ्गुलमानस्य यवमानं प्रकल्पयेत् ।
चापाकारं भवेन्नेत्रं योगभूमिनिरीक्षणात् ॥ १३ ॥

[2]मत्स्योदराकृति [3]कार्यं नारीणां कामिनां तथा ।
नेत्रमुत्पलपत्राभं निर्विकारस्य शस्यते ॥ १४ ॥

त्रस्तस्य रुदतश्चैव पद्मपत्रनिभं भवेत् ।
क्रुद्धस्य वेदनान्त( ? र्त )स्य नेत्रं [4][ श ]राकृति भवेत् ॥ १५ ॥

ऋषयः पितरश्चैव देवताश्च नराधिप ।
स्वप्रभाभरणाः कार्या द्युतिमन्तस्तथैव च ।
मुष्णन्तस्तेजसां तेजः परेषां नृपसत्तम ॥ १६ ॥

सम्यग्विचार्य नृपतिः( ? ते ) स्वधिया [5]यथोक्तं
ह्येतत्प्रमाणमनुरूपमनिंदितं च ।
स्थानैरनेककिरणैः स्थिरभूमिलम्भैः
कार्यं तदेव [6]सुकुमारम[7]जिह्मरेखम् ॥ १७ ॥

**इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे सामान्यमानं नाम ॥ ३७ ॥**

---

१. $S_1.S_2$. शशाकृतिं. २. A.V. मत्स्योदराकृति. ३. A. कृत्यं. ४. B.C.V(f.) चाराकृतिर्भवेत्. A. शानाकृतिर्भवेत्. ५. C. यथोक्तमेतत्प्र– ६. V. सकुमार– ७. A.B.V. C.–जिह्मलेखम्.

## अष्टत्रिंशोऽध्यायः ।

मार्कण्डेय :— नेत्रमुत्पलपत्राभं रक्तान्तं कृष्णतारकम् ।
प्रसन्नं दीर्घपक्ष्मान्तं मनोज्ञं [1]मृदुसत्तम ॥ १ ॥

देवतानां [2]कृतं राजन्प्रजाहितकरं भवेत् ।
समे गोक्षीरवर्णाभे स्निग्धे [3]जिह्माग्रपक्ष्मले ॥ २ ॥

प्रसन्ने पद्मनेत्रान्ते मनोज्ञे प्रियदर्शने ।
[4]कृष्णतारे विशाले च नयने [5]श्रीसुखप्रदे ॥ ३ ॥

चतुरस्रं सुसंपूर्णं प्रसन्नं शुभलक्षणम् ।
अत्रिकोणमवक्रं च [6]अधिकारमुखं भवेत् ॥ ४ ॥

[7]दीर्घमण्डलवक्राणि त्रिकोणादीनि यानि च ।
वर्ज्यानि तानि देवानां प्रजासु शिवमिच्छता ॥ ५ ॥

कार्या हंसप्रमाणेन देवा यदुकुलोद्वह ।
तेषां च लोम [8]कर्तव्यमक्षिपक्ष्मसु च भ्रुवोः ॥ ६ ॥

अतः शेषेषु गात्रेषु देवाः [9]स्युर्लोमवर्जिताः ।
द्विरष्टवर्षाकाराश्च तथा कार्या दिवौकसः ॥ ७ ॥

प्रसन्नवदना नित्यं तथा च सितदृष्टयः ।
मुकुटैः कुण्डलैर्हारैः केयूरैरङ्गदैस्तथा ॥ ८ ॥

भूषितास्तेऽथ कर्तव्याः शुभस्रग्दामधारिणः ।
श्रोणीसूत्रेण महता [10]पादाभरणधारिणः ॥ ९ ॥

यज्ञोपवीतवन्तश्च सावतंसास्तथैव च ।
जान्वधोलम्बिना कार्याः शोभिना कटिवाससा ॥ १० ॥

---

१. A.C. मृदुसत्तमम्. २. V. करं. ३. B.C. जिह्माश्रिपक्ष्मले. $S_1.S_2$ पक्ष्माग्रजिह्मले ४. C. कृष्णताले. ५. B. श्रीमुखप्रदे. ६. A.B. अधिकारसुखं. ७. A. दीर्घमण्डलचक्राणि. ८. A.B. कर्तव्यमक्षपक्ष्मसु. ९. B. स्युर्लोमवर्जितः. १०. V. पादाभरणचारिणा.

वामे मनुजशार्दूल दक्षिणं जानु दर्शयेत् ।
अंशुकं च तथा कार्यं देवतानां मनोहरम् ॥ ११ ॥

प्रभा च तेषां कर्तव्या मूर्ध्नि मूर्ध्नः प्रमाणतः ।
मण्डलाभा महाराज देवतातोऽनुकारिणी ॥ १२ ॥

ऊर्ध्वा दृष्टिरधोदृष्टिस्तिर्यक् तेषां [1]विवर्जयेत् ।
हीनाधिका वा दीना वा क्रुद्धा रूक्षा तथैव च ॥ १३ ॥

ऊर्ध्वा तु मरणायोक्ता शोकायाधः प्रकीर्तिता ।
[2]तिर्यग् धनविनाशाय हीना भवति मृत्यवे ॥ १४ ॥

अधिका शोकजननी दीना च नृपसत्तम ।
रूक्षा धनक्षयाय स्यात्क्रुद्धा भयविवर्धिनी ॥ १५ ॥

[3]छातोदरी न कर्तव्या न कार्या चाधिकोदरी ।
[4]सक्षता च न कर्तव्या तथा यदुकुलोद्वह ॥ १६ ॥

हीनाधिकप्रमाणा च रूक्षवर्णा तथैव च ।
विवृतेन च वक्त्रेण नता च यदुनंदन ॥ १७ ॥

प्रमाणहीनैरङ्गैश्च त्वधिकैरपि पार्थिव ।
[5]छातोदरी क्षुद्भयदा मरणायाधिकोदरी ॥ १८ ॥

सक्षता मरणायोक्ता हीना [6]धनविनाशिनी ।
अधिका शोकजननी रूक्षवर्णा भयप्रदा ॥ १९ ॥

विवृतेन च वक्त्रेण कुलनाशकरी भवेत् ।
प्राच्याभा धननाशाय दक्षिणेन च मृत्यवे ॥ २० ॥

पश्चिमेन [7]सुतघ्नी स्यादुदग् भयविवृद्धये ।
प्रमाणहीना नाशाय अधिका [8]देशनाशिनी ॥ २१ ॥

---

१. C. विमर्जयेत्. २. V. तिर्गधन- ३. V. शातोदरी. ४. A.B.C.V. सुक्षता. ५. B.V. शातोदरी. ६. C. धनविनाशनी. ७. V.A. सुतघ्नी च चोदग्भय- ८. C.$S_1$ $S_2$. देशनाशनी.

अश्लक्ष्णा मरणायोक्ता क्रुद्धा [1]रूपविनाशिनी ।
प्रमाणहीनां प्रतिमां तथा लक्षणवर्जिताम् ॥ २२ ॥

[2]आवाहितापि विप्रेन्द्रैर्नाविशन्ति दिवौकसः ।
आविशन्ति तु तां नित्यं पिशाचा दैत्यदानवाः ॥ २३ ॥

तस्मात् सर्वप्रयत्नेन मानहीनां विवर्जयेत् ।
[3]चित्रलक्षणसंयुक्तं प्रशस्तं सर्वमुच्यते ॥ २४ ॥

आयुष्यं च यशस्यं च धनधान्यविवर्धनम् ।
[4]तदेव लक्षणापेतं धनधान्यविनाशनम् ॥ २५ ॥

देवा नरेंद्र कर्तव्याः शोभावन्तः सदैव तु ।
[5]मृगेन्द्रवृषनागानां हंसानां गतिभिः समाः ॥ २६ ॥

सलक्षणं [6]चित्रमुशन्ति धन्यं
देशस्य कर्तुर्वसुधाधिपस्य ।
तस्मात्प्रयत्नेन सलक्षणं त-
त्कार्यं नरैर्यत्नपरैर्यथावत् ॥ २७ ॥

इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे प्रतिमालक्षणाध्यायो नाम ॥ ३८ ॥

---

१. C. रूपविनाशनी. २. V. आवाहिताश्च. ३. $S_1.S_2.$ चित्रं. ४. $A.S_1.S_2.$ तदेवा लक्षणोपेतं. B.C. तद्देव लक्षणोप्रेतं. ५. V. मृगेन्द्र. ६. A.B. चित्रमुष्यंति.

## एकोनचत्वारिंशोऽध्यायः ।

मार्कण्डेयः—

शुभाकारविहाराणि नानावर्णधराणि च ।
नव स्थानानि रूपाणां शृणु तान्यनुपूर्वशः ॥ १ ॥

ऋज्वागतं [1]भवेत्पूर्वमनृजु तदनंतरम् ।
साचीकृतशरीरं च भवत्यर्धविलोचनम् ॥ २ ॥

ततः पार्श्वागतं नाम पुरावृत्तमनंतरम् ।
पृष्ठागतमधःकार्यं(? यं) [2]परावृत्तां(? त्तं) समानतम् ॥ ३ ॥

एतान्यनेकभेदानि नव [3]स्थानानि भूषिते ।
एकैकस्येह भवतः शृणु मे नृप लक्षणम् ॥ ४ ॥

तत्राभिमु[4]खमेवादौ स्पष्टमानगुणान्वितम् ।
सुसंपूर्णं सुचार्वङ्गं [5]सुश्लक्ष्णामलवर्तकम् ॥ ५ ॥

सुशुद्धं मधुरं स्पष्टरेखासंस्कारभूषितम् ।
यद्भवेत्स्थानमक्षीणगात्रं पृष्ठ(? ऋज्वा)गतं तु तत् ॥ ६ ॥

मुखस्यादावतोऽक्षीणं वक्षस उदरं तथा ।
कट्या च स्कंधदेशाच्च ऊरुतश्च क्षयं गता[6](? तम्) ॥ ७ ॥

नासापुटाधरोष्ठानां चतुर्थांशं च [7]बुद्धिमान् ।
क्षयं नीतं त्रिभागं च यस्य गात्रेभ्य एव च ॥ ८ ॥

[8]कांतरूपं परं स्थानं [9]स्थानलम्भोपपादितम् ।
[10]एत[दे]वर्जु नामोक्तमनेक[11]करणान्वितम् ॥ ९ ॥

यत्तिर्यग्भूमिलंभेन नेत्रहारि सुवर्तनम् ।
सुकुमारं चतुर्भागं क्षीणं सर्वाङ्गशोभनम् ॥ १० ॥

---

१. B. भवेत्पूर्वमऋजुस्तदनंतरम्. २. B. परावृत्तांतमानतम्. ३. A. स्थानि विभूषिते. ४. A. –मुखसेवादौ. ५. A.B.C.V. सुश्लक्ष्णमल–. ६. A. गतः. ७. A.B.C.V. बुद्धिमत्. ८. C. कांतारूपं धनं स्थानं. ९. A. स्थानलंबोपवादितम्. B. स्थानलम्भोपचादितम्. C. स्थानलम्भोपदादितम्. १०. A. एतद्देव–. B.C.V. एतदेव–. ११. A. करुणा–.

अध्यर्ध(? र्धं) भ्रू[1]ललाटं चाप्यध्यर्धं [2]घ्राणमुत्कटम्।
भागक्षयाव[3]शेषार्धं कलापक्षीणलोचनम्॥ ११॥

कलावलुप्तभ्रूलेखं लिखितं स्निग्धलेखया।
न च छायागतं कालं न [4]चापि ऋजुकोपनम्॥ १२॥

[5]वैकारिकत्वाच्च नृप साचीकृतमिहोच्यते।
अर्धं नेत्रं मुखे यस्य [6]लुप्तमर्ध(? र्धं) भ्रुवे तथा॥ १३॥

भङ्गो ललाट[7]मात्रश्च दृश्यानां [8]सार्धमेव च।
मात्रार्धा[? र्धं] चैकतो गण्डं [9]दृश्येतार्धकृतक्षयम्॥ १४॥

मात्रार्धं [10]कण्ठरेखाया यवमाविष्कृतं हनोः।
[11]उरसोऽर्धं मुखं [12]लुप्तं नाभ्यास्याच्छिष्टमङ्गुलम्॥ १५॥

अध्यर्धशेषा च कटी [13]अन्यच्च दर्शनीकृतम्।
अध्यर्धाक्षं परिज्ञेयमाकारेणैवमादिना॥ १६॥

छायागतमिति प्रोक्तं [14]पर्यायेणैतदेव तु।
यस्यावलोक्यते पार्श्वं दक्षिणं सव्यमेव वा॥ १७॥

[15]कृत्स्नमन्यत्क्षया[या]त[16][म]ङ्गमङ्गगतिस्तथा।
एकाक्षमेक[17]भ्रूले[खाध]रना[सा]ललाटवत्॥ १८॥

एकं श्रोत्रं यदर्धं स्याच्चिबुकार्धं शिरोरुहम्।
[18]अहीनमानलावण्यमाधुर्यादिगुणान्वितम्॥ १९॥

[19]पार्श्वागतमिति प्रोक्तं तत्स्याद्भित्तिकसंज्ञितम्।
अपाकुद्धे [20]कलाक्षीणे [21]कण्ठदेशे तथैव च॥ २०॥

---

१. B.C.V. –ललाटे. २. C. घ्राणमुत्करम्. ३. A.$S_1$.$S_2$. शेषोर्ध्वं. B. शेषार्ध्वं. ४. A.B.C.V. चाव ऋजु– ५. V. खेकारि– ६. V.C. लुप्तमवभ्रुवे. ७. A.C. –मात्राश्च ८. A.C.V.$S_1$.$S_2$. सारमेव तु. ९. A.B.C. दृश्येतार्थं कृतं क्षयम्. V. दृश्यमर्धकृतक्षयम्. १०. A.C.V. कण्डरेखाया. ११. A.B. उरसोर्ध्वो $S_1$.$S_2$. उरसोर्ध्वे. १२. A.B.V. लिप्तं. १३. $S_1$.$S_2$. अन्यश्चादर्शं. १४. A. पर्यायेनेतदेव तु B. पर्यायेणेतदेव तु १५. V.C. कृत्स्नमन्यर्क्ष-यातं A.B. कृत्स्नमन्यत्क्षयातं १६. A.B. तमंगमंग– C.V. तदङ्गमङ्ग– १७. A.B.C.V. भ्रूलेखमरनामा– १८. V. गृहीतमान. C. आहीनमान. १९. B. पार्श्वागतिमिति. २०. A.$S_1$.$S_2$. कले क्षीणे. B.V. कलक्षीणे. २१. B. कंठदेश.

बाहुगण्डललाटेषु [1]कलाख्यं [2]क्षयमागतम् ।
बाहुवक्षःकटितटस्थिति[3]गुह्यतलेष्वपि ॥ २१ ॥

द्विकलं द्विकलं ज्ञात्वा यथाभागं कृपी( ? शी )कृतम् ।
[4]अनुरूपप्रमाणेन [5]नातिक्षीणाङ्गमेव च ॥ २२ ॥

एतद् गण्डपरावृत्तं स्थानं च परिकीर्तितम् ।
पृष्ठतो [6]यदपि व्यक्तं देहबंधं मनोहरम् ॥ २३ ॥

वक्रभ्रू[7]कुटिसर्वाङ्गसंधिबंधनमेव च ।
ईषच्च [8]दर्शितापाङ्गं [9]कपोले जठरे पुनः ॥ २४ ॥

प्रकाशितैकपार्श्वेन सुस्थिरं [10]दृष्टिहारि च ।
[11][ अ ]हीनमानलावण्यमाधुर्यादिगुणान्वितम् ॥ २५ ॥

[12]लेख्येषु पुस्तदेशेषु पृष्ठागतमिति स्मृतम् ।
[13]यस्योर्ध्वमङ्गपत्येन भागेन समवस्थितम् ॥ २६ ॥

[14]स्थितेऽप्यभिमुखेऽर्धाङ्गे परिवृत्तिवशाद्भवेत् ।
किञ्चिच्छायागतौ [15]कार्यावुपरिष्टादधः पुरः ॥ २७ ॥

अर्धाधिगतसारूप्यं [16]विरसं ग्राम्यसंस्थितम् ।
मध्येन नेत्ररम्येण यथायोग[17]विलोपना ॥ २८ ॥

विज्ञेयं दधतः कार्यं परिवृत्तं नरेश्वर ।
समग्रदृष्टिस्फिग्देशं [18]दृष्टिपादतलं [19]च यत् ॥ २९ ॥

ऊर्ध्वतः क्षीणदृष्टार्धं [20]दृष्ट्वा शेषं कटिस्थलम् ।
[21]लुप्तपादाङ्गुलितलं [22]दृश्याशेषतलद्वयम् ॥ ३० ॥

चतुरस्रं सुसंपूर्णमभयानकदर्शनम् ।
प्रकाशीकृतबा[23]हूर्ध्वमदृष्टमुखकन्धरम् । ३१ ॥

---

१. V.A.B.$S_2$ कालाख्यं. २. A.B. क्षययागतम्. ३. V.B.C. omit–ह्यतलेष्वपि ४. A.$S_1$.$S_2$. अणुरूप प्रमाणे च. ५. A.B.C.V. नाति तीक्ष्णाङ्गमेव च. ६. A. यदप्यव्यक्तं. ७. A.B.$S_1$.$S_2$.–भ्रूश्लक्ष्ण– ८. A.B. दर्शतापांग. ९. A.B.C.V. कपोलजठरे १०. $S_1$.$S_2$. दृढहारि ११. A.B.C.V. $S_1$ $S_2$. स्वहीन– १२. A.B.C.V. लेखेषु. १३. V.$S_1$.$S_2$. यस्योर्धमङ्गपत्येन १४. V. स्थितेष्याभिमुखेर्धाङ्गे. १५. B.V.$S_1$ $S_2$. कार्याबुपरिष्टादधः १६. A.B.V. विरसग्राम्य– १७. A.B.V. –विलोपिना १८. A B.V. दृष्टपाद–१९. V. तु. २०. A.B. दृष्टा. २१. C.$S_1$.$S_2$. लुप्तपादाङ्गुललितं. २२. A.B.C. –दृश्यारंति तलद्वयम्. २३. C. –बाहुवरसदृष्ट– B.V. बाहुब सुदृष्ट– $S_1$.$S_2$. –बाहुवर्धमदृष्ट–

लुप्तं जङ्घीकृतो ज्ञेयं नाम्ना स्थानं सप्तनतः( ? तम् ) ।
[1]नवान्येतानि सर्वाणि तथोक्तैरभिराजितम् ॥ ३२ ॥

लक्षितैर्ल[2]क्षितव्यानि त्वयाऽनुक्रमशो नव ।
एषां प्रज्ञाविशेषेण विकाराणि बहून्यपि ॥ ३३ ॥

[3]एकैकशेन [4]भूभागैः कर्तव्यानि [5]यथाविधि ।
त्वया संतस्समासाद्य [6]सम्यङ् मानं तु भूतले ॥ ३४ ॥

स्थानानीमानि मानाद्यैर्गुणैर्लेख्यानि यत्नतः ।
नवैवैतानि दृष्टानि [7]सर्वभावेष्वनिन्दितम् ॥ ३५ ॥

स्थानानि [8]नाधिकमतः परमस्ति हि [9]किञ्चन ।
जीवलोकं परिक्रम्य सततं स्थाणुजङ्गमम् ॥ ३६ ॥

उत्तमाधममध्येषु प्रमाणगुणतस्सदा ।
चित्रं विचित्रं त्रिविधं प्रमाणं त्रयमेव च ॥ ३७ ॥

क्षयवृद्धी च कार्त्स्न्येन मया [10]तेऽभिहिते नृप ।
अतः परं प्रवक्ष्यामि [11]क्षयवृद्धिविधिं क्रमात् ॥ ३८ ॥

चित्रविद्भिरसंज्ञेयं समासेनेतरेण च ।
त्रयोदशविधैवात्र क्षयवृद्धिरु[12]दाहृता ॥ ३९ ॥

स्थानानां बहुसंस्थत्वादङ्गावयवसंभवा ।
स्थानं [13]पृष्ठागतं पूर्वमवर्जुगतमेव च ॥ ४० ॥

मध्यार्धार्धं तथार्धार्धं साचीकृतमुखं तथा ।
नतं गण्डपरावृत्तं पृष्ठागतमथापि च ॥ ४१ ॥

पार्श्वागतं च [14]विज्ञेयमुल्लेपं चलितं तथा ।
उत्तानं वलितं चेति स्थानानि तु त्रयोदश ॥ ४२ ॥

---

१. A.B.C.V. नीचान्येतानि. २. C. –र्लक्षितव्यानि क्रमको नव. ३. V. एकैकशश्च ४. C. भूभागः. $S_1$.$S_2$. भूभागैः ५. V. यथावधि. ६. C. सम्यमानतभूतले. ७. A.B. सर्वभावेषु निन्दितम् V.C. सर्वभावेष्वनिन्दित. ८. A.B.C. नाधिकततः. ९. A. किंचिन. १०. V. तेऽभिहितेऽनघ. ११. C. क्षयवृद्धीवधी. $S_1$.$S_3$. क्षयवृद्धीवीर्धा. १२. A. –रुचाहृता. १३. C. दृष्टगतं $S_1$.$S_2$. पृष्ठगतं. १४. C. विज्ञेयमुल्लर्धं चलितं.

[1]कर्माण्येतानि सर्वाणि नामसंस्थानतो नृप ।
[2]मण्डलानीह वैशाखप्रत्यालीढक्रियाक्रमैः ॥ ४३ ॥

[3]समाश्चार्द्धसमाः पादाः सुस्थितानि चलानि च ।
समासमपदस्थं च [4]द्विविधं स्थानकं भवेत् ॥ ४४ ॥

तद् ऋज्वापद(? यत)भूयिष्ठं स्थानं समपदं स्मृतम् ।
मण्डलं च द्वितीयं स्यात्स्थानान्यन्यानि यानि च ॥ ४५ ॥

तान्येक[5]समपादानि विचित्राणि चलानि च ।
तत्र [6]वैशाखमालीढं प्रत्यालीढं च [7]धन्विनाम् ॥ ४६ ॥

चित्रगोमूत्रक[8]गतं विषमं खड्गचर्मिणाम् ।
चलितं खलितायस्तमालीढैकपदक्रमम् ॥ ४७ ॥

शक्तितोमरपाषाण[9]भिन्दिपालादिधारिणाम् ।
सवल्गितं चक्रशूल[10]गदाकुणपधारिणाम् ॥ ४८ ॥

[11]एकपादसमस्थानं द्वितीयेन तु [12]विह्वलम् ।
शरीरं च सलीलं [13]स्यात्सावष्टम्भैः क्वचिद् द्रुतम् ॥ ४९ ॥

लीला[14]विलासविश्रान्तं विशालजघनस्थलम् ।
स्थिरैकपादविन्यासं स्त्रीरूपं विलिखेद् बुधः ॥ ५० ॥

प्रमाणहीनस्तु [15]जनोऽस्ति भूयान्
　　कालस्य भावस्य बलात्पृथिव्याम् ।
इति प्रचिन्त्यात्मधिया बुधेन
　　कार्यं प्रमाणं क्षयवृद्धियोगे ॥ ५१ ॥

**इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे चित्रसूत्रे क्षयवृद्ध्यध्यायो नाम ॥ ३९ ॥**

---

१. $S_1$.$S_2$. कार्याण्येतानि. २. C. omits. मण्डलानीह. ३. A. सममर्यसमः पादा. B.C. समायार्द्धसमः पादाः $S_1$.$S_2$. समासार्धसमाः पादाः. ४. A.B. द्विविधं स्थानके $S_1$.$S_2$. द्विविधे स्थानके ५. V. $S_1$.$S_2$. -समुपादानि. ६. A. वैशाखमलीढं ७. A. धन्वितामू. ८. C. -शतं. ९. A. -भिण्डिपाला- १०. A. -गदाकणपधारिणाम्. C. -गदाकरणायधारिणाम्. ११. A.B. एकपादसमं स्थानं $S_1$.$S_2$. एकपादं समं स्थानं. १२. A.B.V.$S_1$.$S_2$. विद्वलम्. १३. C. स्यात्सावष्टंकैः. १४. -C. विमास १५. A.B.C. जनोऽस्ति भूयात्का-V. जनोऽनुभूयात्का-

## चत्वारिंशोऽध्यायः ।

मार्कण्डेय उवाच— [१]त्रिप्रकारेष्टका [२]चूर्णे त्र्यंशं क्षिप्त्वा मृदस्ततः ।
गुग्गुलं समधुच्छिष्टं [३]मधुकुन्दरुकं गुडम् ॥ १ ॥
कुसुम्भं तैलसंयुक्तं कृत्वा [४]दध्यात्समांशकम् ।
[५]त्रिभागमग्निदग्धायास्सुधायास्तत्र चूर्णयेत् ॥ २ ॥
बिल्वजं त्र्यंशमिश्रं तत्प्रक्षिप्य [६]मषकं [७]कपम् ।
वालुकांशं ततो दद्यात्स्वानुरूपेण बुद्धिमान् ॥ ३ ॥
ततः शकलतोयेन प्लावयेत्पिच्छिलेन[८]तम् ।
[९]परिक्लिन्नं समग्रं तत्मासमात्रं निधापयेत् ॥ ४ ॥
मार्दवं मासमात्रेण गतमुद्धृत्य यत्नतः ।
दद्यात्प्रलेपं निपुणः शुष्कं कुड्ये विमृष्य तु ॥ ५ ॥
श्लक्ष्णं समं स्ववष्टब्धं निम्नोन्नतविनाकृतम् ।
न [१०]चातिघनतां नीतं न [११]चातितनुतामपि ॥ ६ ॥
यदा [१२]शुष्कं भवेत्कु[१३]ड्यं तत्प्रलिप्तमसत्कृतम् ।
तया मृदा सर्जरसा [१४]तैलभागावियुक्तया ॥ ७ ॥
श्लक्ष्णीकुर्यात्प्रयत्नेन लेपनैः श्लक्ष्णमञ्जनैः ।
मुहुर्मुहुश्च क्षीरेण सिक्त्वा [१५]मार्जनयत्नतः ॥ ८ ॥
सद्यः [१६]शोषमुपायातः सकुड्यो मनुजेश्वर ।
अपि वर्षशतस्यान्ते न [१७]प्रणश्येत्तु कर्हिचित् ॥ ९ ॥
अनेनैव प्रकारेण द्विविधैर्वर्णकैर्युताः ।
कर्तव्याः चित्रवपुषा विविधा मणिभूमयः ॥ १० ॥

---

१. A.B.C. चित्रकारेष्टका. V. त्रिप्रकारेष्टिका. २. V. चूर्णं. C. चूर्णे त्र्यंशं क्षिप्त्या मृतस्ततः ३. A. मधुकुन्मरुकं B. मधुकुंकरुकं गुरुम् . V.C. मधुकंमुरुकं गुडम्. ४. A. दद्यात्समांशकम्. $S_1$.$S_2$. दद्यात्समांसकम . ५. C. त्रिभागमपि दग्धाया– ६. C. मषणं. ७. B. कथम्. ८. B. तत्. ९. B. परिक्लन्नं. १० V. चानिघनतां यातं ११. V. चातितनुताङ्गतम् १२. A.B. शुष्को. १३. A.B.C.$S_1$.$S_2$. कुड्यस्तद्दालि–. १४. C. तैलभागवियुक्तम्. १५. B. मर्जनयत्नतः १६. V. शोषमुपायातं कुड्यं तन्मनु– १७. A.B. प्रणश्येत.

कुड्ये शुष्के तिथौ शस्ते ऋक्षे च गुणसंयुते ।
[1]चित्रायोगे विशेषेण श्वेतवासा यतात्मवान् ॥ ११ ॥

ब्राह्मणान्पूजयित्वा तु स्वस्ति वाच्य प्रणम्य च ।
[2]तद्विदश्च यथान्यायं गुरूँश्च गुरुवत्सलः ॥ १२ ॥

प्राङ्मुखो देवताध्यायी चित्रकर्म समाचरेत् ।
श्वेतकाद्रवकृष्णाभिर्वर्तिकाभिर्यथाक्रमम् ॥ १३ ॥

आलिख्य स्थापयेद्विद्वान्प्रमाणे स्थानके तथा ।
ततस्तु [3]रञ्जयेद्रङ्गैर्यथास्थानानुरूपतः ॥ १४ ॥

श्यामा गौरी तथा तस्य [4]छवी स्यात्तां प्रदर्शयेत् ।
तस्याश्च लक्षणं प्रोक्तं [5]प्राङ् मया नृप विस्तरे ॥ १५ ॥

मूलरङ्गाः स्मृताः पञ्च श्वेतः पीतो विलोमतः ।
कृष्णो नीलश्च राजेन्द्र शतशोऽन्तरतः स्मृताः ॥ १६ ॥

[6]पूर्व(?र्व) रङ्गविभागेन भावकल्पनया [7]तथा ।
[8]स्वबुद्ध्या [9]कारयेद्रङ्गं शतशोऽथ सहस्रशः ॥ १७ ॥

[10]नीलपीतव्यतिकृतिः [11]पलाश इति शस्यते ।
स शुद्धः श्वेतमिश्रश्च नीलाभ्यधिक एव च ॥ १८ ॥

एकाधिकं च भवति छवीनामनुरूपतः ।
श्वेताधिको वा न्यूनो वा [12]समांशश्चेति स त्रिधा ॥ १९ ॥

स एकस्तम्भनायुक्तो बहुधैवं [13]विकल्प्यते ।
तेन दूर्वाङ्कुरापीतः कपित्थह[14]रिताः शुभाः ॥ २० ॥

मुद्गश्यामप्रकृतयः कर्तव्या[4]छवयो नृप ।
नीलः [15]पाण्डुरसंपृक्तो विरङ्गस्सोऽप्यनेकधा ॥ २१ ॥

---

१. C. चित्रयोगे. २. A.B. तद्विधश्च. ३. A. युजयेद्र– ४. C. छवि स्मृतां. ५. B.C.V. प्राप्ताया. ६. A.B.V. पूर्णरङ्ग– ७. A. तया. ८. A.B. सुबुद्धया. ९. V. कारयेद्रङ्गाञ्शतशो– १०. V. नीलेष्वति व्यतिकृतिः V. (f) नीलपीतकृतिर्भृतिः ११. V. पालाश. १२. A. समांशस्त्वे वा न वा. १३. V.B. विकल्पते. १४. A.B. हरिता शुभाः १५. A. पाण्डुरसंरक्तो. B. पाण्डुरसंमोक्तो.

अन्योन्याभ्यधिकं न्यूनं समांशवशकल्पना ।
तेन नीलोत्पलनिभा माषसच्छायसुप्रभा ॥ २२ ॥

[1]क्रियन्ते छवयो रम्या यथायोगविनिश्चयात् ।
लाक्षया श्वेतया युक्ता लाक्षारोध्रपिनद्धया ॥ २३ ॥

रक्ता रक्तोत्पलश्यामा छविर्भवति शोभना ।
सापि नानाविधानन्यान्वर्णान्विकुरुते बहून् ॥ २४ ॥

रङ्गद्रव्याणि कनकं रजतं ताम्रमेव च ।
अभ्रकं [2]राजवर्तं च सिन्दूरं [3]त्रपुरेव च ॥ २५ ॥

हरितालं सुधा [4]लाक्षा तथा हिङ्गुलकं नृप ।
नीलं च मनुजश्रेष्ठ तथाऽन्ये सन्त्यनेकशः ॥ २६ ॥

देशे देशे महाराज कार्यास्ते स्तम्भनायुताः ।
[5]लोहानां पत्रविन्यासं भवेद्वापि रसक्रिया ॥ २७ ॥

संकटं लोहविन्यस्त[6]मभ्रकं द्रावणं भवेत् ।
एवं भवति लोहानां [7]लेखने कर्मयोग्यता ॥ २८ ॥

[8]अभ्रकद्रावणं प्रोक्तं [9]सुरसेन्द्रजभूमिजे ।
[10] चर्मा( ? र्म )काथोऽथ बकुलान्निर्यासस्तम्भनाद्भवेत् ।
सर्वेषामेव रङ्गाणां सिंदूरक्षीर इष्यते ॥ २९ ॥

[11]मातङ्गदूर्वारसपट्ट[12]बद्धैः
    संस्तम्भितं चित्रमुदारपुच्छैः ।
धौतं जलेनापि न नाशयेत
    तिष्ठत्यनेकान्यपि वत्सराणि ॥ ३० ॥

इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे रङ्गव्यतिकरो नाम ॥ ४० ॥

---

१. V. क्रियते. २. B.C.V. राजवन्तं. ३. A.B. त्रि३रेव. ४. B. लक्षा miswritten. ५. B. लहानां miswritten. ६. A.B. स्तमभ्रका V. (f.) –स्तंशूद्रकं ७, A. C. लेखनी. ८. A.B. अभ्रकाद्रावणं. ९. $S_1$.$S_2$. सुरसेन्दुजभूमिजे. १०. C. चर्म्मक्वाथं V. चम्माकुथो. ११. A.B. मतङ्ग. १२. A. –पट्टबंधैः.

## एकचत्वारिंशोऽध्यायः ।

मार्कण्डेयः — सत्यं च वैणिकं चैव नागरं [1]मिश्रमेव च ।
चित्रं चतुर्विधं प्रोक्तं तस्य वक्ष्यामि लक्षणम् ॥ १ ॥

यत्किञ्चिल्लोकसादृश्यं चित्रं तत्सत्यमुच्यते ।
[2]दीर्घाङ्गं [3]सप्रमाणं च सुकुमारं [4]सुभूमिकम् ॥ २ ॥

[5]चतुरस्रं सुसंपूर्णं न दीर्घं नोल्वणाकृतिम् ।
[6]प्रमाणं(? ण)स्थानलम्बाढ्यं [7]वैणिकं तन्निगद्यते ॥ ३ ॥

दृढोपचितसर्वाङ्गं वर्तुलं [8]न घनोल्वणम् ।
चित्रं तन्नागरं ज्ञेयं स्वल्पमाल्यविभूषणम् ॥ ४ ॥

चित्रमिश्रं समाख्यातं समासान्मनुजोत्तम ।
तिस्रश्च वर्तनाः प्रोक्ताः [9]पत्रा(? त्र)हैरिकबिन्दुजाः ॥ ५ ॥

पत्राकृतिभी रेखाभिः [10]कथिता पत्रवर्तना ।
अतीव कथिता सूक्ष्मा तथा हैरिकवर्तना ॥ ६ ॥
तथा च स्तम्भनायुक्ता कथिता बिन्दुवर्तना ।
[11]दौर्बल्यबिन्दुरेखत्वमविभक्तत्वमेव च ॥ ७ ॥

[12]बृहद्गण्डौष्ठ[13]नेत्रत्वं संविरुद्धत्वमेव च ।
मानवाकारता चेति चित्रदोषाः प्रकीर्तिताः ॥ ८ ॥

स्थानप्रमाण[14]भूलम्बो(? म्भो) मधुरत्वं विभक्तता ।
सादृश्यं [15]क्षयवृद्धी च गुणाश्चित्रस्य कीर्तिताः ॥ ९ ॥

रेखा च वर्तना चैव भूषणं वर्णमेव च ।
विज्ञेया(? यं) मनुजश्रेष्ठ [16]चित्रकर्मसु भूषणम् ॥ १० ॥

---

१. B. विश्रमेव. २. V. दीर्घाङ्गि. ३. A.B. सुप्रमाणं. ४. C. सुभूमिपम्. ५. A.B. चतुरश्रं. ६. A.B. प्रमाणस्थानलंबाढे. ७. A. वैल्वाणाकं निगद्यते C. वेणिकं तन्निगद्यते. ८. V. B. नद्यनोल्वणम्. ९. B.C.V. पत्राहैविकबिन्दुजाः. १०. V. कथिताश्च च वर्तना ११. C. दौर्बल्यं– १२. V. बृहदण्डौ. १३. V. –नेत्रत्वमविरुद्ध– १४. C. –भूलम्बं. १५. A.B.C.V. पक्षवृद्धीश्च. १६. A. चित्रकर्मैव भूषणा.

रेखां प्रशंसन्त्याचार्या वर्तनां च [1]विचक्षणाः ।
स्त्रियो भूषणमिच्छन्ति वर्णाढ्यमितरे जनाः ॥ ११ ॥

इति मत्वा [2]यथायत्नं कर्तव्यश्चित्रकर्मणि ।
सर्वस्य चित्तग्रहणं यथा स्यान्मनुजोत्तम ॥ १२ ॥

दुरासनं दुरानीतं पिपासा चान्यचित्तता ।
एते चित्रविनाशस्य हेतवः परिकीर्तिताः ॥ १३ ॥

स्नानुलिप्तावकाशा च [3]निर्दंशमषका शुभा ।
[4]सुप्रसन्नाभिगुप्ता च भूमिः स्याच्चित्रकर्मणि ॥ १४ ॥

सुस्निग्धविस्पष्ट[5]सुवर्णरेखं विद्वान्यथादेशविशेषवेशम् ।
प्रमाणशोभाभिरहीयमानं कृतं भवेच्चित्रमतीव चित्रम् ॥ १५ ॥

इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे रङ्गवर्तना नाम ॥ ४१ ॥

---

१. A. विलक्षणाः. २. V. तथायत्नः. ३. B.V. निदेशं मधुका. ४. $S_1$.$S_2$. सप्रसभाभि. ५. $S_1$.$S_2$. अजिह्मरेखं.

## द्विचत्वारिंशोऽध्यायः

मार्कण्डेय :— यथा देवा स्तथा चित्रे [1]कर्तव्याः पृथिवीश्वर।
एकैकं रूपके लोमं कर्तव्यं पृथिवीक्षिताम् ॥ १ ॥

ऋषयश्च सगन्धर्वा दैत्याश्च सह [2]दानवैः ।
मन्त्रिणश्च महाराज सांवत्सरपुरोहितौ ॥ २ ॥

कार्या भद्रप्रमाणेन ब्राह्मणाश्च नरेश्वर ।
ऋषयस्तत्र कर्तव्या जटाजूटोपशोभिताः ॥ ३ ॥

कृष्णाजिनोत्तरासङ्गा दुर्बला[3]स्तेजसान्विताः ।
[4]देवताश्चापि गन्धर्वा मुकुटेन विवर्जिताः ॥ ४ ॥

कर्तव्यास्ते महाराज शिखरैरुपशोभिताः ।
ब्रह्मवर्चस्विनो विप्राः शुक्लाम्बरधरास्तथा ॥ ५ ॥

[5]मन्त्रिणश्च महाराज सांवत्सरपुरोहितौ ।
सर्वालङ्कारसंयुक्ता[6]नैवोल्वणविभूषणाः ॥ ६ ॥

मुकुटेन विहीनांस्तु सोष्णीषान्कारयेच्च तान् ।
दैत्याश्च दानवाश्चैव कर्तव्या भ्रुकुटीमुखाः ॥ ७ ॥

वर्तुलाक्षास्तथा कार्या भीमवक्त्रास्तथैव च ।
[7]तेषामभ्युद्धतो वेशः कर्तव्यः पृथिवीपते ॥ ८ ॥

रु(? भ)द्रप्रमाणाः कर्तव्याः तथा विद्याधरा नृप ।
सपत्नीकाश्च ते कार्या माल्यालङ्कारधारिणः ॥ ९ ॥

खड्गहस्ताश्च ते कार्या गगने वाऽथवा भुवि ।
मालव्यपरिमाणेन किन्नरोरगराक्षसाः ॥ १० ॥

---

१. V. कर्तव्यः पृथिवीश्वर. २. A.B.V. दानवाः. ३. V.C. –स्तेजसा युताः ४. A.B. देवताश्च सगंधर्वा. ५. A,B, मंत्रिणं तु. ६. V. –नैवोल्वणविभूषणान्. ७, A. तेषामत्युद्धतो.

रुचकस्य प्रमाणेन यक्षाः कार्या नराधिप ।
शशकस्य प्रमाणेन प्रधानं मानवं लिखेत् ॥ ११ ॥

पिशाचा वामनाः कुब्जाः प्रमथाश्च महीभुजः ।
[1]माननियमतः कार्या रूपनियमतस्तथा ॥ १२ ॥

[2]स्वानुरूपप्रमाणाश्च सर्वेषां [3]योषितः स्मृताः ।
किन्नरा द्विविधाः प्रोक्ता नृवक्त्रा हयविग्रहाः ॥ १३ ॥

नृदेहाश्चाश्ववक्त्राश्च तथान्ये परिकीर्तिताः ।
अश्ववक्त्रास्तु कर्तव्याः सर्वालङ्कारधारिणः ॥ १४ ॥

गीतवाद्यसमायुक्ता द्युतिमन्तस्तथैव च ।
उत्कचा राक्षसाः कार्या [4]विकृताक्षा विभीषणाः ॥ १५ ॥

[5]देवाकाराश्च कर्तव्या नागाः फणविराजिताः ।
सालङ्काराः स्मृताः सर्वे [6]यक्षास्तेऽभिहिता मया ॥ १६ ॥

सुराणां [7]प्रमथाः कार्याः प्रमाणेन विवर्जिताः ।
पिशाचाश्च तथा कार्याः [8]प्रमाणेन विवर्जिताः ॥ १७ ॥

नानासत्त्वमुखाः कार्या देवतानां तथा [9]गणाः ।
नानावेशा महाराज नानायुधधरास्तथा ॥ १८ ॥

नानाक्रीडाप्रसक्ताश्च नानाकर्मकरास्तथा ।
एकरूपास्तु कर्तव्या [10]वैष्णवास्तु तथा गणाः ॥ १९ ॥

तत्रापि तेषां कर्तव्या भेदाश्चत्वार एव [11]च ।
वासुदेवसमाः कार्या वासुदेवगणाः शुभाः ॥ २० ॥

सङ्कर्षणेन सदृशास्तद्गणाश्च तथा स्मृताः ।
प्रद्युम्नेनानिरुद्धेन तद्गणाः सदृशास्तथा ॥ २१ ॥

---

१. V. मानश्चियमतः कार्या रूपानियमतस्तथा. २. C. स्वानुरूपं. ३. A.B.C. योषिताः ४. V. विकलाक्षा ५. V. देवकाराश्च. ६. $S_1$,$S_2$ य एते. ७. C. प्रथमाः ८. A.B.C. प्रमाणेनैव वर्जिताः ९. C. गुणाः १०. V. वैष्णवानां तथा गणाः. C. वैष्णवास्तु तथा गताः ११. C. तु.

तत्प्रभावाः स्मृताः सर्वे तदायुधधरास्तथा ।
नीलोत्पलदलश्यामाश्चन्द्रशुभ्रास्तथैव च ॥ २२ ॥

तथा मरकताकाराः सिन्दूरसदृशप्रभाः ।
रुचकस्य तु मानेन वेश्याः कार्यास्तथा स्त्रियः ॥ २३ ॥

[1]वेशानामुद्धतं वेशं कार्यं शृङ्गार[2]सम्मतम् ।
[3]मालव्यमानतः कार्या लज्जावत्यः कुलस्त्रियः ॥ २४ ॥

नात्युन्नतेन वेशेन सालङ्कारास्तथैव च ।
दैत्यदानवयक्षाणां राक्षसानां तथैव च ॥ २५ ॥

[4]रूपवत्यस्तथा कार्याः पत्न्यो मनुजसत्तम ।
मातरः स्वेन रूपेण [5]तेषां कार्या नराधिप ॥ २६ ॥

पिशाचानां [6]तु पत्न्योऽपि कार्यास्तद्रूपसंयुताः ।
विभर्तृकास्तु कर्तव्याः स्त्रियः [7]पलितसंयुताः ॥ २७ ॥

शुक्लवस्त्रपरीधानाः [8]नानालङ्कारवर्जिताः ।
कुब्जा वामनिका वृद्धा तथा रूपवती भवेत् ॥ २८ ॥

राजस्त्रीणां परीवारे वृद्धः स्यात्कञ्चुकी पुनः ।
रुचकस्य तु मानेन वैश्यमानं विधीयते ॥ २९ ॥

शशकस्य तु मानेन शूद्रमानं तथैव च ।
यथाजात्यनुरूपेण [9]वेषेण मनुजेश्वर ॥ ३० ॥

दैत्यादियोषितां कार्याः परिचारस्त्रियस्सदा ।
महाशिरा [10]महोरस्को महानासो महाहनुः ॥ ३१ ॥

पीनस्कन्ध[11]भुजग्रीवः परिमाणेन [12]चोच्छ्रितः ।
त्रितरङ्ग[13]ललाटश्च [14]श्येनदृष्टिर्महाकटिः ॥ ३२ ॥

---

१. A.B.V. वेश्यानामुद्धतं. $S_1S_2$ वेशानामद्भुतं. २. A.—सस्मृतम्. ३. V. मालव्यामानतः. ४. C. रूपवत्यस्त्रियस्कार्यः. ५. A.B.V. तथा. ६. V. च. ७. A. पुलितसंयुताः. ८. V.C. सर्वालङ्कार- ९. A.B. $S_1.S_2$. रूपेण. १०. A.B. महारस्का महानासा. ११. A.B. -भुजग्रीवाः. १२. A.B. चोछ्रिताः. १३. A.B. -ललाटाश्च. १४. V. व्योमदृष्टि-

दृप्तश्चित्रविदा [1]कार्यः सेनायाः [2]पतिरूर्जितः।
योधाः कार्या महाराज प्रायशो भ्रुकुटीमुखाः॥ ३३॥

किञ्चिदुद्धृ(? द्ध)तवेशाश्च कार्याश्चोद्धतदर्शनाः।
[3]अभ्युद्गताश्च कर्तव्या आयुधीयाः [4]पदातयः॥ ३४॥

खड्गवर्मधराः कार्याः कर्णाटकवपुर्धराः।
वरबाणधराः कार्या नग्नजङ्घाश्च धन्विनः॥ ३५॥

नात्युद्धतेन वेशेन सोगानत्कास्तथैव [5]ते।
यथोक्तलक्षणाः कार्याः कुञ्जरास्तु [6]रगादयः॥ ३६॥

[7]हस्त्यारोहास्तु कर्तव्याः [8]सुद्गश्यामास्तु वर्णतः।
केशैश्च [9]जूटटसरैः सालङ्कारास्तथैव ते॥ ३७॥

उदीच्य[10]वेशाः कर्तव्याः तुरगाणां तु सादिनः।
उद्धतेन तु वेशेन कर्तव्या [11]बन्दिनस्तथा॥ ३८॥

सिरादर्शितकण्ठाश्च तथैवोन्मुखदृष्टयः।
आह्वानकास्तु कर्तव्याः कपिलाः केकरेक्षणाः॥ ३९॥

किञ्चिद्दानवसंकाशाः प्रांशवो दण्डपाणयः।
न केकरान् न कपिलान्युद्धे द्वन्द्वान्समालिखेत्॥ ४०॥

नात्युन्न(? द्ध)तेन वेशेन न च शान्तेन शस्यते।
पार्श्वबद्धेन खड्गेन प्रतीहारस्तु दण्डवान्॥ ४१॥

संवेष्टितशिरस्काश्च कर्तव्या वणिजा(? ज)स्तथा।
[12]गायना नर्तका ये च[13] वाद्यवादविशुद्धये॥ ४२॥

उद्धतेन तु वेषेण कार्यास्ते मनुजोत्तम।
आसन्नपलिताः कार्याः [14]सुभूषणविभूषिताः॥ ४३॥

---

१. B. कार्याः. २. A. पतिऊर्जितः C. पतिरूर्जितम्. ३. A. अत्युद्गताश्च. ४. C. पदातयाः ५. B. च. ६. A.B.C. –स्तुरगास्तथा. ७. C. हस्त्यारोहाश्च. ८. V.B. मुहुः श्यामास्तु. ९. V.B.C. जूटटमरैः. १०. A.C. –वेश्याः. ११. V. वणिजस्तथा. १२. A. गायनानंतकाये B. गायना न तु काये. १३. V. वा. १४. V.C. स्वभूषण.

पौरजानपदाः श्रेष्ठाः शुभ्रवस्त्रविभूषणाः ।
[1]प्रसृतप्रवणाः [2]प्रह्वाः स्वभावप्रिय[3]दर्शनाः ॥ ४४ ॥

[4]स्वकर्मोपस्करव्यग्रः कार्यः कर्मकरो जनः ।
प्रांशवः पीनगात्राश्च पीनग्रीवशिरोधराः ॥ ४५ ॥

[5]उदग्रा नीचकेशाश्च मल्लाः कार्यास्तथोद्धताः ।
वृषाः केसरिणश्चैव [6]याश्चान्याः सत्त्वजातयः ॥ ४६ ॥

यथा [7]भूमिनिवेशास्ते लोकं दृष्ट्वा नराधिप ।
एतद्रूपसमुद्देशमदृष्टानां तवेरितम् ॥ ४७ ॥

दृष्टं [8]सुसदृशं कार्यं सर्वेषामविशेषतः ।
चित्रे सादृश्यकरणं [9]प्रधानं परिकीर्तितम् ॥ ४८ ॥

बुद्ध्वा रूपं यथावेशं वर्णं च मनुजोत्तम ।
देशे देशे नराः कार्या यथावत्तत्समुद्भवाः ॥ ४९ ॥

देशं नियोगं स्थानं च कर्म बुद्ध्वा च यत्नतः ।
आसनं शयनं यानं वेशं कार्यं नराधिप ॥ ५० ॥

सरितां सशरीराणां वाहनानि प्रदर्शयेत् ।
पूर्णकुम्भकराः कार्यास्तथा [10]नामितजानवः ॥ ५१ ॥

शैलानां शिखरं मूर्ध्नि दर्शयेन्मनुजोत्तम ।
[11]द्वीपानां च करे कार्यं तथा भूमण्डलं शुभम् ॥ ५२ ॥

[12]पर्वताश्च तथा राजंस्तथा शिखरपाणयः ।
रत्नपात्रकराः कार्याः सागरा मनुजोत्तम ॥ ५३ ॥

समुद्राणां प्रभास्थाने सलिलं तु प्रदर्शयेत् ।
आयुधानां [13]तु तच्चिह्नं किञ्चिन्मूर्धनि दर्शयेत् ॥ ५४ ॥

---

१. A.B.C. प्रसृतप्रवणः. २. A.B. प्रह्वः. C. प्राहुः. ३. A.B.C. –दर्शिनः ४. A. $S_1$.$S_2$. सुकर्मो– ५. V. उग्राश्च. ६. C. यथान्यास्सत्त्वजातयः ७. B.V.$S_1$.$S_2$. भूमिनिवेश्यास्ते. ८. V. C. समदृशं. ९. A. प्रयाणं १०. A. नमितजानवः. ११. A.B.V. द्वीपानां च करैः १२. V. B.C. omit पर्वताश्च तथा. १३. V.C. च. V. (f) च तद्वद्भिः.

निधीनां दर्शयेत्कुम्भं शङ्खं शङ्खस्य दर्शयेत् ।
पद्मं पद्मस्य राजेन्द्र शेषाणामनुरूपतः ॥ ५५ ॥

कार्यस्यावयवाः कार्याः सदेहास्सदृशाः पृथक् ।
दिव्यानां दर्शयेच्चिह्नमक्षमालां च पुस्तकम् ॥ ५६ ॥

अतः परं प्रवक्ष्यामि रूपं [1]यद्यस्य दृश्यते ।
आकाशं दर्शयेद्विद्वा[2]न्विवर्णं खगमाकुलम् ॥ ५७ ॥

तथैव दर्शयेद्राजँस्तारकामण्डितं दिवम् ।
भूमिं च जाङ्गलानूपमिश्रां स्वैः स्वैस्तथा गुणैः ॥ ५८ ॥

पर्वतं तु शिलाजालैः शिखरैर्धातुभिर्द्रुमैः ।
निर्झरैर्भुजगैश्चैव दर्शयेन्नृपसत्तम ॥ ५९ ॥

वनं नानाविधैर्वृक्षैर्विहङ्गैः श्वापदैस्तथा ।
तोयं च दर्शयेद्विद्वाननन्तैर्मत्स्यकच्छपैः ॥ ६० ॥

[3]पद्माक्षैश्च महाराज तथान्यैर्जलजैर्गुणैः ।
देवतावेश्मभिश्चित्रैः प्रासादापणवेश्मभिः ॥ ६१ ॥

नगरं दर्शयेद्विद्वान्राजमार्गैश्च शोभनैः ।
वसत्या दर्शयेद्ग्रामं किञ्चिदुद्यानभूषितम् ॥ ६२ ॥

सर्वेषामथ दुर्गाणां कर्तव्यं दर्शनं तथा ।
[4]सुभूमिविनिवेशेन वप्राट्टालकपर्वतैः ॥ ६३ ॥

पण्ययुक्तास्तु कर्तव्यास्तथैवापणभूमयः ।
आपानभूमिः कर्तव्या पानयुक्ता नराकुला ॥ ६४ ॥

उत्तरीयविहीनांश्च [5]द्यूतसक्तान्प्रदर्शयेत् ।
जिताञ्शोकसमायुक्तान्हृष्टान् लब्धजयांस्तथा ॥ ६५ ॥

चतुरङ्गबलोपेतां प्रहरद्भिर्नरैर्युताम् ।
मृतावयवरक्ताढ्यां [6]रणभूमिं प्रदर्शयेत् ॥ ६६ ॥

---

१. A.B. यदस्य. २. A.B. –न्स्ववर्णं. $S_1.S_2$. –न्सवर्णं. ३. C. पद्माख्यैश्च महाराज. ४. V.C. स्वभूमि– B. सा भूमि– ५. B. द्यूतमूक्ता– ६. C. राजभूमिं.

चिताकुणपसंयुक्तं श्मशानं च तथा नृप ।
युक्तं सभौरैरुष्ट्राद्यैर्मार्गं सार्थं प्रदर्शयेत् ॥ ६७ ॥

सचन्द्रग्रहनक्षत्रां तथा दार्शितलौकिकाम् ।
आसन्नतस्करां रात्रिं दर्शयेत्सुप्तमानवाम् ॥ ६८ ॥

प्राग्रात्रे दर्शयेत्तत्र तथा [1]चैवाभिसारिकाम् ।
सारुणो म्लानदीपश्च [2]प्रत्यूषो [3]रुतकुक्कुटः ॥ ६९ ॥

कर्मव्यग्रजनप्रायः कर्तव्यो वा नरस्तथा ।
द्विजैर्नियम( ? मि )भिर्युक्तां रक्तां संध्यां प्रदर्शयेत् ॥ ७० ॥

तमसो दर्शनं [4]कार्यं हस्तसंसर्पकैर्नरैः ।
कुमुदानां विकासे च ज्योत्स्नां चन्द्रे प्रदर्शयेत् ॥ ७१ ॥

दर्शयेत्सरजस्यं( ? स्यां ) च [5]वाप्यां( ? पीं ) पर्णोत्करावृताम् ।
सद्वृ( ? संवृ )त्त( ? त )मानवप्रायां वृष्टिं [6]वृष्ट्यां प्रदर्शयेत् ॥ ७२ ॥

प्राणिनां क्लेशतप्तानामादित्येन [7]निदर्शयेत् ।
वृक्षैर्वसन्तजैः फुल्लैः [8]कोकिलामधुपोत्कटैः ॥ ७३ ॥

प्रहृष्टनरनारीकं वसन्तं [9]तु प्रदर्शयेत् ।
क्लान्तैः कार्यं नरैर्ग्रीष्मं मृगै श्छायागतैस्तथा ॥ ७४ ॥

महिषैः [10]पङ्कसंलीनैस्तथा शुष्क[11]जलाशयम् ॥
विहङ्गैर्द्रुमसंलीनैः [12]सिंहव्याघ्रैर्गृ[ ? गु ]ह्यागतैः ॥ ७५ ॥

तोयनम्रघनैर्युक्तं सेन्द्रचापविभूषणैः ।
[13]विद्युद्विद्योतनैर्युक्तां प्रावृषं दर्शयेत्तथा ॥ ७६ ॥

सफलद्रुमसंयुक्तां पक्वसस्यां वसुन्धराम् ।
सहंसपद्मसलिलां शरदं तु [14]तदा लिखेत् ॥ ७७ ॥

---

१. A.B. चैवाभिचारिकम्. २. A.B.C. प्रदोषो. ३. A. हृतकुक्कुटः ४. V. वासे. ५. V. शय्यां कर्णोत्करावृताम्. ६. A.B. वृष्ट्या स न्दर्शयेत् C. वृष्ट्यामदर्शयेत्. ७. V. निदर्शनम्. ८. $S_1.S_2$. कोकिलैः ९. V. च. १०. B.C.V. पङ्कमलीनैस्तथा. ११. A. जलाश्रयम्, १२. C. सिंहव्याघ्रैस्सह्यागतैः १३. A.B.C. विद्युद्द्योतयत्युक्तां. १४. B.C.V. तथा.

सबाष्प[1]सलिलस्थानं तथा छन्नवसुन्धरम् ।
सनीहारदिगन्तं च हेमन्तं दर्शयेद् बुधः ॥ ७८ ॥

हृष्टवायसमातङ्गं शीतार्तजनसङ्कुलम् ।
शिशिरं तु लिखेद्विद्वान् हिमच्छन्नदिगन्तरम् ॥ ७९ ॥

वृक्षाणां पुष्पफलतः प्राणिनां मदतस्तथा ।
ऋतूनां दर्शनं कार्यं लोकान् दृष्ट्वा नराधिप ॥ ८० ॥

रसभावाश्च कर्तव्या यथापूर्वमुदाहृताः ।
यथायोगं तु युञ्जीत नृत्ताभिहितमत्र च ॥ ८१ ॥

शुष्कं वर्तनया [2]यस्तु चित्रं तन्मध्यमं [3]स्मृतम् ।
शुष्कार्द्रमधमं प्रोक्तं [4]चार्द्रमेव तथोत्तमम् ॥ ८२ ॥

[5]यथादेयं(? हं) यथाकालं यथादेशं [6]यथावयः ।
क्रियमाणं भवेद्धन्यं विपरीतमतोऽन्यथा ॥ ८३ ॥

इति विचक्षणबुद्धिविकल्पितैः
[7]करणकान्तिविलासरसादिभिः ।
लिखितमीक्षणलोचनमादरा-
द्भवति चित्रमभीप्सितकामदम् ॥ ८४ ॥

इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे रूपनिर्माणं नाम ॥ ४२ ॥

---

१. C. –सलिलं. २. A.B.V. वस्तु. ३. C. स्मृता. ४. A.B. चांद्रमेव. ५. $S_1.S_2$. यथादेशं. ६. C. यथायवः. ७. C. करणकीर्ति–.

# त्रिचत्वारिंशोऽध्यायः ।

मार्कण्डेय :— शृङ्गार[1]हास्यकरुणवीररौद्रभयानकाः ।
बीभत्साद्भुतशान्ताश्च नव चित्ररसाः स्मृताः ॥ १ ॥

तत्र यत्कान्तिलावण्य[2]लेखामाधुर्यसुन्दरम् ।
विदग्धवेशाभरणं शृङ्गारे तु रसे भवेत् ॥ २ ॥

यत्कुब्जवामनप्रायमीषद्विकटदर्शनम् ।
[3]वृथा हि हस्तं सङ्कोच्य [4]तत्स्याद्धास्यकरं रसे ॥ ३ ॥

[5]याच्ञाविरहसंत्यागविक्रय[6]व्यसनादिषु ।
अनुकम्पितकं यत्स्यात्लिखेत्त[7]त्करुणे रसे ॥ ४ ॥

पारुष्यविकृतिक्रोधविष( ? श )[8]स्त्यर्थान्नदूषणम् ।
[9]दीप्रशस्त्राभरणवत्कृतं [10]रौद्ररसे भवेत् ॥ ५ ॥

प्रतिज्ञागर्भशौर्यादिष्व[11]र्थेष्वौदार्यदर्शनम् ।
सस्मयं सभ्रुकुटिवद्वीरं वीररसेऽद्भुतम् ॥ ६ ॥

दुष्टदुर्दर्श[12]नोन्मत्तहिंस्रव्यापादकादि यत् ।
तत्स्याद्भयानकरसे प्रयोगे चित्रकर्मणः ॥ ७ ॥

श्मशान[13]गर्हिताघातकरणं स्थान[14]दर्शितम् ।
[15]यच्चित्रं [16]चित्रवच्छ्लिष्टं तद्बीभत्सरसोद्भवम् ॥ ८ ॥

यदा विनीत[17]रोमाञ्चचिन्तां( ? ञ्चाञ्चित )तार्क्ष्यमुखानतम् ।
प्रदर्शयति चान्योऽन्यं तदद्भुतरसाश्रयम् ॥ ९ ॥

यच्च[18]त्सौम्याकृतिध्यानधारणासन[19]बन्धनम् ।
तपस्विजनभूयिष्ठं तत्तु शान्ते रसे भवेत् ॥ १० ॥

---

१. V. –हास– २. C. –लेखमाधुर्य– ३. A. वृथाविहस्तं B. वृथा विहस्तं V. वृथा च हस्तं. ४. A.B. तत्स्याद्धास्यकरे रसे. C. तत्स्याद्धास्यकरं रसं. ५. B.C.V. याच्ञाविरहासन्त्याग. ६. B. –व्यमनादिषु. ७. V. –त्करुणारसे. ८. V. –स्त्वार्था न दूषणम्. ९. A. दीप्रशस्ता– १०. C. रौद्रे रसे. ११. A. –र्थेष्टौदार्य– १२. A. –नोल्लुष्णहिंस्र– B.C. –नोल्लुष्महिंस्र– १३. V. –गर्हितं घात– १४. B. –दर्शनम् V. –दारुणम् १५. A.B. सूत्रितं. १६. A. चित्रविछ्लेष्ट B. चित्रविच्छ्लेष्ट. १७. $S_1.S_2$. –रोमाञ्चाचिंतातांक्षुणमुखानतम्. A. ताक्षस्मुखनतम् १८. A. –त्सौम्याहृति. १९. A. सन्नबंधनम्.

शृङ्गारहास्यशान्ताख्या [1]लेखनीया गृहेषु ते ।
परशेषा न कर्तव्या कदाचिदपि कस्यचित् ॥ ११ ॥

देववेश्मनि कर्तव्या रसाः सर्वे नृपालये ।
राजवेश्मनि नो कार्या राज्ञां वासगृहेषु ते ॥ १२ ॥

[2]सभावेश्मसु कर्तव्या राज्ञां सर्वरसा गृहे ।
वर्जयित्वा सभां राज्ञो देववेश्म तथैव च ॥ १३ ॥

युद्धश्मशानकरु[3]णामृतदुःखार्तकुत्सितान् ।
अमङ्गल्यांश्च न लिखेत्कदाचिदपि वेश्मसु ॥ १४ ॥

निधिशृङ्गान्वृषात्राजन्निधि[4]हस्तान्मतङ्गजान् ।
निधी[5]न्विद्याधरान् [6]राजनृषयो गरुडस्तथा ॥ १५ ॥

[7]हनूमांश्च सुमङ्गल्या ये च लोके प्रकीर्तिताः ।
लिखितव्या महाराज गृहेषु सततं नृणाम् ॥ १६ ॥

चित्रकर्म न कर्तव्य[8]मात्मना स्वगृहे नृप ।
दौर्बल्यं स्थूलरेखत्वमविभक्तत्वमेव च ॥ १७ ॥

[9]बृहद्गण्डौष्ठनेत्रत्वं वक्ररेखत्वमेव च ।
वर्णानां संकरश्चात्र [10]चित्रदोषाः प्रकीर्तिताः ॥ १८ ॥

स्थानं प्रमाणं [11]भूलम्भो मधुरत्वं विभक्तता ।
सादृश्यं क्षयवृद्धी च गुणाष्टकमिदं स्मृतम् ॥ १९ ॥

स्थानहीनं गतरसं शून्यदृष्टिमलीमसम् ।
चेतनारहितं [12]यत्स्यात्तदशस्तं प्रकीर्तितम् ॥ २० ॥

लसतीव [13] च भूलम्भो श्लिष्यतीव तथा नृप ।
[14]हसतीव च माधुर्यं सजीव इव दृश्यते ॥ २१ ॥

---

१. A. लेखनीय. २. A.B. –सभयेषु न कर्तव्या. ३. A. –करुणमृत– ४. A.B. –हस्ता-न्नताङ्गजान्. ५. A.B.V. –न्विद्याधरा. ६. A.B.C. राजनृपीन्गरुडमेव च ७. A.B.C. हनूमंतं च मंगल्या. ८. B.–मात्मनः ९. V. omits बृह... मेव च. C. बृहद्गण्डोष्ठ– १०. V. चित्रदीपाः ११. A.B. भूलंदः सपुरत्वं १२. V.C. वास्यात्त- १३. V. तु भूलम्बो विभ्यतीव. १४. B. हसंतीव

सश्वास इव यच्चित्रं तच्चित्रं शुभलक्षणम् ।
हीनाङ्गं मलिनं शून्यं बद्धव्याधिभयाकुलैः ॥ २२ ॥

वृत्तं प्रकीर्णकेशैश्च सुमङ्गल्यै[1]र्विवर्जयेत् ।
प्रतीतं च लिखेद्धीमान्नाप्र[2]तीतैः कथञ्चन ॥ २३ ॥

शास्त्रज्ञैः सुकृतैर्दक्षैश्चित्रं हि मनुजाधिप ।
श्रियमावहति क्षिप्रमलक्ष्मीं चापकर्षति ॥ २४ ॥

निर्णेजयति चोत्कण्ठां [3]नि(? न)रुगद्व्यागतं शुभम् ।
शुद्धां प्रथयति प्रीतिं जनयत्यतुलामपि ॥ २५ ॥

दुःस्वप्नदर्शनं हन्ति प्रीणाति [4]गृहदेवताम् ।
न च [5]शून्यमिवाभाति यत्र चित्रं प्रतिष्ठितम् ॥ २६ ॥

धर्मार्थकामशुभदं कर्णं चाप्यनलङ्कृतम् ।
शल्यविद्धं च वृद्धं च यः करोति स चित्रवित् ॥ २७ ॥

[6]तरङ्गाग्निशिखाधूमं [7]वैजयन्त्यं वरादिकम् ।
वायुगत्या लिखेद्यस्तु विज्ञेयः [8]स तु चित्रवित् ॥ २८ ॥

[9]सुप्तं च चेतनायुक्तं मृतं चैतन्यवर्जितम् ।
निम्नोन्नतविभागं च यः करोति स चित्रवित् ॥ २९ ॥

एतेषां खलु सर्वेषामानुलोम्यं प्रशस्यते ।
सम्मुखत्वमथैतेषां चित्रे यत्नाद्विवर्जयेत् ॥ ३० ॥

यथा चित्रं तथैवोक्तं खातपूर्वं नराधिप ।
सुवर्ण[10]रूप्यताम्रादि तच्च [11]लोकेषु दर्शयेत् ॥ ३१ ॥

शिलादारुषु लौहेषु प्रतिमाकरणं भवेत् ।
अनेनैव विधानेन यथा चित्रमुदाहृतम् ॥ ३२ ॥

---

१. A.B.C. –विवर्णयेत्. २. $S_1S_2$ –प्रतीतं. ३. $S_1S_2$ निरुण आगतं. ४. V. गृहदैवतम् C. गृहदैवताम् ५. V. तु. ६. C. omits Ślo. no. 28. ७. A.C.V. वैजयन्त्यस्वरादिकम्. ८. V. मत्तचित्रवित्. ९. A.B. omit Ślo no. 29. १०. A. –रौप्य– ११. A.B.V. लोहेषु.

तथानेन [1]विधानेन पुस्तकर्म विधीयते।
द्विविधं तच्च कथितं घनं सुशिरमेव च ॥ ३३ ॥

घनैर्लोहैः शिलाभिश्च दारुमृद्भिः सदा भवेत्।
चर्मणा सुशिरः कार्यो दारुलोहैस्तथैव च ॥ ३४ ॥

देयो मृत्तिकया लेपः पुस्ते चर्मकृते [2]दृढम्।
[3]सूत्रेऽनेन विधानेन चित्रवस्त्रे तथालिखेत् ॥ ३५ ॥

एतदुद्देशमात्रेण यदा ते कथितं नृप।
अशक्यो विस्तराद्वक्तुं बहुवर्षशतैरपि ॥ ३६ ॥

यदत्र नोक्तं तन्नृत्ताद्विज्ञेयं वसुधाधिप।
[4]नृत्तेऽपि नोक्तं [5]तच्चित्रात्तत्र योज्यं नराधिप ॥ ३७ ॥

कलानां प्रवरं चित्रं धर्मकामार्थमोक्षदम्।
मङ्गल्यं [6]परमं [7]ह्येतद् गृहे यत्र प्रतिष्ठितम् ॥ ३८ ॥

यथा सुमेरुः प्रवरो नगानां यथाण्डजानां गरुडः प्रधानः।
यथा [8]जनानां प्रवरः क्षितीशस्तथा कलानामिह चित्रकल्पः ॥ ३९ ॥

इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे शृङ्गारादिभावयुक्तादि नाम ॥ ४३ ॥

समाप्तं चित्रसूत्रम्।

---

१. A. प्रधानेन. २. V. दृढः ३. B.C. सूत्रे वा न. ४. $S_1S_2$ नृत्तेऽपि यन्नोक्तं तच्चित्रं. ५. V. तच्चित्रेनात्र. V.(f.) तच्चित्रात्ततो. ६. V.B. प्रथमं. ७. A.B.V. चैतद्गृहे. ८. V.C. नराणां. B. सतां.

## चतुश्चत्वारिंशोऽध्यायः ।

वज्र :— *देवतारूपनिर्माणं कथयस्व [1]ममानघ ।
यस्मा[2]त्सन्निहिता नित्यं शास्त्रवत् साकृताभ(? तिर्भ )वेत् ॥ १ ॥

मार्कण्डेय :— देवतारूपनिर्माणं वदतः [3]शृणु पार्थिव ।
आदावेव प्रवक्ष्यामि त्रिमूर्तेस्तव पार्थिव ॥ २ ॥

विष्णोरमितवीर्यस्य प्रतिमालक्षणं शुभम् ।
ब्राह्मी तु राजसी मूर्तिस्तस्य सर्वप्रवर्तिनी ॥ ३ ॥

सात्त्विकी वैष्णवी ज्ञेया संसारपरि[4]पालिनी ।
तामसी च तथा रौद्री ज्ञेया संहारकारिणी ॥ ४ ॥

ब्रह्माणं कारयेद्विद्वान्देवं [5]सौम्यं चतुर्मुखम् ।
बद्धपद्मासनं तोष्यं तथा कृष्णाजिनाम्बरम् ॥ ५ ॥

जटाधरं चतुर्बाहुं सप्तहंसे रथे स्थितम् ।
वामे न्यस्तं करतले तस्यैकं दोर्युगं भवेत् ॥ ६ ॥

एकस्मिन्दक्षिणे पाणावक्षमाला तथा शुभा ।
[6]कमण्डलुर्द्वितीये च सर्वाभरण[7]धारिणः ॥ ७ ॥

सर्वलक्षणयुक्तस्य शान्तरूपस्य पार्थिव ।
पद्मपत्रदलाभाभं ध्यानसंमीलितेक्षणम् ॥ ८ ॥

अर्चायां कारयेद्देवं चित्रे वा पुस्तकर्मणि ।
देवदेवं तथा विष्णुं कारयेद्गरुडस्थितम् ॥ ९ ॥

कौस्तुभोद्भासितोरस्कं सर्वाभरणधारिणम् ।
सजलाम्बुदसच्छायं पीतदिव्याम्बरं तथा ॥ १० ॥

---

*Compare अ. २ श्लो. १. १. A. समानघ. २. B. –सन्निहितां. ३. B. शृण्व. ४. B.C. –पालनी. ५. A.B. सोम्यं. ६. A.B.C. कमण्डलुद्वितीयश्च. ७. A.B.C. –धारणः

मुखाश्च कार्याश्चत्वारो बाहवो द्विगुणास्तथा ।
सौम्यं तु वदनं पूर्वं नारसिंहं तु दक्षिणम् ॥ ११ ॥

कापिलं पश्चिमं वक्त्रं तथा [1]वाराहमुत्तरम् ।
तस्य दक्षिणहस्तेषु बाणाक्षमुसलादयः ॥ १२ ॥

चर्म चीरं धनुश्चेन्द्रचापेषू (? श्चैन्द्रं वामेषु) वनमालिनः ।
कार्याणि विष्णोर्धर्मज्ञ [2]शृणु रूपं पिनाकिनः ॥ १३ ॥

देवदेवं [3]महादेवं वृषारूढं तु कारयेत् ।
तस्य वक्त्राणि कार्याणि पञ्च यादवनंदन ॥ १४ ॥

सर्वाणि सौम्यरूपाणि दक्षिणं विकटं मुखम् ।
[4]कपालमालिनं भीमं जगत्संहारकारकम् ॥ १५ ॥

त्रिनेत्राणि च सर्वाणि वदनं [5]ह्युत्तरं विना ।
जटाकलापे महति तस्य चन्द्रकला भवेत् ॥ १६ ॥

तस्योपरिष्टाद्वदनं पञ्चमं तु विधीयते ।
यज्ञोपवीतं च तथा वासुकिं तस्य कारयेत् ॥ १७ ॥

दशबाहुस्तथा कार्यो देवदेवो [6]महेश्वरः ।
अक्षमालां त्रिशूलं च शरदण्डमथोत्पलम् ॥ १८ ॥

तस्य दक्षिणहस्तेषु कर्तव्यानि महाभुज ।
वामेषु [7]मातुलुङ्गं च चापादर्शौ [8]कमण्डलुम् ॥ १९ ॥

तथा चर्म च कर्तव्यं देवदेवस्य शूलिनः ।
[9]वर्णस्तथा च [10]कर्तव्यः चन्द्रांशुसदृशप्रभः[11] ॥ २० ॥

एतत्त्रिमूर्तेस्तव रूपमुक्तं
[12]महानुभावस्य जनार्दनस्य ।

---

१. B. वाराहमुत्तमम्. २. B. श्रृण्व. ३. V. महाहेवं. ४. A.B. कापाल– ५. A. तूत्तरं. ६. A. महीश्वरः ७. V.B. मातुलिङ्गं. ८. B. कमंडलम्. ९. V.B. वर्णास्तथा. १०. V.C. कर्तव्याश्चन्द्रां– ११. V. –प्रभाः १२. V. माहानुभावस्य.

[1]पद्मस्य रूपं तव [2]वच्मि राजन्
यत्रार्चनं कार्यमथेश्वराणाम् ॥ २१ ॥

इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे त्रिमूर्तिनिर्माणं नाम ॥ ४४ ॥

---

१. V. पद्मस्वरूपं. २. B. वश्मि.

## पञ्चचत्वारिंशोऽध्यायः ।

मार्कण्डेय :— सौवर्णं राजतं ताम्रमारकूटमयं तथा ।
द्विहस्तमात्रं कर्तव्यं कमलं चारुकेसरम् ॥ १ ॥

तस्याष्ट[1]भागाः कर्तव्याः कर्णिका नृप वर्तुला ।
अष्टभागोच्छ्रिता चैव पत्रे न्यस्ता तु कारयेत् ॥ २ ॥

[2]एकेनोनत्रिपञ्चाशत्कर्णिकायां तु कारयेत् ।
वर्तुला(?:) कर्णिकाच्छेदा यदमात्र[3]समन्विताः ॥ ३ ॥

षोडशांशेन कर्तव्यं तद्धि विस्तरतस्तथा ।
[4]शेषं पत्रैस्तु सुस्निग्धैः पूरयेदष्टभि[5]स्ततः ॥ ४ ॥

तत्र प्रतिष्ठा [6]कर्तव्या तत्र देवांस्तु पूजयेत् ।
[7]ब्रह्माणं पूजयेत्तत्र तत्र संपूजयेद्धरिम् ॥ ५ ॥

तत्र संपूजयेद्रुद्रं तत्र संपूजयेच्छ्रियम् ।
तत्र संपूजयेच्छक्रं देवराजं जगत्पतिम् ॥ ६ ॥

तत्र संपूजयेत्सूर्यं शशिनं तत्र पूजयेत् ।
यमेव मनसोद्दिश्य देवं पद्मं [8]प्रतिष्ठितम् ॥ ७ ॥

तमेव पूजयेत्तत्र नान्यं देवं [9]कथञ्चन ॥ ८ ॥

पद्मस्य रूपं कथितं तवैतत्
पद्मं समग्रा वसुधा निरुक्ता ।

तत्रार्चनं कार्यमथेश्वराणां
तत्रार्चितास्ते वरदा भवन्ति ॥ ९ ॥

इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे पद्मरूपनिरूपणं नाम ॥ ४५ ॥

---

१. A.B. –भागा कर्तव्या. २. V.B. एकतोन– ३. A.B. –समन्विता. ४. A.B. शेषपत्रैस्तु सुसमैः C. शेषपत्रैसु कुसुमैः ५. V. स्तथा. ६. C. कर्तव्यास्तत्र. ७. B. ब्राह्मणं. ८. A.B.C. प्रतिष्ठयेत्. ९. C. कदाचन.

## षष्ठचत्वारिंशोऽध्यायः।

वज्र :—

रूपगन्धरसैर्हीनः शब्दस्पर्शविवर्जितः।
[१]पुरुषस्तु त्वया प्रोक्तस्तस्य रूपमिदं कथम् ॥ १ ॥

मार्कण्डेय :—

प्रकृतिर्विकृतिस्तस्य [२]द्वे रूपे परमात्मनः।
अलक्ष्यं तस्य तद्रूपं प्रकृतिः सा प्रकीर्तिता ॥ २ ॥

साकारा विकृतिर्ज्ञेया तस्य सर्वं जगत्स्मृतम्।
[३]पूजाध्या[४]नादिकं कर्तुं साकारस्यैव शक्यते ॥ ३ ॥

स्वतस्तु [५]देवः साकारः पूजनीयो यथाविधि।
[६]अव्यक्ता हि गतिर्दुःखं देहभृद्भिरवाप्यते ॥ ४ ॥

अतो [७]भगवतानेन स्वेच्छया [८]यत्प्रदर्शितम्।
प्रादुर्भाविष्वथाकारं [९]तदर्चन्ति दिवौकसः ॥ ५ ॥

एतस्मात्कारणा[१०]त्पूजा साकारस्य विधीयते।
हेतुमच्च तदाकारं तन्मे निगदतः शृणु ॥ ६ ॥

अरुणं रजसो वर्णं तेन पद्माग्रसन्निभः।
ब्रह्मा देववरो ज्ञेयः सर्वभूतनमस्कृतः ॥ ७ ॥

ऋग्वेदः पूर्ववदनं यजुर्वेदस्तु दक्षिणम्।
पश्चिमं सामवेदः स्या[११]दाथर्वणमथोत्तरम् ॥ ८ ॥

ये वेदास्ते मुखा ज्ञेयाश्चतस्रो बाहवो दिशः।
आप एव जगत्सर्वं स्थावरं जङ्गमं तथा ॥ ९ ॥

ताश्च धारयते ब्रह्मा तेन हस्ते कमण्डलुः।
अक्षमाला विनिर्दिष्टा कालस्तु ब्रह्मणः करे ॥ १० ॥

---

१. A.B. पुरुषस्य. २. V. रुपेण– ३. A. पूजां– ४. B. –ध्यानाधिकं. ५. V.C. देवस्यांकारः ६. A. अविक्ता. ७. A.B.C. भगवतातेन. ८. V. तत्प्रदिर्शितम्. ९. तं दिशन्ति. १०. B. –त्पूजामाकारस्य. ११. A. –थर्वाण–

[1]कलनात्सर्वभूतानां काल इत्यभिधीयते ।
[2]यज्ञं वितन्वते सन्तः शुक्लाशुक्लेन कर्मणा ॥ ११ ॥

[3]शुक्लाशुक्लमतो ज्ञेयं वासः कृष्णाजिनं विभोः ।
भूर्लोकश्च भुवो लोकः स्वर्लोकोऽथ महस्तथा ॥ १२ ॥

जनस्तपश्च सत्यं च सप्त [4]लोकाः प्रकीर्तिताः ।
ये लोकास्ते रथे हंसा[5] ब्रह्मणः परमेष्ठिनः ॥ १३ ॥

विष्णुनाभौ समुत्पन्नं यत्पद्मं सा [6]मही द्विज ।
मेरुस्तु कर्णिका तस्य विज्ञेया राजसत्तम ॥ १४ ॥

[7]सर्वत्र पार्थिवस्थैर्यं ध्यानबन्धमतः स्थितम् ।
पद्मासनेन भगवा[8]न्विधत्ते पार्थिवेन तु ॥ १५ ॥

आत्मनः परमं धाम रूपहीनं विचिन्तयेत् ।
दृष्ट्यर्थं जगतामास्ते ध्यानसम्मीलितेक्षणः ॥ १६ ॥

[9]तथैवोषधयो [10]राजञ्जगद्धारणकारणाः ।
ब्रह्मणस्ता जटा ज्ञेयाः सर्वगस्य महात्मनः ॥ १७ ॥

प्रकाशकानि लोकस्य विद्यास्थानानि यानि च ।
तस्याभरणजातानि ज्ञेयानि परमेष्ठिनः ॥ १८ ॥

एतद्धि तस्याप्रतिमस्य रूपं
तवेरितं सर्वजगन्मयस्य ।
एवं शरीरेण जगत्समग्रं
संधारयत्येव [11]जगत्प्रधानः ॥ १९ ॥

**इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे ब्रह्मरूपनिर्माणं नाम ॥ ४६ ॥**

---

१. B. कलाना– २. V. यज्ञो विस्तीर्यते सर्वैः ३. C. शुक्लाशुक्लापरो ४. B. लोकः ५. C. हंस. ६. V. महीभुजः. ७. V. (f.) पर्वतं पार्थिव स्थैर्यं ध्यानमन्धमतः परम् । C. पर्वतं पार्थिव स्थैर्यं ध्यानमन्धमतस्स्थिरम् । ८. A.B. –न्विदत्ते. ९. A. तथैवौषधयो. १०. A.C. राजञ्जगद्धारणकारणम्. B. राजंजगद्धारेणकारणम्. ११. A. जगत्प्रधानम्.

## सप्तचत्वारिंशोऽध्यायः ।

मार्कण्डेय :—

[१]ॐ परस्य पुरुषस्यैषा संसारे विकृतिर्मता ।
सर्वा च [२]विकृतिः कृष्णा तेन संसारपालनम् ॥ १ ॥

[३]ॐ [४]कृष्णरूपं स भगवान्विधत्ते भूतभावनः ।
ब्रह्मणैव हरेः प्रोक्तं सर्वाभरणधारणम् ॥ २ ॥

बिभर्ति वक्षसा ज्ञानं कौस्तुभं विमलं हरिः ।
कृष्णा दीर्घा विचित्रा च वनमाला [५]प्रकीर्तिता ॥ ३ ॥

[६]यया सर्वमिदं बद्धं [७]जगद्राजंश्चराचरम् ।
अविद्या वसनं तस्य संसार[८]परिपालिनी ॥ ४ ॥

विद्या शुक्ला विनिर्दिष्टा कृष्णमज्ञानमुच्यते ।
[९]अज्ञानविद्या मध्यस्था [१०]त्वविद्या परिकीर्तिता ॥ ५ ॥

न कृष्णा न तथा शुक्ला तेन विद्येयमुत्तमा ।
अन्तरालं बिभर्त्येव [११]सुवर्णकनकोपमम् ॥ ६ ॥

मनस्तु गरुडो [१२]ज्ञेयः सर्वभूतशरीरगम् ।
तस्माच्छीघ्रतरं नास्ति तथैव बलवत्तरम् ॥ ७ ॥

दिशश्चतस्रो धर्मज्ञ तावत्यो विदिशस्तथा ।
बाहवोऽष्टौ विनिर्दिष्टास्तस्य देवस्य शार्ङ्गिणः ॥ ८ ॥

बालं ज्ञानं तथैश्वर्यं शक्तिश्च यदुनन्दन ।
विज्ञेयं देवदेवस्य तस्य वक्त्रचतुष्टयम् ॥ ९ ॥

वासुदेवश्च भगवांस्तथा सङ्कर्षणः प्रभुः ।
प्रद्युम्नश्चानिरुद्धश्च बलाद्याः परिकीर्तिताः ॥ १० ॥

---

१. V.B.C. omit ॐ. २. B. विकृति। ३. V.B.C. omit ॐ. ४. कृष्णरूपस्स. ५. B. प्रकीर्तितः ६. A.B.C.V. यथा. ७. A. जगन्राजं–. ८. A.B.C. –परिपालनी. ९. A. अज्ञाविद्या च. १०. C. हि अविद्या. ११. A. सावर्णकनकेपमम्. १२. B. ज्ञेयाः.

द्वौ द्वौ भुजौ तु विज्ञेयौ प्रतिवक्त्रं महात्मनः ।
वासुदेवस्य करयोर्ज्ञातव्यौ [1]सूर्यरात्रिपौ ॥ ११ ॥

सङ्कर्षणस्य [2]करयोस्तथा मुसललाङ्गले ।
प्रद्युम्नस्य तथा [3]ज्ञेयौ चापबाणौ महाभुज ॥ १२ ॥

[4]अनिरुद्धस्य विज्ञेयौ चर्मखड्गौ विचक्षणैः ।
[5]पुरुषप्रकृती ज्ञेयौ [6]सूर्यचंद्रमसावुभौ ॥ १३ ॥

एते च वासुदेवस्य करे चक्रगदे [7]स्मृते ।
कालं च लाङ्गलं विद्धि मृत्युं च मुसलं तथा ॥ १४ ॥

ताभ्यां सङ्कर्षणो रुद्रः कर्षतीदं चराचरम् ।
प्रद्युम्नस्य करे वह्नेः शार्ङ्गं चापं च यत्स्मृतम् ॥ १५ ॥

[8]सांख्यं तद्विद्धि धर्मज्ञ या( ? यो )गं बाणं प्रकीर्तितम् ।
[9]ध्येयं तु परमं [10]लक्ष्यं ताभ्यां छिन्दन्ति योगिनः ॥ १६ ॥

ब्रह्मणस्त्वनिरुद्धस्य करे चर्म महाभुज ।
अज्ञानावरणं ज्ञेयं जगत्सृष्टिप्रयोजनम् ॥ १७ ॥

वैराग्यं नन्दकं खड्गं छित्वा वै तेन बंधनम् ।
नन्दन्ति योगिनो यस्मात्तस्मात्तन्नन्दकं स्मृतम् ॥ १८ ॥

एतद्धि तस्याप्रतिमस्य रूपं
[11]तवेरितं सर्वजगन्मयस्य ।
एवं शरीरेण जगत्समग्रं
बिभर्ति देवः स जगत्प्रधानः ॥ १९ ॥

**इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे विष्णुरूपनिर्माणं नाम ॥ ४७ ॥**

---

१. V. ( f. ) चन्द्रभास्करौ. २. V. कारयोस्तथा. ३. B. ज्ञेयो. ४. V. आनिरुद्धस्य. ५. B. पुरुषप्रकृते. ६. A. सूर्याचंद्रमसावुभौ. ७. V. मंते. ८. V. omits सांख्यं ... प्रकीर्तितम्. ९. C. देयं तु. १०. A. वक्ष्यं. ११. B. तवैरितं.

## अष्टचत्वारिंशोऽध्यायः ।

मार्कण्डेयः—

सद्योजातं वामदेवमघोरं च महाभुज ।
तथा [1]तत्पुरुषं ज्ञेयमीशानं पञ्चमं मुखम् ॥ १ ॥

सद्योजातं मही प्रोक्ता वामदेवं तथा जलम् ।
तेजस्त्वघोरं [2]विख्यातं वायुस्तत्पुरुषं मतम् ॥ २ ॥

[3]ईशानं च तथाकाशमूर्ध्वस्थं पञ्चमं मुखम् ।
विभागेनाथ वक्ष्यामि शम्भोर्वदनपञ्चकम् ॥ ३ ॥

महादेवमुखं ज्ञेयं पूर्वं शम्भोर्महात्मनः ।
नेत्राणि त्रीणि [4]तस्याहुः सोमसूर्यहुताशनाः ॥ ४ ॥

दक्षिणं तु मुखं रौद्रं भैरवं तत्प्रकीर्तितम् ।
पश्चिमं यन्मुखं तस्य नन्दिवक्त्रं तदुच्यते ॥ ५ ॥

उमावक्त्रं च विज्ञेयं तस्य देवस्य चोत्तरम् ।
सदाशिवाख्यं विज्ञेयं पावनं तस्य पञ्चमम् ॥ ६ ॥

त्रिलोचनानि सर्वाणि वामदेवं द्विलोचनम् ।
[5]महादेवमुखं [6]भूमिस्तेजः स्याद्भैरवं मुखम् ॥ ७ ॥

नन्दिवक्त्रं तथा [7]वायुरौमेयं चाप उच्यते ।
[8]सदाशिवाख्यं विज्ञेयमाकाशं [9]यदुनन्दन ॥ ८ ॥

दिशो दश भुजास्तस्य [10]विज्ञेयं वदनं प्रति ।
महादेवकरे [11]ज्ञेयावक्षमालाकमण्डलू ॥ ९ ॥

सदाशिवमुखे(? करे) ज्ञेयौ चापबाणौ महाभुज ।
माहेश्वरं [12]ततश्चापं पिनाकमिति शब्दितम् ॥ १० ॥

---

१. V. तं पुरुषं. २. V. विद्यात्तं. ३. V. ईशाने. ४. V. तस्याज्ञ. ५. B. महादेवं मुखं. ६. V. भूमिस्ततः ७. V. वायुरौद्रेयं. ८. V. सदाशिव मुखं ज्ञेयं. ९. A. युद्धनंदन. १०. A.B. तद्वयं. ११. V. ज्ञेयात्वक्षमाला–. १२. तु तच्चापं.

तेषां तु पूर्वमेवोक्तं व्याख्यानं रिपुसूदन ।
दण्डश्च मातुलुङ्गश्च करयोर्भैरवस्य तु ॥ ११ ॥

[1]मृत्युर्दण्डो विनिर्दिष्टो मातुलुङ्गस्तथा करे ।
जगद्वीजस्य सर्वस्य ये राजन्परमाणवः ॥ १२ ॥

तैः पूर्णं [2]बीजपूरत्वं भैरवस्य करे स्मृतम् ।
चर्मशूले करे ज्ञेये नन्दिनो यदुनन्दन ॥ १३ ॥

पूर्वमेव च ते प्रोक्तं [3]धर्मव्याकरणे मया ।
त्रिशूलदण्डमव्यक्तं शूलेषु व्यक्ततां गतम् ॥ १४ ॥

सत्त्वं रजस्तमश्चैव विज्ञातव्यं नृपोत्तम ।
दर्पणेन्दीवरे ज्ञेये तथा देव्याः करद्वये ॥ १५ ॥

आदर्शं निर्मलं ज्ञानं वैराग्यं च तथोत्पलम् ।
महादेवस्य देवस्य व्याख्याता [4]ब्राह्मणा जटाः ॥ १६ ॥

ऐश्वर्यं तु कला [5]चान्द्री मूर्ध्नि शम्भोः प्रकीर्तिता ।
[6]त्रैलोक्यशमनः क्रोधो [7]वासुकिर्नागराट् स्मृतः ॥ १७ ॥

तृष्णा विशाला चित्रा च व्याघ्रचर्म प्रकीर्तितम् ।
वृषो हि भगवान्धर्मश्चतुष्पादः प्रकीर्तितः ॥ १८ ॥

[8]जगतो यदभावस्तु प्रकृतिः सा प्रकीर्तिता ।
शुक्ला च प्रकृतिः सर्वा तेन शुक्लो महेश्वरः ॥ १९ ॥

एतद्धि तस्याप्रतिमस्य रूपं
तवेरितं सर्वजगन्मयस्य ।
एवं शरीरेण जगत्समग्रं
[9]स धारयत्येव जगत्प्रधानः ॥ २० ॥

**इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे महादेवरूपनिर्माणं नाम ॥ ४८ ॥**

---

१. V. मृत्युर्दण्डौ विनिर्दिष्टौ. २. V. बीजरत्नं तु. ३. V. धर्मव्यारणं. ४. A.B.C. ब्रह्मणा. ५. B. चान्द्रे. ६. B. त्रैलोक्यशमनो. ७. V. वासुकिर्नामतः. ८. V. जगदुत्पादकं वस्तु. ९. A. सदारयत्येव.

## एकोनपञ्चाशोऽध्यायः ।

वज्र उवाच — नासत्ययोर्ममाचक्ष्व रूपनिर्माणमच्युत ।
[1]नासत्यरूपयोश्चैव त्वं हि सर्वविदुच्यसे ॥ १ ॥

मार्कण्डेय :— [2]पद्मपत्रसवर्णाभौ पद्मपत्रसमाम्बरौ ।
द्विभुजौ देवभिषजौ कर्तव्यौ देवसंयुतौ ॥ २ ॥

सर्वाभरणसंपन्नौ विशेषाच्चारुलोचनौ ।
तयोरोषधयः कार्या दिव्या दक्षिणहस्तयोः ॥ ३ ॥

वामयोः पुस्तकौ कार्यौ दर्शनीयौ तथा द्विज ।
एकस्य दक्षिणे पार्श्वे वामे चान्यस्य यादव ॥ ४ ॥

नारीयुगं तु कर्तव्यं सुरूपं चारुदर्शनम् ।
तयोश्च नामनी प्रोक्ते रूपसम्पत्तथाऽऽकृतिः ॥ ५ ॥

मधूकपुष्पसंकाशा रूपसंपत्प्रकीर्तिता ।
[3]आकृतिः कथिता लोके शरकाण्डनिभा तथा ॥ ६ ॥

न तु भाण्डकरे कार्ये चन्द्रशुक्लाम्बरे तथा ॥ ७ ॥

नासत्ययो रूपमिदं तवोक्तं मयाद्य मुख्यं यदुवंशमुख्य ।
ध्यानेन सर्वामयनाशकारि संपूजितं वा भुवि मानवानाम् ॥ ८ ॥

इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे नासत्यरूपनिर्माणं नाम ॥ ४९ ॥

---

१. C. नासत्यरूपयोरेव. २. A. पद्मपत्रसुवर्णाभौ. ३. V. प्राकृतिः

## पञ्चाशोऽध्यायः ।

वज्र :— शक्रकीनाशवरुणधनदानां भृगूत्तम ।
सहेतुकं [1]समाचक्ष्व रूपनिर्माणमच्युत ॥ १ ॥

मार्कण्डेय :— चतुर्दन्ते गजे शक्रः श्वेतः कार्यः सुरेश्वरः ।
वामोत्सङ्गगता कार्या रक्षमाणा तथा शची ॥ २ ॥

[2]नीलवस्त्रः सुवर्णाभः सर्वाभरणवांस्तथा ।
तिर्यग्ललाटगेनाक्ष्णा कर्तव्यश्च विभूषितः ॥ ३ ॥

शक्रश्चतुर्भुजः कार्यो [3]द्विभुजा च तथा शची ।
पद्माङ्कुशौ तु कर्तव्यौ शक्रदक्षिणहस्तयोः ॥ ४ ॥

वामं शचीपृष्ठगतं द्वितीयं वज्रसंयुतम् ।
वामे [4]शच्याः करे कार्या रम्या संतानमञ्जरी ॥ ५ ॥

दक्षिणं पृष्ठविन्यस्तं देवनाथस्य कारयेत् ।
ब्रह्मणैव विनिर्दिष्टं तस्याभरणधारणम् ॥ ६ ॥

तेनैव तस्य कथितं तथा बाहुचतुष्टयम् ।
त्रिनेत्रता च तस्योक्ता देवदेवेन शंभुना ॥ ७ ॥

रुक्माभवर्णता तस्य तेजसां धामकारणात् ॥
यन्नीलं वसनं तस्य तदाकाशं प्रकीर्तितम् ॥ ८ ॥

आज्ञा तस्याङ्कुशो हस्ते सर्वभूतवशङ्करी ।
पद्मस्थां सह पद्मेन विभूतिं भुवनाधिप ॥ ९ ॥

करेण [5]धारयञ्छ्रीमान्मघवान् सुरसत्तमः ।
[6]दुष्टसंशमनः क्रोधो वज्रश्शक्र[7]करे स्मृतः ॥ १० ॥

---

१. B. ममाचक्ष्व. २. B. नीलवर्णः ३. B. द्विभुजश्च. ४. A. शिच्याः. B. शिष्याः. ५. A. धारयेच्छ्रीमा–. ६. V. दुष्टसंशमनं. ७. V. –करः.

वासुदेवः स्मृतः शक्रस्तेन लक्ष्मीः [1]शची मता ।
तस्याः करे [2]तु संतानं [3]ज्ञेया संतानमञ्जरी ॥ ११ ॥

अर्थस्त्वैरावणो [4]ज्ञेयो दन्तास्तस्य तु कीर्तिताः ।
[5]दैवमन्त्रप्रभूत्साहशक्तयस्तु [6]महाबलाः ॥ १२ ॥

एतद्रूपं वासुदेवस्य शाक्रं
तुभ्यं प्रोक्तं देवराजस्य राजन् ।
याम्यं रूपं तेऽधुनाहं ब्रवीमि
यस्यायत्ते सुखदुःखे नराणाम् ॥ १३ ॥

**इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे शक्ररूपनिर्माणं नामाध्यायः ॥ ५० ॥**

---

१. B. शचीस्मृता. २. V. च. ३. C. ज्ञेय. ४. B. ज्ञेयं. ५. A. देवमंत्र-. ६. C. महाबल.

# एकपञ्चाशोऽध्यायः ।

मार्कण्डेय :— सजलाम्बुदसच्छाय[1]स्तप्तचामीकराम्बरः ।
महिषस्थश्च कर्तव्यः सर्वाभरणवान्यतः(? मः) ॥ १ ॥
नीलोत्पलाभा [2]धूमोर्णा वामोत्सङ्गे च कारयेत् ।
धूमोर्णा द्विभुजा कार्या यमः कार्यश्चतुर्भुजः ॥ २ ॥
दण्डखड्गावुभौ कार्यौ यमदक्षिणहस्तयोः ।
दण्डोपरि मुखं कार्यं [3]ज्वालामाला[4]विभूषणम् ॥ ३ ॥
धूमोर्णापृष्ठगं वामं चर्मयुक्तं तथापरम् ।
धूमोर्णादक्षिणं हस्तं यमपृष्ठगतं भवेत् ॥ ४ ॥
वामे तस्याः करे कार्यं मातुलुङ्गं सुदर्शनम् ।
[5]पार्श्वे तु दक्षिणे तस्य चित्रगुप्तं च कारयेत् ॥ ५ ॥
[6]उदीच्यवेशं स्वाकारं द्विभुजं [7]सौम्यदर्शनम् ।
दक्षिणे [8]लेखनी तस्य वामे पत्रं तु कारयेत् ॥ ६ ॥
वामे पाशधरः [9]कार्यः कालो विकटदर्शनः ।
यमं सङ्कर्षणं विद्धि तामसीं तनु[10]मास्थितम् ॥ ७ ॥
मर्यादापालनार्थाय लोकसंहारकारणम् ।
नीलोत्पलदलच्छायस्तामसत्वात्प्रकीर्तितः ॥ ८ ॥
वसनं तस्य विख्यातं वासुदेवेन शत्रुहन् ।
चतुर्भुजत्वं विख्यातं ब्रह्मणा [11]परमात्मना ॥ ९ ॥
ब्रह्मणा तस्य निर्दिष्टं सर्वाभरणधारणम् ।
यो मोहो[12]मरणे नृणां [13]विज्ञेयो महिषस्तु सः ॥ १० ॥
अमोघं तु करे दण्डं मृत्युं [14]धारयते यमः ।
अनिरुद्धेन तस्योक्तं धारणं खड्गचर्मणोः ॥ ११ ॥

---

१. A. –तस्य. २. B.C. धूम्रोर्णा. ३. V. ज्वालमाला–. ४. A.–विभूषिणम्. ५. A.B. पार्श्वं. ६. C.V. उद्दिश्य. ७. B. सोम्यदर्शनम्. ८. V. लेखिनी. ९. B कार्याः. १०. V. तनु-माश्रितम्. ११. V. परमात्मनः. १२. V. मरणं. १३. C. विज्ञेयं. १४. B. दारयते.

कालरात्री तु विज्ञेया धूमोर्णा यदुनन्दन ।
तस्यास्तु शूलिना प्रोक्तं बीजपूरकधारणम् ॥ १२ ॥

चित्रगुप्तो विनिर्दिष्टस्तथात्मा सर्वदेहगः ।
पत्रं धर्ममधर्मं च करस्था तस्य [1]लेखनी ॥ १३ ॥

काल एव स्वरूपेण कालो यमसमीपगः ।
तस्य पाशः करे घोरो यममार्गः सुदुष्करः ॥ १४ ॥

वज्र :— संहारहेतुकी मूर्तिर्विष्णो[2]स्सङ्कर्षणो मतः ।
स तु देवस्त्वया प्रोक्तश्चन्द्रशुक्लवपुर्महान् ॥ १५ ॥

तल्पे( ? तुल्ये ) संहारकर्तृत्वे कृष्णमूर्तिः कथं यमः ।
एतन्मे संशयं च्छिन्धि भृगुवंशविवर्धन ॥ १६ ॥

मार्कण्डेय :— मूर्ति[3]स्साङ्कर्षिणी विष्णो रुद्रस्संहारकारकः ।
कल्पक्षये तु संहारं करोति जगतां हि सा ॥ १७ ॥

प्रकृतौ याति धर्मज्ञ संहृतं तु तदा जगत् ।
तेन प्रकृतिवर्णस्थः करोति जगतां क्षयम् ॥ १८ ॥

कृत्वापि प्राणिसंहारं यमरूपी पुनः पुनः ।
प्राणी( ? णि )नां प्रकृतौ योगं न विधत्ते कदाचन ॥ १९ ॥

विकारे योजयत्येव सुखदुःखात्मके तदा ।
विकाररूपवर्णं तु तेन [4]संहरते जगत् ॥ २० ॥

रूपमिदं कथितं तव याम्यं
पापविनाशकरं विबुधानाम् ।
रूपमतः कथयामि महात्म--
--स्तोयपतेर्वरुणस्य तवाहम् ॥ २१ ॥

**इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे यमरूपनिर्माणं नाम ॥ ५१ ॥**

---

१. V. लेखिनी. C. लेखने. २. B. –स्साङ्कर्षणो. ३. B. स्सङ्कर्षिणी. ४. C. संहारते.

## द्विपञ्चाशोऽध्यायः ।

मार्कण्डेय :— सप्तहंसे रथे कार्यो वरुणो यादसाम्पतिः ।
स्निग्धवैडूर्यसङ्काशः श्वेताम्बरधरस्तथा ॥ १ ॥

किञ्चित्प्रलम्बजठरो मुक्ताहारविभूषणः ।
सर्वाभरणवा[1]न्राजा तथा देवश्चतुर्भुजः ॥ २ ॥

वामभागगतं केतुं [2]मकरस्य तु कारयेत् ।
छत्रं च सुसितं [3]मूर्ध्नि भार्या सर्वाङ्गसुन्दरी ॥ ३ ॥

वामोत्सङ्गगता कार्या गौरी [4]तु द्विभुजा नृप ।
उत्पलं तु करे वामे दक्षिणं देवपृष्ठगम् ॥ ४ ॥

पद्मपाशौ करे कार्यौ देवदक्षिणहस्तयोः ।
शङ्खं च रत्नपात्रं च वामयोस्तस्य कारयेत् ॥ ५ ॥

भागे तु दक्षिणे गङ्गा मकरस्था सचामरा ।
देवी पद्मकरा कार्या चन्द्रगौरी वरानना ॥ ६ ॥

वामे तु यमुना कार्या कूर्मसंस्था सचामरा ।
नीलोत्पलकरा सौम्या नीलनीरजसन्निभा ॥ ७ ॥

स्निग्धवैडूर्य[5]सङ्काशस्त्वपां वर्णो यतो [6]नृप ।
[7]तासामनुग्रहार्थाय तद्वर्णो वरुणस्ततः ॥ ८ ॥

[8]सुरूपवर्णाः सुसितास्ता एव द्विजपुङ्गव ।
वसनं तस्य कथितं ता [9]एव सुसितं नृप ॥ ९ ॥

वज्र :— [10]अम्भसस्तु कथं [11]वर्णे सत्यासत्ये त्वयेरिते ।
[12]एतत्ते श्रोतुमिच्छामि परं कौतूहलं हि मे ॥ १० ॥

मार्कण्डेय :— वैडूर्याभमपां वर्णमतथ्यं यदुनंदन ।
छायागतस्य नभसस्तद्रूपं तासु दृश्यते ॥ ११ ॥

---

१. B. –न्राजास्तथा. २. C. मकरं तस्य कारयेत् ३. B. मूर्ध्नि. ४. V. तद्विभुजा. ५. V. –संकाशस्त्वापो वर्णो. ६. C. द्विज. ७. V. तयोरनुग्रहार्थाय. ८. V. स्वरूपवर्णाः ९. C. एवं. १०. C. अम्भसांतु. ११. V. वर्णः १२. V. एतत्तु.

प्रपात[1]पाते यद्रूपमम्भसां नृप दृश्यते ।
शशाङ्कांशुप्रतीकाशं [2]तत्स्वरूपे प्रतिष्ठितम् ॥ १२ ॥

[3]प्रद्युम्नः कामदेवस्तु वरुणो यादसाम्पतिः ।
तस्य भार्या रतिर्ज्ञेया गौरी यादवनन्दन ॥ १३ ॥

सौभाग्यमुत्पलं तस्याः करे सुरतगं विभो ।
वरुणस्य करे पद्मं [4]विद्धि धर्मं महाभुज ॥ १४ ॥

शङ्खमर्थं विजानीहि पाशं संसारबन्धनम् ।
रत्नपात्रं करे ज्ञेयं सर्वरत्नधरा धरा ॥ १५ ॥

यशश्च सुसितं छत्रं सौख्यं मकर एव च ।
ब्रह्मणा कथितं तस्य भुजाभरणधारणम् ॥ १६ ॥

लवणक्षीर[5]आज्योददधिमण्डसुरोदकाः ।
तथैवेक्षुरसोदश्च [6]स्वादूदश्च तथापरः ॥ १७ ॥

[7]समुद्राः सप्त विख्याता लोके नरवरोत्तम ।
सप्तहंसा रथे तस्य वरुणस्य महात्मनः ॥ १८ ॥

[8]छाया तु यमुना ज्ञेया सिद्धिर्भागीरथी द्विज ।
वीर्यकालौ विनिर्दिष्टौ तथा मकरकच्छपौ ॥ १९ ॥

स्वर्गगङ्गाकरे पद्मं वृद्धयामुनमुत्पलम् ॥ २० ॥

रूपं जलेशस्य तवैतदुक्तं
मया शिरः पाशधरस्य तस्य ।
अतः परं वित्तपतेर्ब्रवीमि
रूपं [9]तवाहं यदुवंशचन्द्र ॥ २१ ॥

**इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे वरुणरूपनिरूपणं नाम ॥ ५२ ॥**

---

१. V. –पातैर्यद्रूप– २. A.B. तत्सुरूपे. ३. V.A.B. प्रद्युम्नो वासुदेवस्तु. ४. V. विधिधर्मे. ५. V. आज्यादि. ६. V. सुरोदश्च तथापरः ७. V. समुद्रास्ते तु विख्याता. A. समुद्राः सम विख्याता. ८. V. जाया. C. आया. ९. तथाहं.

# त्रिपञ्चाशोऽध्यायः ।

मार्कण्डेय :—

कर्तव्यः पद्मपत्राभो धनदो नरवाहनः ।
चामीकराभो [1]धनदः सर्वाभरणभूषणः ॥ १ ॥

[2]लम्बोदरश्चतुर्बाहुर्वामपिङ्गललोचनः ।
[3]उदीच्यवेशः कवची हारभारार्पितोदरः ॥ २ ॥

द्वे च दंष्ट्रे मुखे तस्य कर्तव्ये श्मश्रुधारिणः ।
वामेन विनता कार्या [4]मौलिस्तस्यारिमर्दिनी ॥ ३ ॥

वामोत्सङ्गगता कार्या [5]ऋद्धिर्देवी वरप्रदा ।
देवपृष्ठगतं पाणिं द्विभुजायास्तु दक्षिणम् ॥ ४ ॥

[6]रत्नपात्रं करं( ? रे ) कार्यं वामं( ? मे ) रिपुनिषूदन ।
गदाशक्ती च कर्तव्ये तस्य दक्षिणहस्तयोः ॥ ५ ॥

सिंहाङ्कलक्षणं [7]केतुं शिबिकामपि पादयोः ।
शङ्खपद्मौ निधी कार्यौ [8]सुरूपौ निधिसंस्थितौ ॥ ६ ॥

शङ्खपद्मान्तनिष्क्रांतं वदनं तस्य पार्श्वतः ।
अनिरुद्धस्तु विज्ञेयस्त्वया देवो धनाधिपः ॥ ७ ॥

ब्रह्मणा कथितं तस्य सर्वाभरणसाधनम् ।
सुवर्णं नाम विख्यातं धनानामुत्तमं धनम् ॥ ८ ॥

तस्यानुग्रहतो धत्ते वासः कनकसन्निभम् ।
शक्तिरेव स्मृता शक्तिर्दण्डनीतिस्तथा गदा ॥ ९ ॥

लोकयात्रा च कथिता ऋद्धिर्ज्ञेया स्वभावतः ।
तत्करे रत्नपात्रं तु गुणाधारं प्रचक्षते ॥ १० ॥

---

१. A. दनदः २. C. लंबोधर— ३. V. अपीच्यवेशः C. तंदीश्यवेशः ४. A. मौलिस्तस्यारिमर्दनी. C. पालिस्तस्यारिमर्दन. ५. A. ऋद्धिर्देवी. ६. A.B. रत्नपात्रकरे. ७. A.B.V. वृत्तं. ८. V. स्वरूपौ.

नरं राज्यं विजानीहि [1]यत्रस्थश्च सदा विभुः ।
स्वरूपतस्तु विज्ञेयौ शङ्खपद्मौ तथा निधी ॥ ११ ॥

[2]वित्ततोंशो जयत्यस्मिंस्ताभ्यां [3]प्रसवतेऽच्युतः ।
अर्थः स क्षमया [4]ज्ञेयः केतुः सिंहाङ्कलक्षणः ॥ १२ ॥

निग्रहानुग्रहे दंष्ट्रे तस्य तात महात्मनः ॥ १३ ॥

यक्षाधिपस्यैतदनन्तदंष्ट्रं
नामे( ? म्नो ) [5]वने [6]यक्षनदस्य राजन् ।
अतः परं किं कथयामि तुभ्यं
तन्मे वदस्वायतलोहिताक्ष ॥ १४ ॥

**इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे वैश्रवणरूपनिर्माणं नाम ॥ ५३ ॥**

---

१. V. यत्रस्थस्तु. २. B. वित्ततोंशे जयत्यस्मिंस्तासां. ३. V. प्रसवतेऽयुतः ४. A.B. ज्ञेये. ५. A.B.C. नवे. ६. A.B. धनदस्य.

## चतुःपञ्चाशोऽध्यायः।

वज्रः—
सुपर्णस्य च तालस्य मकरस्य मृगस्य च।
[१]मरुतां रूपनिर्माणं श्रोतुमिच्छामि भार्गव ॥ १ ॥

मार्कण्डेयः—
[२]तार्क्ष्यो मारकतप्रख्यः कौशिकाकारनासिकः।
चतुर्भुजस्तु कर्तव्यो वृत्तनेत्रमुख[३]स्तथा ॥ २ ॥

गृध्रोरुजानु[४]चरणः पक्षद्वयविभूषणः।
[५]प्रभासंस्थानसौवर्णः कलापेन विवर्जितः ॥ ३ ॥

छत्रं च पूर्णकुम्भं च करयोस्तस्य कारयेत्।
[६]करद्वयं तु कर्तव्यं तथास्य [७]रचिताञ्जलिः ॥ ४ ॥

[८]यदास्य भगवान्पृष्ठे छत्रकुम्भधरौ करौ।
न कर्तव्यौ तु कर्तव्यौ देवपादधरावुभौ ॥ ५ ॥

[९]किञ्चिल्लम्बोदरः कार्यः [१०]सर्वाभरणभूषणः।
तालस्तालाकृतिः कार्यो मकरो मकराकृतिः ॥ ६ ॥

उपरिष्टात्तथैवास्य कार्यो( ? र्यं ) [११]ऋक्षे( ? मृग )वदच्युतः।
मनो जगत्तथा कामं कर्म चैते क्रमात्स्मृताः ॥ ७ ॥

वासुदेवोऽच्युतश्चैव प्रद्युम्नश्च महाभुजः।
तथा चैवानिरुद्धश्च क्रमेणैते प्रकीर्तिताः ॥ ८ ॥

[१२]तार्क्ष्यस्सतालो मकरस्तथार्च्यो
[१३]देवेशकीनाशजलार्थनाथः( ? थाः )।
अग्न्यर्कतोयाधिप[१४]पत्रिनाथः( ? थाः )
त एव लोकेषु बुधैः प्रदिष्टः( ? ष्टाः ) ॥ ९ ॥

इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे [१५]विष्णुध्वजरूपनिर्माणं नाम ॥ ५४ ॥

---

१. A.B.C. हितं हि. २. B. तार्क्षो मरकतप्रद्द्यः. ३. V. –स्ततः. ४. B. –चरणाः पक्षद्वयविभूषणाः ५. C. प्रभासंस्थानसंवर्ण. ६. V. करद्वये. ७. A. रचितांगुलिः ८. V. तथास्य. ९. C. किंचिल्लम्बोधरः. १०. V. सर्वाभरणभूषितः ११. A.B.C.V. ऋन्यवदच्युतः. १२. C. तार्द्यस्सतालमकरस्तथार्च्या. १३. B. देवेशकेनाश– १४. A B. सत्रिनाथः. १५. V. गरूडरूपनिर्माणः.

## पञ्चपञ्चाशोऽध्यायः ।

वज्र :— शिवस्य रूपनिर्माणं वह्नेर्वै [1]निर्ऋतेस्तथा ।
वायोश्च ब्रूहि धर्मज्ञ तत्र मे संशयो महान् ॥ १ ॥

मार्कण्डेय :— [2]वामार्धे पार्वती कार्या शिवः कार्यश्चतुर्भुजः ।
अक्षमालां ( ? ला ) त्रिशूलं च तस्य दक्षिणहस्तयोः ॥ २ ॥

दर्पणेन्दीवरौ कार्यौ वामयोर्यदुनंदन ।
एकवक्त्रो भवेच्छम्भु[3]र्वामार्धदयितातनुः ॥ ३ ॥

द्विनेत्रश्च महाभाग सर्वाभरणभूषितः ।
अभेदभिन्ना प्रकृतिः पुरुषेण महाभुज ॥ ४ ॥

गौरी शर्वेति विख्याता सर्वलोकनमस्कृता ।
[4]कारणं कथितं पूर्वं शूलादीनां मया तव ॥ ५ ॥

ईशानरूपं कथितं तवेदं
रूपं तथाग्नेः श्रृणु धर्मनित्यम् ।
वेदा यदर्थं जगति प्रवृत्ता
मुखं च यत्सर्वसुराऽसुराणाम् ॥ ६ ॥

इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे गौरीश्वररूपनिर्माणं नाम ॥ ५५ ॥

---

१. A.B निवृत्तेः. २. C. यामार्धे. ३. V. –र्वामा च दयिता– ४. A.B.C. करणं.

## षट्पञ्चाशोऽध्यायः ।

मार्कण्डेय :— रक्तं जटाधरं वह्निं [1]कुर्याद्वै धूम्रवाससम् ।
ज्वालामालाकुलं सौम्यं त्रिनेत्रं श्मश्रुधारिणम् ॥ १ ॥
चतुर्बाहुं चतुर्दंष्ट्रं देवेशं वातसारथिम् ।
चतुर्भिश्च शुकैर्युक्तं धूमचिह्नरथे स्थितम् ॥ २ ॥
वामोत्सङ्गगता स्वाहा शक्रस्येव शची भवेत् ।
रत्नपात्रकरा देवी वह्नेर्दक्षिणहस्तयोः ॥ ३ ॥
ज्वालात्रिशूलौ कर्तव्यौ चाक्षमाला तु वामके ।
रक्तं हि तेजसो रूपं रक्तवर्णं ततः स्मृतम् ॥ ४ ॥
वातसारथिता तस्य प्रत्यक्षं [2]धूमकेतुता ।
प्रत्यक्षा च तथा प्रोक्ता यागधूम्राभवस्त्रता ॥ ५ ॥
अक्षमालां ( ? ला ) त्रिशूलं च [3]जटाजूटत्रिनेत्रता ।
सर्वाभरणधारित्वं व्याख्यातं तस्य शम्भुना ॥ ६ ॥
ज्वालाकारं परं धाम हुतं तेन प्रतीच्छति ।
गृहीत्वा सर्वदेवेभ्यो ततो नयति शत्रुहन् ॥ ७ ॥
वाग्दण्डमथ [4]धिग्दण्डं धनदण्डं तथैव च ।
चतुर्थं वधदण्डं च दंष्ट्रास्तस्य प्रकीर्तिताः ॥ ८ ॥
[5]श्मश्रु तस्य विनिर्दिष्टं [6]दर्भाः परमपावनम् ।
ये वेदास्ते शुकास्तस्य [7]रथयुक्ता महात्मनः ॥ ९ ॥
आग्नेयमेतत्तव रूपमुक्तं
पापापहं सिद्धिकरं नराणाम् ।
ध्येयं तवैतन्नृप [8]होमकाले
सर्वाग्नि[9]कर्मण्यपराजितेन ॥ १० ॥

**इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे अग्निरूपनिर्माणं नाम ॥ ५६ ॥**

---

१. A.B.C. कर्तव्यं. २. V. धूम्रक्षेत्रता. ३. A.B. जटाजूटं. ४. A.B.C. दिग्दण्डं. ५. B. श्मश्रुस्तस्य. ६. B. दर्भा. ७. A.C. रथे. ८. A. मोहकाले. ९. B. –कर्माण्य–

## सप्तपञ्चाशोऽध्यायः ।

मार्कण्डेय :—

[1]ॐ [2]विरूपाक्षो विवृत्ताक्षः प्रांशुदण्डो[3]ज्ज्वलाननः ।
ऊर्ध्वकेशो [4]हरिच्छ्मश्रुर्द्विबाहुर्भीषणाननः ॥ १ ॥

वर्णेन रक्तकृष्णाङ्गः कृष्णाम्बरधरस्तथा ।
[5]सर्वाभरणवानुष्ट्रं( ? ष्ट्र )दण्डरश्मिकरस्तथा ॥ २ ॥

भार्या च तस्य कर्तव्या देवी निर्ऋतित( ? )स्तथा ।
[6]कृष्णाङ्गी कृष्णवदना पाशहस्ता तु वामतः ॥ ३ ॥

कालः प्रोक्तो विरूपाक्षो मृत्युर्हि निर्ऋतिस्तथा ।
बिभर्ति तामसं रूपं वासांसि च ततो नृप ॥ ४ ॥

मारणं तत्करे दण्डं बन्धनं चोष्ट्ररश्मयः ।
महामोहस्तथैवोष्ट्रः कथितस्तस्य [8]वाहनः ॥ ५ ॥

वपुर्विरूपाक्षमिदं प्रदिष्टं
रक्षोऽधिपस्याप्रतिमस्य [7]तुभ्यम् ।
अतः परं वच्मि तवाद्य राजन्
वायोस्तु रूपं परमस्य धाम्नः ॥ ६ ॥

**इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे निर्ऋतिरूपनिर्माणं नाम ॥ ५७ ॥**

---

१. B.C.V. omit ॐ २. B. विवृत्ताक्षो विरूपाक्षः A. रक्षोऽधिपो विरूपाक्षः ३. A.B. –ज्ज्वलानसः ४. A. हि निः श्मश्रु– ५. V. सर्वाभरणधारि च. ६. B. omits कृष्णाङ्गी... निर्ऋतिस्तथा. ७. V. वामतः C. वामनः ८. V.C. तस्य.

# अष्टपञ्चाशोऽध्यायः ।

मार्कण्डेय :— वायुरम्बरवर्णस्तु [1]तदाकारोऽम्बरो भवेत् ।
[2]वाय्वापूरितवस्त्रश्च द्विभुजो रूपसंयुतः ॥ १ ॥

गमनेच्छा शिवा भार्या तस्य कार्या च वामतः ।
कार्यो गृहीतवस्त्रान्तः कराभ्यां पवनो द्विज ॥ २ ॥

तथैव देवी कर्तव्या शिवा परमसुन्दरी ।
[3]व्यावृत्तास्यस्तथा कार्यो देवो व्याकुलमूर्धजः ॥ ३ ॥

[4]वायुराश्रयतो धत्ते [5]गन्धवर्णादिकं यतः ।
तस्मादञ्जनवर्णस्तु [6]गगनस्य समाश्रयात् ॥ ४ ॥

तदेव वसनं तस्य गगनं परिकीर्तितम् ।
या गतिः सा शिवा देवी योऽनिरुद्धश्च सोऽनिलः ॥ ५ ॥

एतद्धि रूपं पवनस्य राजन्
तवोदितं सर्वजगन्मयस्य ।
देव्याः शिवायाश्च महानुभाव
परं पवित्रं विदितं द्विजानाम् ॥ ६ ॥

इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे वायुरूपनिर्माणं नाम ॥ ५८ ॥

---

१. C. तदाकाराम्बरो– २. B. वाय्वापूरित– ३. V.C. व्याधितास्यस्तथा. ४. A.B. वायुराश्रमतो. ५. C. गंधवर्णाधिकं. ६. V. गमनस्य.

## एकोनषष्टितमोऽध्यायः ।

मार्कण्डेयः— अथातो रूपनिर्माणं वच्म्यहं भैरवस्य ते ।
[1]लम्बोदरं तथा कुर्याद्वृत्तपिङ्गललोचनम् ॥ १ ॥

दंष्ट्राकरालवदनं फुल्लनासापुटं तथा ।
कपालमालिनं रौद्रं सर्वतः [2]सर्पभूषणम् ॥ २ ॥

व्यालेन त्रासयन्तं च देवीं पर्वतनन्दिनीम् ।
सजलाम्बुदसंकाशं गजचर्मोत्तरच्छदम् ॥ ३ ॥

बाहुभिर्बहुभिर्व्याप्तं सर्वायुधविभूषणैः ।
बृहत्सालप्रतीकाशैस्तथा तीक्ष्णनखैः शुभैः ॥ ४ ॥

साचीकृतमिदं रूपं भैरवस्य प्रकीर्तितम् ।
महाकालस्य कथितमेतदेव च सन्मुखम् ॥ ५ ॥

[3]देवीत्रासनकश्चास्य करे कार्यस्तु पन्नगः ।
न चास्य पुरतः कार्या देवी पर्वतनन्दिनी ॥ ६ ॥

[4]शुक्ला न कार्या न तथास्य रक्ता समीपतो मातृगण( ? णः) प्रधाने(?) नः ।
[5]कार्यस्त्वथान्यः परिबर्हमस्य गणाश्च कार्या बहुरूपरूपाः ॥ ७ ॥

इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे भैरवरूपमहाकालरूपनिर्माणं नाम ॥ ५९ ॥

---

१. A.B.C. लंबोदरं तु कर्तव्यं. २. A.B.C. सर्वभूषणम्. ३. A.B. देवी वामनकश्चास्य V. देवी तु वामतः कार्या ४. C. शुष्का. ५. B. कार्यास्त्वथान्यः.

## षष्टितमोऽध्यायः ।

वज्र :—

[1]ॐ विष्णुभूम्यम्बराणां त्वं ब्रह्मणश्च तथा [2]विभो ।
रूपनिर्माणमाचक्ष्व भृगुवंशविवर्धन ॥ १ ॥

मार्कण्डेय :—

एकवक्त्रो द्विबाहुश्च गदाचक्रधरः प्रभुः ।
देहविन्यासमपरं प्रागुक्तं कीर्तितं हरेः ॥ २ ॥

[3]गाहुरी तु स्मृता [4]माया जगद्बन्धाय वैष्णवी ।
गदा [5]देवकरे नित्यं सर्वभूतवशङ्करी ॥ ३ ॥

सैव लक्ष्मीर्धृतिः कीर्तिः पुष्टिः श्रद्धा सरस्वती ।
गायत्री वेदजननी कालरात्रिस्तथैव सा ॥ ४ ॥

संसारभ्रमणं [6]चक्रं चक्रं विष्णुकरे स्थितम्(? स्मृतम्) ।
धर्मचक्रं कालचक्रं भचक्रं च महाभुज ॥ ५ ॥

ध्रुवो हि विष्णुर्भगवा[7]न्प्रदिष्टः
चक्रं सदा भ्रामयते स वीरः ।
एतेन कार्येण जगत्प्रधानः
स चक्रहस्तो भगवान्प्रदिष्टः ॥ ६ ॥

इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे विष्णुरूपनिर्माणं नाम ॥ ६० ॥

---

१. B.C.V. omit ॐ. २. B. विभू. ३. A.B.C. गांधारी. ४. B. मया. ५. A.C. देवकरी. ६. C. चक्रे चक्रं. ७. C.V. –न्प्रदिष्ट.

# एकषष्टितमोऽध्यायः ।

मार्कण्डेयः— शुक्लवर्णा मही कार्या दिव्याभरण[1]भूषिता ।
चतुर्भुजा सौम्यवपुश्चन्द्रांशुसदृशाम्बरा ॥ १ ॥

रत्नपात्रं सस्यपात्रं [2]पात्रमोषधिसंयुतम् ।
पद्मं करे च कर्तव्यं भुवो यादवनंदन ॥ २ ॥

दिङ्नागानां चतुर्णां सा कार्या पृष्ठगता तथा ।
सर्वौषधियुता देवी [3]शुक्लवर्णा ततः स्मृता ॥ ३ ॥

धर्मं वस्त्रं सितं तस्याः पद्ममर्थं तथा करे ॥ ४ ॥

हेतुश्च शेषो विदितो बुधाना-
-मतो मया ते कथितोऽद्य राजन् ।
[4]रूपं त्वरूपस्य तु वच्म्यतोऽहं
[5]प्रकल्पितं यद् गगनस्य सिद्धैः ॥ ५ ॥

इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे भूमिरूपनिर्माणं नाम ॥ ६१ ॥

---

१. B. –भूषिताः. २. C. पात्रमौषधसंयुतम्. ३. V.C. शुक्लवर्णा. ४. A. रूपं तु रूपस्य
५. V.B. प्रकर्षितं.

# द्विषष्टितमोऽध्यायः ।

मार्कण्डेयः— नीलोत्पलाभं गगनं तद्वर्णाम्बरधारिणम् ।
चन्द्रार्कहस्तं कर्तव्यं द्विभुजं सौम्यदर्शनम् ॥ १ ॥

एतद्धि रूपं गगनस्य राजन्
प्रोक्तं मया ते परिकल्पितं यत् ।
रूपं प्रवक्ष्याम्यथ [1]तन्निबोध
पितामहस्याप्रतिमस्य तस्य ॥ २ ॥

इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे [2]आकाशरूपनिर्माणं नाम ॥ ६२ ॥

---

१. V. ते निबोध. २, V. गगनरूपवर्णनो.

## त्रिषष्टितमोऽध्यायः ।

मार्कण्डेयः— पद्मपत्रासनस्थस्तु ब्रह्मा कार्यश्चतुर्मुखः ।
सावित्री तस्य कर्तव्या वामोत्सङ्गगता तथा ॥ १ ॥

आदित्यवर्णा धर्मज्ञ साक्षमालाकरा तथा ।
[1]रूपं पूर्वोदितं कार्यं सर्वमन्यज्जगत्पते ॥ २ ॥

एतद्धि रूपं वरदस्य कार्यं
पितामहस्याप्रतिमस्य सौम्य ।
पूर्वोदितं वा वरदस्य तस्य
लोकं समग्रं वशगं हि यस्य ॥ ३ ॥

इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे ब्रह्मरूपनिर्माणं नाम ॥ ६३ ॥

---

१. B. तपं,

# चतुःषष्टितमोऽध्यायः ।

मार्कण्डेय :— देवी सरस्वती कार्या सर्वाभरणभूषिता ।
चतुर्भुजा सा कर्तव्या तथैव च समुत्थिता ॥ १ ॥

पुस्तकं चाक्षमालां(? ला) च तस्या दक्षिणहस्तयोः ।
वामयोश्च तथा कार्या [1]वैणवी(? वीणैव) च कमण्डलुः ॥ २ ॥

समपादप्रतिष्ठा च कार्या सोममुखी तथा ।
वेदास्तस्या भुजा ज्ञेयाः सर्वशास्त्राणि पुस्तकम् ॥ ३ ॥

सर्वशास्त्रामृत[2]रसो देव्या [3]ज्ञेयः कमण्डलुः ।
अक्षमाला करे तस्याः कालो भवति पार्थिव ॥ ४ ॥

सिद्धिर्मूर्तिमती ज्ञेया [4]वैणवी(? वीणैव) नात्र संशयः ।
सावित्री वदनं तस्याः [5]सर्वाद्या परिकीर्तिता ॥ ५ ॥

चन्द्रार्कलोचना ज्ञेया सा च राजीवलोचना ॥ ६ ॥

सारस्वतं ते कथितं मयैतद्
 रूपं पवित्रं परमं मनोज्ञम् ।
ध्येयं च कार्यं च महीपमुख्य
 सर्वार्थसिद्धिं सममीप्समानैः ॥ ७ ॥

इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे सरस्वतीरूपनिर्माणं नाम ॥ ६४ ॥

---

१. C.V. वैष्णवी. २. A.B.C. –रसं ३. C. ज्ञेयं कमण्डलुम् ४. A.B.V. वैष्णवी. C. वैणवी. ५. A.B. सर्वाद्याः परिकीर्तिताः

## पञ्चषष्टितमोऽध्यायः ।

वज्र :— आचक्ष्व रूपनिर्माणं ममानन्तस्य देवज ।
विष्णोरमितवीर्यस्य शेषस्य धरणीभृतः ॥ १ ॥

मार्कण्डेय :— कुर्याच्छशाङ्कसङ्काशं रत्नोज्ज्वलफणान्वितम् ।
नीलवस्त्रं चतुर्बाहुं सर्वाभरण[1]धारिणम् ॥ २ ॥

फणाश्च बहवः कार्या यत्फणं तस्य मध्यमम् ।
तत्र रूपवती कार्या वसुधा यदुनंदन ॥ ३ ॥

पद्मं समुसलं कार्यं [2]देवदक्षिणहस्तयोः ।
वामयोस्सीर[3]शंखौ च करे( ? कार्यः ) तस्य [4]सुराम्बुधिः ॥ ४ ॥

तालवृक्षं जगत्सर्वं कथितं [5]ते महाभुज ।
विख्यातौ सीरमुसलौ पूर्वमेव मया तव ॥ ५ ॥

वनमाला च विख्याता तथा [6]यदुकुलोद्वह ।
पृथिवी धार्यते तेन सशैलवनकानना ॥ ६ ॥

पृथिवी तेन कर्तव्या फणे तस्य तु मध्यमे ॥ ७ ॥

फणावलिस्तस्य [7]तु या प्रतिष्ठा
कामास्तु ये यादववंशमुख्य ।
एतद्धि रूपं परमेश्वरस्य
विष्णोरचिन्त्यस्य मयेरितं ते ॥ ८ ॥

इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे शेषरूपनिर्माणं नाम ॥ ६५ ॥

---

१. B. –धारणम् २. A.B. देवे. ३. V. –शंखे. ४. A.B. सुराम्बुधी. ५. V.C. तु. ६. A. युदकुलोद्वह. ७. V. तया.

## षट्षष्टितमोऽध्यायः ।

मार्कण्डेय :—

कर्तव्यस्तुम्बुरुर्देवो मातृमध्यगतः प्रभुः ।
[1]उपविष्टे वृषे कार्यः शर्ववत् स चतुर्मुखः ॥ १ ॥

उपविष्टस्तु कर्तव्यः स तु पार्थिवसत्तम ।
महादेवेन तस्योक्तं रूपं ते सकलं मया ॥ २ ॥

कपालं तस्य कर्तव्यं मातुलुङ्गधरे करे ।
मातुलुङ्गं च कर्तव्यं [2]त्र्यम्बकस्य [3]तदीरितम् ॥ ३ ॥

तस्य दक्षिणतः कार्यं तथा मातृद्वयं भवेत् ।
वामतस्तस्य कर्तव्यं मातृद्वितयमेव च ॥ ४ ॥

जया च विजया चैव कर्तव्या दक्षिणेन तु ।
जयन्ती वामतः कार्या तथा चैवापराजिता ॥ ५ ॥

सर्वाश्च द्विभुजाः कार्याश्चतुर्वक्त्रास्तथैव च ।
सर्वासां वामहस्तेषु कपालानि तु कारयेत् ॥ ६ ॥

[4]दण्डः कार्यो महाराज दक्षिणे तु जयाकरे ।
विजयायाः करे खड्गः कार्यो भिन्नाञ्जनप्रभः ॥ ७ ॥

अक्षमालाधरकरां जयन्तीं नृप कारयेत् ।
भिन्दिपालकरा कार्या तथा देव्यपराजिता ॥ ८ ॥

पादपीठगतं पादं सर्वासामेव कारयेत् ।
[5]दक्षिणं यानगं वामं कर्तव्यं नृप कुञ्चितम् ॥ ९ ॥

जया पुरुषगा कार्या विजया [6]कौशिकोपगा ।
जयन्ती तुरगारूढा [7]मेघगा चापराजिता ॥ १० ॥

---

१. V. उपविष्टो. २. V. त्र्यम्बकेण. ३. A.B. यदीरितम् ४. A.B. चंडं दंडं. ५. A.B. दक्षिणे. ६. V.C. कौशिकोपमा. ७. C. मेघवा.

[१]जया श्वेता तु कर्तव्या रक्ता तु विजया भवेत् ।
पीता वर्णेन कर्तव्या [२]जयन्ती यदुनंदन ॥ ११ ॥

कृष्णवर्णा तथा देवी [३]भवत्येवापराजिता ।
चन्द्रांशुगौरः कर्तव्यो महादेवस्तु तुम्बुरुः ॥ १२ ॥

देवीप्रियार्थं भुवनस्य गोप्ता
　　तासां स मध्ये भगवानथेशः ।
भक्तेषु कामान्विदधन्नथास्ते
　　स पूजनीयस्त्रिदशारिहन्ता ॥ १३ ॥

इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे देवीचतुष्टयसहिततुम्बुरुरूपनिर्माणं नाम ॥ ६६ ॥

---

१. V. omits जया......वापराजिता. B. जयाश्वेतांत कर्तव्या. २. C. गायत्री यदुसत्तम. ३. भवती वापराजिता.

## सप्तषष्टितमोऽध्यायः ।

वज्र :— प्रागुक्तं रूपनिर्माणं त्वया [१]वह्न्यम्बुनाथयोः ।
तयोरेवापरं ब्रूहि रूपमर्केन्दुरूपयोः ॥ १ ॥

[२]मार्कण्डेयः— रविः कार्यः शुभश्मश्रुः [३]सिन्दूरारुणसप्रभः ।
[४]उद्दीप्य( ? दीच्य )वेशः स्वाकारः सर्वाभरणसंयुतः ॥ २ ॥

चतुर्बाहु [५]र्महातेजाः कवचेनाभिसंवृतः ।
कर्तव्या रशना चास्य यावियाङ्गेति संज्ञिता ॥ ३ ॥

रश्मयस्तस्य कर्तव्या वामदक्षिणहस्तयोः ।
ऊर्ध्वस्रग्दामसंस्थानाः [६]सर्वपुष्पाञ्चिताः शुभाः ॥ ४ ॥

सुरूपरूपः स्वाकारो [७]दण्डः कार्योऽस्य वामतः ।
दक्षिणे पिङ्गलो भागे [८]कर्तव्यश्चातिपिङ्गलः ॥ ५ ॥

[९]उद्दीप्त( ? दीच्य )वेशौ कर्तव्यौ तावुभावपि यादव ।
[१०]तयोर्मूर्धनि विन्यस्तौ करौ कार्यौ विभावसोः ॥ ६ ॥

[११]लेख( ? खि )नीपत्रककरः कार्यो भवति पिङ्गलः ।
चर्मशूलधरो [१२]देव( ? दण्ड )स्तथा यत्नाद्विधीयते ॥ ७ ॥

सिंहो ध्वजश्च [१३]कर्तव्यस्तथा सूर्यस्य वामतः ।
चत्वारश्चास्य कर्तव्यास्तनयास्तस्य पार्श्वयोः ॥ ८ ॥

[१४]रेवन्तश्च यमश्चैव मनुद्वितयमेव च ।
ग्रहराजो रविः कार्यो ग्रहैर्वा परिवारितः ॥ ९ ॥

राज्ञी च [१५]रिक्षुभा छाया तथा देवी [१६]सुवर्चला ।
[१७]चतस्रश्चास्य कर्तव्याः पत्न्यश्च परिपार्श्वयोः ॥ १० ॥

---

१. V. चन्द्राम्बुनाथयोः २. C. omits मार्कण्डेयः ३. C.V. सिन्दूराभरणप्रभः ४. C. उद्दीप्त वेशः V. सुदीप्त वेशः ५. A.B. –र्महत्तेजः ६. A.B. सर्वपुष्पचिताशुभा. ७. V.C. दण्डी. ८. A.B. कर्तव्या– ९. A.B. उद्दीप्यवेशौ. १०. V. तयोर्मूर्धनि. ११. C. लेखने. १२. A. –देवोस्तथा. १३. C. कर्तव्योस्तथा. १४. A.B. रेवंदश्च. १५. S. निक्षुभा, १६. C.V. सुवर्चसा, १७. A. चतुसः C, चतस्रश्चात्रकर्तव्याः

[1]एकचक्रेऽथ सप्ताश्वे [2]षडरे वाङ्के रथोत्तमे ।
उपविष्टस्तु कर्तव्यो देवो [3]ह्यरुणसारथिः ॥ ११ ॥

गायत्र्युष्णिगनुष्टुप् च बृहती पंक्तिरेव च ।
त्रिष्टुप् च जगती सप्त छन्दांस्यर्करथे हयाः ॥ १२ ॥

रश्मिभिः करसंस्थैस्तु धारयत्यखिलं जगत् ।
सिंहो ध्वजगतश्चास्य साक्षाद्धर्मः प्रकीर्तितः ॥ १३ ॥

रशनास्थं जगत्सर्वं देवो धारयते तथा ।
राज्ञी भू रिक्षुभा द्यौश्च छाया छाया [4]प्रकीर्तिता ॥ १४ ॥

प्रभा [5]सुवर्चला [6]प्रोक्तास्तस्य देवस्य पत्नयः ।
[7]रक्तवर्णः स भगवांस्तेजसां धाम कारणात् ॥ १५ ॥

असह्यतेजो[8]धारित्वाद् गूढगात्रस्तथैव च ।
एवं सर्वमयं धाम सूर्य एव प्रकीर्तितः ॥ १६ ॥

रूपं तथैतद्दिवसस्य भर्तुः
मयेरितं सर्वजगन्मयस्य ।
तेजोनिधानस्य [9]परोज्ज्वलस्य
[10]सर्वाधिनाथस्य सनातनस्य ॥ १७ ॥

**इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे आदित्यरूपनिर्माणं नाम ॥ ६७ ॥**

---

१. V. एकचक्रे च २. B.C.V. षड्रेखाङ्के A. षड्रेवाङ्के. ३. V. वारुणसारथिः C. वरुणसारथिः ४. A. प्रकीर्तिताः ५. V.C. सुवर्चसा. ६. A. प्रोक्ता तस्य. ७. A. रत्नवर्णः ८. A. ध्वारित्वा– ९. A.B.C. पराजयस्य. १०. B. सर्वाधिनाशस्य.

## अष्टषष्टितमोऽध्यायः ।

मार्कण्डेय :—

चन्द्रः श्वेतवपुः कार्यस्तथा श्वेताम्बरः प्रभुः ।
चतुर्बाहुर्महातेजाः सर्वाभरणवांस्तथा ॥ १ ॥

कुमुदौ च सितौ कार्यौ तस्य देवस्य हस्तयोः ।
कान्तिर्मूर्तिमती कार्या तस्य पार्श्वे तु दक्षिणे ॥ २ ॥

वामे शोभा तथा कार्या रूपेणाप्रतिमा भुवि ।
चिह्नं तथास्य सिंहाङ्कं [1]वामपार्श्वेङ्क( ? ऽर्क )वद्भवेत् ॥ ३ ॥

[2]दशाश्वो वा रथः कार्यो [3]द्विचक्रोऽम्बरसारथी( ? थिः ) ।
स्त्रजश्च [4]त्रिमनाश्चैव( ? अजश्चित्रमनाश्चैव ) वृषो वादी( ?राजी ) नरो हयः( ? याः ) ॥ ४ ॥

[5]अथोवाक्( ? अंशुमान् )सप्तधातुश्च हंसो व्योमो मृगस्तथा ।
एते ते वा( ? ना )मतः सर्वे दश चन्द्रमसो हयाः ॥ ५ ॥

अथ [6]चैवास्य कर्तव्या [7]अष्टाविंशतिसङ्ख्यकाः ।
अर्थ्यर्थरूपसंयुक्ताः पत्न्यो [8]नक्षत्रसंज्ञिताः ॥ ६ ॥

अशीतिव्यधिकाः कार्या भावा वा देहभेदयोः ।
पुरा देवासुरे युद्धे प्राकाम्येन नृपोडुभिः ॥ ७ ॥

कृतानि स्वशरीराणि बहूनि यदुनंदन ।
स्वनाथदेवरूपाणि [9]ततस्तैर्दानवा हताः ॥ ८ ॥

नक्षत्रेण कृतं रूपं यस्य यस्य सुरस्य तु ।
[10]सा चैव देवता तस्य नक्षत्रस्य [11]प्रकीर्तिता ॥ ९ ॥

देवासुरे ततो वृत्ते प्राकाम्येनैव यादव ।
स्त्रीरूप[12]धारिणो [13]देवास्तावन्तस्तु ततः कृताः ॥ १० ॥

---

१. C.V. वामपार्श्वैक– २. A.B. दशाश्वे वा रथे. ३. A.B. द्विचक्रेम्बरसारथौ. ४. A. त्रिमहादेव. ५. A. अश्वो. ६. V. वैवास्य. ७. A.B.C. अष्टाविंशतिमायुताः. ८. B. रक्षतसंज्ञिताः. ९. V.C. ततस्ते दानवा. १०. A.B.C. स एव. ११. A.B. प्रकीर्तितः. १२. B. –धारिणौ. C. धारिणा. १३. A.B. देहास्तावंतस्तैस्ततः.

[१]तेषां च वर्णसंख्या च विदिता पूर्वमेव तु ।
दाक्षायि( ? य )ण्यः स्त्रियस्त्वेताः सर्वलोक[२]नमस्कृताः ॥ ११ ॥

सर्वलोकस्य धर्मज्ञ चन्द्रमा वै पिता [३]स्मृतः ।
[४]तस्मिन्सृष्टे जगत्सर्वं परं [५]हर्षमुपैति च ॥ १२ ॥

सौम्यमूर्तिः परा ज्ञेया सा च [६]विष्णोर्महात्मनः ।
हर्षप्रसादौ विज्ञेयौ कुमुदौ चन्द्रहस्तयोः ॥ १३ ॥

[७]शोभाकान्ती विनिर्दिष्टे [८]स्वरूपे भृगुनंदन ।
अपां सारमयत्वाद्धि शुक्ल[९]वर्णस्तु चन्द्रमाः ॥ १४ ॥

अपां हि धामामृतमाहुराद्या
[१०]वासस्तु [११]तच्चन्द्रमसः प्रदिष्टम् ।
सिंहध्वजं धर्ममुशन्ति [१२]राजन्
दिशस्तुरंगाः शशिनः प्रदिष्टाः ॥ १५ ॥

**इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे सोमरूपनिर्माणं नाम ॥ ६८ ॥**

---

१. V. omits ślo. 11 २. B. -नमस्कृतः ३. A. स्मृताः. ४. A. तस्मिन्दृष्टे. ५. A. हर्षमुपैत्य च. BC. हर्षमुपैत्य च. ६. A.B. विष्णुर्महात्मनः. ७. A.B. शोभाकांते. ८. V. स्वरूपं.. ९. A.B. -वर्णः स. १०. V. नवास्तु. C. वामस्तु. ११. V.C. तच्चंद्रसमः. १२. C. राजादिश-

## एकोनसप्ततितमोऽध्यायः ।

वज्रः—

ग्रहाणां रूपनिर्माणं [1]समाचक्ष्व महाभुज ।
अनेनैव प्रसङ्गेन सर्वज्ञस्त्वं मतो मम ॥ १ ॥

मार्कण्डेयः—

भौमोऽग्नितु[2]ल्यः [3]कर्तव्यश्चाष्टाश्वे काञ्चने रथे ।
विष्णुतुल्यो बुधः कार्यो भौमतुल्ये तथा रथे ॥ २ ॥

[4]तप्तजाम्बूनदाकारो [5]द्विभुजस्तु बृहस्पतिः ।
पुस्तकं चाक्षमालां च करयोस्तस्य कारयेत् ॥ ३ ॥

सर्वाभरणयुक्तश्च तथा पीताम्बरो गुरुः ।
अष्टाश्वे काञ्चने दिव्ये रथे दृष्टिमनोहरे ॥ ४ ॥

शुक्रः श्वेतवपुः कार्यः श्वेताम्बरधरस्तथा ।
द्वौ करौ कथितौ तस्य निधिपुस्तकसंयुतौ ॥ ५ ॥

दशाश्वे च रथे कार्यो राजते भृगुनंदन ।
कृष्णवासास्तथा कृष्णः शनिः कार्यस्सिराततः ॥ ६ ॥

दण्डाक्षमालासंयुक्तः करद्वितय[6]भूषितः ।
कार्ष्णायसे रथे कार्यस्तथैवाष्टभुजङ्गमे ॥ ७ ॥

रौप्ये रथे तथाष्टाश्वे राहुः कार्यो [7]विचक्षणैः ।
केवलं मस्तकं कार्यं भुजेनैकेन संयुतम् ॥ ८ ॥

[8]ऊर्ध्वकेशो( ? शं ) विवृत्ताक्षं भुजेनैकेन संयुतम् ।
करमेकं तु कर्तव्यं तस्य शून्यं तु दक्षिणम् ॥ ९ ॥

[9]भौमस्य च तथा कार्यं केतो रूपं विजानता ।
केवलं चास्य कर्तव्या दश[10]राजंस्तुरङ्गमाः ॥ १० ॥

इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे भौमादिग्रहरूपनिर्माणं नाम ॥ ६९ ॥

---

१. A. ममाचद्व. २. V. –तल्पः ३. C. कर्तव्यः त्वष्टाश्वे. ४. A.B.V. तप्तजाम्बूनदः कार्यो. ५. C.V. द्विभुजश्च. ६. A.B.C. –भूतयः. ७. V.C. विचक्षणः. ८. V.A.B. omit ऊर्ध्वकेशो...संयुतम्. ९. C. भौमस्य तथा रूपं केतोस्कार्यं विजानता । १०. C. –राजं तु–

## सप्ततितमोऽध्यायः ।

वज्र :— मनुद्वयस्य मे रूपं कथयस्वामितद्युते ।
[1]देवेन्द्रस्य च धर्मज्ञ [2]यमस्याभिहितं त्वया ॥ १ ॥

मार्कण्डेय :— वर्तमानो मनुः कार्यो [3]राजलक्षणसंयुतः ।
भविष्यस्तु तथा कार्यः सर्वाभरणवर्जितः ॥ २ ॥

जटाधरोऽक्षमाली च कमण्डलुधरस्तथा ।
कृशोऽपि तेजसा युक्त[4]स्तपस्यभिरतस्तथा ॥ ३ ॥

[5]कार्या योगेन चान्येऽपि भविष्या मनवश्च ये ।
[6]सावर्णिमनुतुल्येन [7]कार्या रूपेण यादव ॥ ४ ॥

[8]अतीताः मनवः कार्या राजलक्षणलक्षिताः ।
पृष्ठेऽश्वे सूर्यवत्कार्यो रेवन्तश्च तथा प्रभुः ॥ ५ ॥

[9]इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे मनुरूपनिर्माणं नाम ॥ ७० ॥

---

१. A. रेवंदस्य. B. रेवंतस्य. २. C. यमस्याभिमतं. ३. A.B.C. राजलक्षण-वर्जितः. ४. A. -स्तपस्विभि- ५. A.C. कार्य. ६. V. सावर्ण. ७. B.V. कार्यो. ८. V. अतीता. ९. C. omits colophon.

# एकसप्ततितमोऽध्यायः ।

वज्रः— ग्रहाणां देवताः प्रोक्ता यास्त्वया पूर्वमेव तु ।
तासां [1]स्वरूपनिर्माणं कथयस्वामितद्युते ॥ १ ॥

मार्कण्डेयः— पूर्वमेव मया प्रोक्तं रूपं जह्वम्बुनाथयोः ।
तथा च कथितं तुभ्यं विष्णुदेवेन्द्रयोः पुरा ॥ २ ॥

चतुर्मूर्तेः कुमारस्य रूपं ते वच्मि यादव ।
कुमारश्च तथा स्कन्दो विशाखश्च [2]गुहस्तथा ॥ ३ ॥

कुमारः षण्मुखः कार्यः शिखण्डकविभूषणः ।
रक्ताम्बरधरः कार्यो मयूरवरवाहनः ॥ ४ ॥

कुक्कुटश्च तथा घण्टा तस्य दक्षिणहस्तयोः ।
पताका वैजयन्ती च शक्तिः कार्या च वामयोः ॥ ५ ॥

स्कन्दो विशाखश्च गुहः कर्तव्यश्च कुमारवत् ।
षण्मुखास्ते न कर्तव्या न मयूरगतास्तथा ॥ ६ ॥

[3]चतुर्भुजो हि भगवान्वासुदेवः सनातनः ।
प्रादुर्भूतः कुमारस्तु देवसेना[4]निनीषया ॥ ७ ॥

अष्टादशभुजा कार्या भद्रकाली मनोहरा ।
आलीढस्थानसंस्थाना चतुःसिंहे रथे स्थिता ॥ ८ ॥

अक्षमाला त्रिशूलं च खड्गं चर्म च यादव ।
बाणचापे च कर्तव्ये शङ्खपद्मौ तथैव च ॥ ९ ॥

[5]स्रुक्स्रुवौ च तथा कार्यौ तथा [6]वेदीकमण्डलू ।
दण्डशक्ती च कर्तव्ये कृष्णाजिनहुताशनौ ॥ १० ॥

---

१. A.B. मे रूपनिर्माणं. २. V. गुरुस्तथा. ३. B. चतुरक्षाहि. C.V. चतुरात्मा हि.
४. C. –निषिथया. ५. V. स्रुक्स्रुचौ. ६. C. देवीमकण्डलू.

हस्तानां भद्रकाल्यास्तु भवेच्छान्तिकरः करः ।
एकश्चैव महाभाग रत्नपात्रधरो भवेत् ॥ ११ ॥

हंसयाने न कर्तव्यो न च कार्यश्चतुर्मुखः ।
ब्रह्मोक्तमपरं रूपं सर्वं कार्यं प्रजापतेः ॥ १२ ॥

विनायकस्तु कर्तव्यो गजवक्त्र[1]श्चतुर्भुजः ।
शूलकं चाक्षमालां च तस्य दक्षिणहस्तयोः ॥ १३ ॥

पात्रं मोदकपूर्णं तु परशुश्चैव वामतः ।
दन्तश्चास्य न कर्तव्यो वामे रिपुनिसूदन ॥ १४ ॥

[2]पादपीठकृतः पाद एक आसनगो भवेत् ।
[3]पूर्णं मोदकपात्रं तु कराग्रे तस्य कारयेत् ॥ १५ ॥

लम्बोदरस्तथा कार्यः स्तब्धकर्णश्च यादव ।
व्याघ्रचर्माम्बरधरः [4]सर्पयज्ञोपवीतवान् ॥ १६ ॥

विश्वकर्मा तु कर्तव्यः सूर्यरूपधरः प्रभुः ।
[5]संदंशपाणिर्द्विभुजस्तेजोमूर्तिधरो [6]भवेत् ॥ १७ ॥

विश्वं करोति वै यस्माद्विश्वकर्मा ततः स्मृतः ।
विश्वकृद्भगवान्विष्णुर्विश्वकर्मा स उच्यते ॥ १८ ॥

**[7]इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे कुमारादिरूपनिर्माणं नाम ॥ ७१ ॥**

---

१. A.B. –श्चतुर्मुखः. २. C. पाठपीठकृतः. ३. C. पूर्णे मोदकपात्रे तु कराग्रं. ४. V. –यज्ञोपवीतिवान्. B. –यज्ञोपवीतमान्. ५. V. स दशपाणि–. ६. C. महान्. ७. C. omits the colophon.

## द्विसप्ततितमोऽध्यायः ।

वज्रः— वसूनां देव मे रूपं तथैवाङ्गिरसं शुभम् ।
विश्वेषां [1]चैव देवानां रुद्राणामपि देवताः ॥ १ ॥

भृगूणामथ [2]साध्यानामादित्यानां तथैव च ।
मरुतां च तथा रूपमाचक्ष्व [3]सुरपूजित ॥ २ ॥

मार्कण्डेयः— प्राजापत्येन रूपेण धरो नाम वसुर्भवेत् ।
वैष्णवेन च रूपेण ध्रुवो नाम प्रकीर्तितः ॥ ३ ॥

सोमश्चान्द्रेण रूपेण वायव्येन तथानिलः ।
आग्नेयेनानलः कार्यः प्रभासो वारुणेन [4]च ॥ ४ ॥

विश्वे देवास्तथा कार्याः शक्ररूपधराः सुराः ।
तिर्यग्ललाटेनाक्ष्णा च [5]नागराज्ञा च वर्जिताः ॥ ५ ॥

जीवरूपेण कर्तव्या देवाश्चाङ्गिरसस्तथा ।
माहेश्वरेण रुद्राश्च [6]साध्याक्षा वैष्णवेन तु ॥ ६ ॥

आदित्याः सूर्यरूपेण [7]चेति द्वादश यादव ।
पृथक्क्रियायां तेषां तु नवार्कसदृशाः स्मृताः ॥ ७ ॥

[8]विष्ण्विन्द्रवरुणाः कार्या यथा पूर्वं मयेरिताः ।
कर्तव्याः शुक्ररूपेण मरुतो नाम देवताः ॥ ८ ॥

**इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे वसुरूपनिर्माणं नाम ॥ ७२ ॥**

---

१. B. देव. २. B.C.V. साध्यानां चादित्यानां. ३. B. सूरपूजितः. ४. C. तु. ५. C. नागराजा च वर्जिताः, V. नागराजो विवार्जितः ६. V. साध्याक्षा. ७. C. इति. ८. B. विश्वेंद्रवरुणाः.

## त्रिसप्ततितमोऽध्यायः ।

वज्र :— अन्येषामपि देवानां रूपनिर्माणमेव च ।
कथयस्व महाभाग त्वं हि सर्वविदुच्यसे ॥ १ ॥

मार्कण्डेय :— प्राजापत्येन रूपेण कर्तव्यः कश्यपः प्रभुः ।
अदितिर्दितिर्दनुः [1]काष्ठा दनायुः सिंहिका मुनिः ॥ २ ॥

कद्रूः क्रोधा [2]तुंरा [3]प्राधा विनता सुरभिः खशा ।
सर्वा[ः] सुरूपाः कर्तव्या द्विभुजाः पूर्वमातरः ॥ ३ ॥

अदितिश्च दितिश्चैव [4]विनता सुरभिस्तथा ।
दृष्टिरासां तु कर्तव्या सौम्या यादवनंदन ॥ ४ ॥

अनेनैव तु रूपेण सर्वा वै देवमातरः ।
कर्तव्या यादवश्रेष्ठ रूपनिर्माणकर्मणा ॥ ५ ॥

कश्यपस्यापराः पत्न्यः कार्या व्याकुललोचनाः ।
विष्णुरूपधरः कार्यो ध्रुवो [5]ग्रहगणेश्वरः ॥ ६ ॥

चक्ररश्मिकरः श्रीमान्द्विभुजः सौम्यदर्शनः ।
भविष्यमनुरूपेण कार्योऽगस्त्यो महामुनिः ॥ ७ ॥

रूपं तदेवं कथितं भृग्वादीनां महात्मनाम् ।
[6]शक्रपुत्रो [7]जयन्तश्च कर्तव्यो रूपसंयुतः ॥ ८ ॥

चापबाणकरः श्रीमान्द्विभुजः सौम्यदर्शनः ।
बली यमसुतः कार्यश्चर्मशूलधरः प्रभुः ॥ ९ ॥

पुष्करश्च तथा कार्यः पद्मपत्रसमप्रभः ।
खड्गं च पुस्तकं चोभौ करयोस्तस्य कारयेत् ॥ १० ॥

---

१. A.B.C. काला. २. V. दरा. C. इरा. ३. A.B. प्रावा. ४. C. बनिता. ५. A. B. गणगणेश्वरः ६. V.C. शुक्रपुत्रौ. ७. C. जयंतस्तु.

चन्द्रपुत्री तु या ज्योत्स्ना रूपेणाप्रतिमा भुवि ।
वामपार्श्वे तु कर्तव्या सर्वाभरणभूषणा ॥ ११ ॥

सुरूपरूपः कर्तव्यो रत्नपात्रकरो विभुः ।
द्विदंष्ट्रायुक्तवदनो धनादिर्नलकूबरः ॥ १२ ॥

धनदस्य तु रूपेण मणिभद्रं [1]विदुर्बुधाः ।
न कार्या शिबिका तस्य सभार्यो नरवाहनः ॥ १३ ॥

वायुपुत्रस्तु कर्तव्यो [2]वायुरूपः पुरोजवः ।
अतीव रूपवान्कार्यो वर्चास्सोमसुतः प्रभुः ॥ १४ ॥

[3]लीलाकमलपाणिस्तु वर्चस्वी येन जायते ।
नन्दी कार्यस्त्रिनेत्रस्तु चतुर्बाहुर्महाभुजः ॥ १५ ॥

सिन्दूरारुणसङ्काशो व्याघ्रचर्माम्बरच्छदः ।
त्रिशूलभिन्दिपालौ च करयोस्तस्य कारयेत् ॥ १६ ॥

शिरोगतं तृतीयं तु तर्जयन्तं तथा परम् ।
[4]आलोकमानं कर्तव्यं दूरादागामिकं जनम् ॥ १७ ॥

अनेनैव च रूपेण वीरभद्रं विदुर्बुधाः ।
उपरिष्टात्प्रवक्ष्यामि धर्मरूपमहं तव ॥ १८ ॥

अर्थः कार्यस्तु रूपेण धनदस्य महात्मनः ।
कामदेवस्तु कर्तव्यो रूपेणाप्रतिमो भुवि ॥ १९ ॥

अष्टबाहुः स कर्तव्यः शङ्खपद्मविभूषणः ।
चापबाणकरश्चैव [5]मदादञ्चितलोचनः ॥ २० ॥

रतिः प्रीतिस्तथा शक्तिर्मदशक्तिस्तथोज्ज्वला ।
चतस्रस्तस्य कर्तव्याः पत्न्यो रूपमनोहराः ॥ २१ ॥

---

१. B. हि दुर्बुधाः. २. A.B.C. वायु पुत्रः. ३. B. लीलाकमलपत्राणिस्तु वर्चस्वी न जायते । ४. A.B.C. आलोकयानं. ५. A.B. मदोदञ्चितलोचनः.

चत्वारश्च करास्तस्य कार्या भार्यास्तनोपगाः ।
केतुश्च मकरः कार्यः पञ्चबाणमुखो महान् ॥ २२ ॥

करेण कटिगेनाथ निद्रां वामेन कारयेत् ।
दक्षिणे तु तथा पार्श्वे तस्याः सङ्कर्षणो भवेत् ॥ २३ ॥

वासुदेवस्तथा वामे [1]मैकानं च तथा [2]सुतः ।
रूपं लक्ष्म्याः प्रवक्ष्यामि [3]उपरिष्टात्तवानघ ॥ २४ ॥

चतुर्भुजा [4]तु कर्तव्या तथा देवी सरस्वती ।
अक्षमाला त्रिशूलं च पुस्तकं च [5]कमण्डलुम् ॥ २५ ॥

तस्याः करेषु कार्याणि यथावद्यदुनंदन ।
कार्या [6]सकलशा देवी वारुणी [7]चातिसुन्दरी ॥ २६ ॥

लम्बोदरी तु कर्तव्या रक्ताम्बरपयोधरा ।
शूलहस्ता महाभागा भुजप्रहरणा तथा ॥ २७ ॥

[8]बृहद्रथा च कर्तव्या बहुबाहुस्तथैव सा ।
चामुण्डा कथिता सैव सर्वसत्त्ववशङ्करी ॥ २८ ॥

[9]तथैव त्रिमुखी शुष्का शुष्का कार्या विशेषतः ।
बहुबाहुयुता देवी भुजगैः परिवेष्टिता ॥ २९ ॥

कपालमालिनी भीमा तथा खट्वाङ्गधारिणी ।
शिवा दूती तु कर्तव्या शृगालवदना शुभा ॥ ३० ॥

आलीढस्थानसंस्थाना तथा राजंश्चतुर्भुजा ।
असृक्पात्रधरा देवी खड्गशूलधरा तथा ॥ ३१ ॥

चतुर्थं तु करं तस्यास्तथा कार्यं तु सामिषम् ।
देवतुल्येन चिह्नेन यथारूपेण मातरः ॥ ३२ ॥

---

१. V. मैकानेशा तथा B. मैकानांशास्तथा. २. A. स्रुतः. ३. B. आविष्टा तु वानघ. ४. V.C. च. ५. B. कमण्डलम् ६. A B. सकलगा. ७. B. चापिसुंदरी. ८. A. बृहन्नथा च. B. बृहन्नथा तु. ९. A.B.C.V. तथैवान्त्रमुखी.

कर्तव्या देवनामाङ्का या मया ते पुरोदिताः ।
असृक्पात्रकराः [1]कार्याः सामिषैश्च तथा करैः ॥ ३३ ॥

नृत्यमाना महाभागा यासां रूपं तु नोदितम् ।
पूर्वा गजगता बाला रक्तवर्णा तु दिग्भवेत् ॥ ३४ ॥

करेणुगा बृहत्कन्या पद्माभा पूर्वदक्षिणा ।
रथस्था दक्षिणा पीता तथा स्यात्प्राप्तयौवना ॥ ३५ ॥

उष्ट्रगा कृष्णपीता च वरुणा याम्यपश्चिमा ।
यौवनाद्विच्युताः( ? ता ) कृष्णाः( ? ष्णा ) पश्चिमा तुरगस्थिता ॥३६॥

[2]आसन्नपलिता नीला [3]वडवा यदुनंदन ।
श्वेता [4]नरगता वृद्धा तथा भवति चोत्तरा ॥ ३७ ॥

अतिवृद्धा वृषस्था च शुक्ला पूर्वोत्तरा भवेत् ।
अधस्तात्पृथिवीतुल्या चोर्ध्वा गगनसंस्थिता ॥ ३८ ॥

कालः करालवदनो नित्यगश्च विभीषणः ।
पाशहस्तश्च कर्तव्यः सर्पवृश्चिकरोमवान् ॥ ३९ ॥

ज्वरस्त्रिपादः कर्तव्यस्त्रिनेत्रैर्वदनैस्त्रिभिः ।
[5]भस्मप्रहरणो रौद्रस्त्रिबाहुर्व्याकुलेक्षणः ॥ ४० ॥

धन्वन्तरिश्च कर्तव्यः सुरूपः प्रियदर्शनः ।
करद्वयगतं चास्य सामृतं कलशं भवेत् ॥ ४१ ॥

सामवेदस्तु कर्तव्यः किं तु( ? त्व )श्ववदनः प्रभुः ।
अथवा देवरूपेण वेदाः कार्या विचक्षणैः ॥ ४२ ॥

ऋग्वेदस्तु स्मृतो ब्रह्मा यजुर्वेदस्तु वासवः ।
सामवेदस्तथा विष्णुः शम्भुश्चाथर्वणो भवेत् ॥ ४३ ॥

---

१. B. कार्यः. २. A. आसन्नपरिता. ३. A.B.C. वडवा गादनंतरा. ४. V. नरभृता. ५. C. भस्मप्रहारिणो.

शिक्षा प्रजापति[1]र्ज्ञेया कल्पो ब्रह्मा प्रकीर्तितः ।
सरस्वती व्याकरणं निरुक्तं वरुणः प्रभुः ॥ ४४ ॥

[2]छंदोचिति( ? दश्चिति )तथैवाग्निर्ज्योतिषं भगवान् रविः ।
मीमांसा भगवान्सोमो [3]न्यायमार्गः समीरणः ॥ ४५ ॥

धर्मश्च धर्मशास्त्राणि पुराणं च तथा मनुः ।
इतिहासं प्रजाध्यक्षो धनुर्वेदं शतक्रतुः ॥ ४६ ॥

आयुर्वेदस्तथा साक्षाद्देवो धान्वन्तरिः प्रभुः ।
फलवेदं मही देवी [4]नृत्तशास्त्रं महेश्वरः ॥ ४७ ॥

सङ्कर्षणः [5]पाञ्चरात्रं रुद्रः पाशुपतं तथा ।
पातञ्जलमनन्तश्च [6]सांख्य[ श्च ] कपिलो मुनिः ॥ ४८ ॥

अर्थशास्त्राणि सर्वाणि धनाध्यक्षः प्रकीर्तितः ।
कलाशास्त्राणि सर्वाणि कामदेवो जगद्गुरुः ॥ ४९ ॥

अन्यानि यानि शास्त्राणि यत्कर्तॄणि प्रचक्षते ।
[7]सा एव देवता [8]तस्य शास्त्रं कार्यं [9]स्वदेहवत् ॥ ५० ॥

रूपं तु कालावयवस्य कार्यं
स्वदेवतारूपसमं रिपुघ्न ।
[10]एतत्तवोक्तं सुरसत्तमानां
रूपं मया ते [11]भृगुवंशचंद्र ॥ ५१ ॥

इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे देवतारूपनिर्माणं नाम ॥ ७३ ॥

१. A.B. —र्ज्ञेयः. २. V. छेन्दो क्षिति स्तथैवाग्नि. ३. A.B. न्यायमार्गं ४. V. नृत्यशास्त्रं. ५. B.C. पंचरात्रं. ६. A.B.C.V. सांख्यश्च. ७. V. स चैव. ८. V. तस्य शास्त्रकाव्यस्य देहवत् A.B.C. तस्य शास्त्रः कार्यः. ९. A. स्ववेदवित् B. सुवेदवित्. १०. V.B. एतं तवोक्तं. ११. V. यदुवंशचंद्र.

## चतुर्थःसप्ततितमोऽध्यायः ।

वज्र :— लिङ्गस्य रूपनिर्माणं कथयस्व ममानघ ॥ १ ॥

मार्कण्डेय :— लिङ्गे हि [1]पूजिते पूजा कृता तु [2]जगतो भवेत् ।
[3]भोगोऽस्य वृत्तः कर्तव्यो भागमष्टास्रमेव तु ॥ २ ॥

चतुरस्रं तथा भागं कर्तव्यं [4]भूरिदक्षिणम् ।
वृत्तं दृश्यन्तु कर्तव्यं अष्टास्रं पिण्डिकागतम् ॥ ३ ॥

[5]चतुरस्रं तु कर्तव्यं ब्रह्मपीठगतं तथा ।
अधस्ताद्रुद्रपीठस्य ब्रह्मपीठं विदुर्बुधाः ॥ ४ ॥

लिङ्गोपरिष्टात्तु गता पुरस्तात्
लेखा सुवृत्ता [6]तु तथैव कार्या ।
ऊर्ध्वायिता [7]च द्विगुणा तथान्या
या ब्रह्मसूत्रे [8]विबुधैः प्रदिष्टा ॥ ५ ॥

इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे लिङ्गरूपनिर्माणं नाम ॥ ७४ ॥

---

१. A.B. पूज्यते. २. A.B. जन्मतो. ३. A. भोगस्य. ४. A.B. भूतिदक्षिणम्. ५. A.B. चतुरश्रे. ६. C. च. ७. V. बुद्धिगुणा ८. B. विबुधेः.

## पञ्चसप्ततितमोऽध्यायः ।

वज्रः— व्योमरूपं [1]समाचक्ष्व [2]सर्वधर्मभृतां वर ।
[3]व्योम्नि तु [4]पूजिते पूजा कृता स्याज्जगतो भवेत् ॥ १ ॥

मार्कण्डेयः— चतुरस्रं भवेन्मूले ततो वृत्तं महाभुज ।
ततोऽल्पचतुरस्रं च चतुरस्रं [5]ततो भवेत् ॥ २ ॥

ततोऽल्पचतुरस्रं च मेरुवत्संस्थितं ततः ।
भद्रपीठमिदं प्रोक्तं व्योमभागं तृतीयकम् ॥ ३ ॥

सर्वेषां भद्रपीठानामेतल्लक्षणमुच्यते ।
[6]स्तम्भवश्च( ? च )तुरस्रं तु मध्यभागं प्रकीर्तितम् ॥ ४ ॥

भद्रपीठं ततो [7]भागे तत्र पद्मं निवेशयेत् ।
[8]शुभाष्टपत्रं तन्मध्ये [9]कर्णिकास्याद्दिवाकरः ॥ ५ ॥

पत्रेषु [10]कल्पयेत्तस्य दिक्पालांश्च यथादिशम् ।
भद्रपीठमधस्तात्तु पृथिवीं परिकल्पयेत् ॥ ६ ॥

अन्तरिक्षं तथा [11]पद्ममूर्ध्वभागं ततो विदुः ।
[12]ततः सन्निहिताः सर्वे भवन्ति त्रिदशोत्तमाः ॥ ७ ॥

[13]सर्वदेवमयं व्योम कथितं ते महाभुज ।
तस्य संपूजनं कृत्वा सर्वान्कामानवाप्नुयात् ॥ ८ ॥

[14]व्योम्नः स्वरूपं कथितं मयैतद्
[15]व्योम्नः सुपूजाकरणात्समग्रम् ।
[16]संपूजितं स्याज्जगदेक[17]वीर
चराचरं यादववंशमुख्य ॥ ९ ॥

इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे व्योमरूपनिर्माणं नाम ॥ ७५ ॥

---

१. V. सामचक्ष्व. २. B सर्वधर्मोभृतां ३. C. व्योमे. ४. B. पूज्यते. ५. C. तया. ६. B.V. सम्भवश्च— ७. A.C.V. भागं. ८. C. शुभाष्टपद्मं. ९. V. कर्णिकायां दिवाकरम्. १०. V. कल्पयेत्तत्र ११. V.C. स्तम्भमूर्ध्वभागं. १२. V. C. तत्र. १३. C. सर्वदेवामयो. १४. C. व्योमस्य रूपं. १५. V. व्योम्नस्तु पूजा–. C. व्योमस्य पूजा–. १६. B. संपूजनं. १७. A.B. –वीरं.

## षट्सप्ततितमोऽध्यायः ।

वज्र :— नरनारायणौ कार्यौ केन रूपेण संयुतौ ।
हरिः कृष्णश्च कर्तव्यः कथं वा भृगुनंदन ॥ १ ॥

मार्कण्डेय :— दूर्वाश्यामो नरः कार्यो द्विभुजश्च महाभुज ।
नारायणश्चतुर्बाहुर्नीलोत्पलदलच्छविः ॥ २ ॥

तयोर्मध्ये च बदरी कार्या फलविभूषणा ।
बदर्यामनु तौ कार्यावक्षमालाधरावुभौ ॥ ३ ॥

अष्टचक्रे स्थितौ याने [1]भूतयुक्ते मनोहरे ।
कृष्णाजिनधरौ [2]दान्तौ जटामण्डलधारिणौ ॥ ४ ॥

पादेन चैकेन रथस्थितेन
पादेन चैकेन च जानुगेन ।
कार्यो हरिश्चात्र [3]नरेण तुल्यः
कृष्णोऽपि नारायणतुल्यमूर्तिः ॥ ५ ॥

**इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे नरनारायण(हरि)कृष्णरूपनिर्माणं नाम ॥ ७६ ॥**

---

१. V. भूतियुक्ते. V.(f.) बूतयुक्ते. २. B. दंतौ. ३. A. नरेंद्र.

## सप्तसप्ततितमोऽध्यायः ।

वज्र :— धर्मस्य रूपनिर्माणं ज्ञानस्य च परंतप ।
वैराग्यस्य च धर्मज्ञ तथैश्वर्यस्य [1]मे वद ॥ १ ॥

मार्कण्डेय :— चतुर्वक्त्रश्चतुष्पादश्चतुर्बाहुस्सिताम्बरः ।
सर्वाभरणवाञ्छ्वेतो धर्मः कार्यो विजानता ॥ २ ॥
दक्षिणे चाक्षमालां च तस्य वामे तु पुस्तकम् ।
मूर्तिमान्व्यवसायस्तु कार्यो दक्षिणभागगः ॥ ३ ॥
वामभागगतः कार्यः सुखः परमरूपवान् ।
कार्यौ धर्मकरौ मूर्ध्नि विन्यस्तौ च तथा तयोः ॥ ४ ॥
अक्षमाला स्मृतः कालः पुस्तकं चागमं स्मृतम् ।
यज्ञः [2]सत्यं तपो दानं तस्य वक्त्रचतुष्टयम् ॥ ५ ॥
[3]देशकालौ तथा शौचं शुद्धिश्चास्य [4]भुजाः स्मृताः ।
श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ॥ ६ ॥
तस्य देवस्य धर्मज्ञ ज्ञेयं पादचतुष्टयम् ।
सत्त्वाधिकत्वाच्छुक्लस्तु [5]ज्ञानवासश्च कीर्त्यते ॥ ७ ॥
अथवा चास्य कर्तव्याः [6]पत्न्यश्चैव चतुर्दश ।
कीर्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया मतिः ॥ ८ ॥
बुद्धिर्लज्जा वपुः शान्तिः सिद्धिस्तुष्टिश्च[7]तुर्दश ।
द्वाराण्येतानि [8]धर्मस्य सर्वाणि कथितानि ते ॥ ९ ॥
कार्याः [9]सुरूपा द्विभुजाश्च सर्वाः
तेजोऽन्वितास्ताश्च सुभूषणाश्च ।
धर्मः स्थितः स्याद्यदि चैक एव
भार्यान्वित[10]श्चेदथ चोपदिष्टः ॥ १० ॥

इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे धर्मरूपनिर्माणं नाम ॥ ७७ ॥

---

१. B. मेव च २. C. सत्यस्तपो. ३. C. देशकालं. ४. V. भुजः स्मृतः. ५. A.B. ज्ञानवासाधिकीर्त्यते. ६. A.B.C. पत्न्यस्तु. ७. A B.V. –श्चतुर्दशी. ८. C. धर्मस्य कथितास्सर्वा एव ते. ९. V. सरूपा. C. कार्यास्स्वरूपा. १०. C. –श्चेदमथोपदिष्टः. B. –श्चेदथ चोपदिष्टाः.

## [1]अष्टसप्ततितमोऽध्यायः ।

मार्कण्डेयः— प्रद्युम्नं विद्धि वैराग्यं कापिलीं तनुमास्थितम् ।
मध्ये न्यस्ते [2]उरः कार्यस्तस्यासङ्गगतः करः ॥ १ ॥

[3]दुर्यो( ? दोर्यु )गं चापरं तस्य शङ्खचक्रधरं भवेत् ।
[4]पद्मासनोपविष्टश्च ध्यानसंमीलितेक्षणः ॥ २ ॥

कर्तव्यः कपिलो देवो जटामण्डलदुर्दृशः ।
वायुसंरोधपीनांसः पद्माङ्क[5]चरणद्वयः ॥ ३ ॥

मृगाजिनधरो [6]राजन् शुभयज्ञोपवीतमान् ।
[7]विभुर्मन्त्रं( ? न्त्र )महापद्मकर्णिकासंस्थितः प्रभुः ॥ ४ ॥

वैराग्यभावेन महानुभावो
ध्याने स्थितः स्वं परमं पदं तत् ।
ध्यायन्नथास्ते भुवनस्य गोप्ता
साङ्ख्यप्रवक्ता पुरुषः पुराणः ॥ ५ ॥

इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे [8]वैराग्यरूपनिर्माणं नाम ॥ ७८/१ ॥

---

१. V. omits this Adhyāya. २. B. तरः ३. C. दुयोगं ४. C. पद्मासनोपविद्धश्च. ५. B. चरणंः द्वयः ६. C. राजा शुद्धयज्ञोपवीतिमान्. ७. C. वित्तमन्त्रं महापद्मं. ८. C. कपिलरूपनिर्माणं.

# [1]अष्टसप्ततितमोऽध्यायः ।

मार्कण्डेयः—— य एव भगवान्विष्णुर्नरसिंहवपुर्धरः ।
ध्यानविद्भिः स एवोक्तो ज्ञानं पल( ? र )वरा( ? ला )र्दनः ॥ १ ॥

पीनस्कन्धकटिग्रीवः कृशमध्यः [2]कृशोदरः ।
सिंहासने [3]नृ( ? स्थो नर )देहस्तु नीलवासाः प्रभान्वितः ॥ २ ॥

आलीढस्थानसंस्थानः सर्वाभरण[4]भूषणः ।
ज्वालामालाकुलमुखो ज्वालकेसरमण्डलः ॥ ३ ॥

हिरण्यकशिपोर्वक्षः पाटयन्नखरैः खरैः ।
नीलोत्पलाभः कर्तव्यो देवजानुगतस्तथा ॥ ४ ॥

हिरण्यकशिपुर्दैत्यस्तमज्ञानं विदुर्बुधाः ।
सङ्कर्षणात्मा भगवानज्ञानस्य विनाशनः ॥ ५ ॥

वाङ्मनःकायसम्भूतं त्रिविधं जगतां मलम् ।
एतत्सङ्कर्षणो देवः सदा पाटयति द्विज ॥ ६ ॥

हरिः सङ्कर्षणांशेन नरसिंहवपुर्धरः ।
तमसस्त्रिविधस्यापि नाशनो जगतां हरिः ॥ ७ ॥

[5]हार्दमूर्तिनिभस्तस्य नान्यो जगति विद्यते ।
नृसिंहमूर्तिर्देवस्य सर्वाज्ञानविनाशिनी ॥ ८ ॥

सिंहासने सुखासीनः कार्यो वा भगवान्हरिः ।
गदामस्तकविन्यस्तकरद्वितयभूषणः ॥ ९ ॥

ज्वालामालाकुलवपुः शङ्खपद्मधरः प्रभुः ।
मूर्तिमत्पृथिवीहस्तन्यस्तपादोऽथ वोत्थितः ॥ १० ॥

---

१. A.B. omit this Adhyāya. २. C. कृशोधरः ३. C. नृदेहश्च. ४. V. –भूषितः ५. C. हार्दमूर्तनिशोत्तस्य.

शङ्खचक्रगदापद्मलाञ्छनैः शोभितः करैः ।
अग्निज्वालाकुलावर्तविभूषिततनूरुहः ॥ ११ ॥

नरसिंहोऽथ वा कार्यः प्रभामण्डलदुर्दृशः ।
सर्वाभरणसम्पन्नः कार्यो [1]भूषणवर्जितः ॥ १२ ॥

ज्ञानं नृसिंहो जगतामधीशः
तेजोनिवासोऽम्बरस[2]न्निकाशः ।
रूपं मयैतत्त्रिविधं प्रदिष्टं
तस्याप्रमेयस्य जनार्दनस्य ॥ १३ ॥

इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे नृसिंहरूपनिर्माणो( ? णं ) नाम ॥ ७८/२ ॥

---

१. C. भरणवर्जितः. २. C. –सन्निवासः

## एकोनाशीतितमोऽध्यायः ।

मार्कण्डेयः—

ऐश्वर्यमनिरुद्धस्तु वराहो भगवान्हरिः ।
[1]ऐश्वर्यशक्त्या दंष्ट्राग्रसमुद्धृतवसुन्धरः ॥ १ ॥

नृवराहोऽथ वा कार्यः शेषोपरिगतः प्रभुः ।
शेषश्चतुर्भुजः कार्यश्चारुरत्नफणान्वितः ॥ २ ॥

आश्चर्योत्फुल्लनयनो देवीवीक्षणतत्परः ।
कर्तव्यौ सीरमुसलौ करयोस्तस्य यादव ॥ ३ ॥

[2]सर्पभूषश्च कर्तव्यस्तथैव रचिताञ्जलिः ।
आलीढस्थानसंस्थानस्तत्पृष्ठे भगवान्भवेत् ॥ ४ ॥

[3]वामारत्निगता तस्य योषिद्रूपा वसुन्धरा ।
[4]नमस्कारपरा तस्य कर्तव्या द्विभुजा शुभा ॥ ५ ॥

यस्मिन्भुजे धरा देवी तत्र शङ्खः करे भवेत् ।
अन्ये तस्य कराः कार्याः पद्मचक्रगदाधरः( ? राः ) ॥ ६ ॥

हिरण्याक्षशिरश्छेदश्चक्रोद्यतकरोऽथ वा ।
शूलोद्यतहिरण्याक्षसम्मुखो भगवान्भवेत् ॥ ७ ॥

मूर्तिमन्तमनैश्वर्यं हिरण्याक्षं विदुर्बुधाः ।
ऐश्वर्येण वराहेण स निरस्तोऽरिमर्दनः ॥ ८ ॥

नृवराहोऽथ वा कार्यो ध्याने कपिलवत्स्थितः ।
द्विभुजस्त्वथ वा कार्यः [5]पिण्डनिर्वहणोद्यतः ॥ ९ ॥

समग्र[6]क्रोडरूपो वा बहुदानवमध्यगः ।
नृवराहो वराहो वा कर्तव्यः क्ष्मा[7]विधारणे ॥ १० ॥

---

१. B. ऐश्वर्यशक्तसा. २. C.सर्पभोगश्च. ३. A.B. वामारत्नगतास्तस्य. V. सव्येऽरत्निगतास्तस्य. V. (f) वामेऽरत्निगतास्तस्य. ४. B. नमस्कार मया. ५. A.B. पिण्डनिर्वपणोद्यतः ६. B. –क्रोधरूपो. ७. A. –विचारणे.

ऐश्वर्ययोगोद्भूत[1]सर्वलोकः
कार्योऽनिरुद्धो भगवान्वराहः ।
रुद्धा न यस्य क्वचिदेव शक्तिः
समस्तपापापहरस्य राजन् ॥ ११ ॥

इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे वराहरूपनिर्माणं नाम ॥ ७९ ॥

---

१. C. सर्वयोगः.

## अशीतितमोऽध्यायः ।

वज्रः—

अथाश्वशिरसो रूपं विष्णोरमिततेजसः ।
[1]श्रोतुमिच्छाम्यनेनैव प्रसङ्गेन महाभुज ॥ १ ॥

मार्कण्डेय :—

[2]मूर्तिमत्पृथिवीपालहस्तपादस्मितच्छविः ।
नीलाम्बरधरः कार्यो देवो हयशिरोधरः ॥ २ ॥

विद्धि [3]सङ्कर्षणाङ्गं वै देवं हयशिरोधरम् ।
कर्तव्योऽष्टभुजो देवस्तत्करेषु [4]चतुष्ष्वथ ॥ ३ ॥

शङ्खचक्रगदापद्मान्साकारान्कारयेद् बुधः ।
चत्वारश्च कराः कार्या वेदानां देहधारिणाम् ॥ ४ ॥

देवेन मूर्ध्नि [5]विन्यस्ताः सर्वाभरणधारिणा ।
अश्वग्रीवेन( ? ण ) देवेन पुरा वेदाः समुद्धृताः ॥ ५ ॥

वेदा हृता दानवपुङ्गवाभ्यां
रसातलाद्देववरेण तेन ।
समुद्धृता यादववंशमुख्य
तुरङ्गमूर्ध्ना पुरुषोत्तमेन ॥ ६ ॥

इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे हयग्रीवरूपनिर्माणं नाम ॥ ८० ॥

---

१. B. श्रोतुमिच्छामि तेनैव. २. C. मूर्तिवत्पृथिवीपाल. ३. C. सङ्कर्षणाङ्गेव देवं. C. सङ्कर्षणं देवं. ४. A. चतुर्षु च. B. चतुर्ष्वं च. ५. V.C. विन्यस्ता.

## एकाशीतितमोऽध्यायः ।

वज्रः—

पद्मनाभस्य मे रूपं प्रब्रूहि जगताम्पतेः ।
यत्रास्यपद्मसम्भूतो देवदेवः पितामहः ॥ १ ॥

मार्कण्डेयः—

जलमध्यगतः कार्यः शेषः [1]पन्नगदर्शनः ।
फणपुञ्जमहारत्न[2]दुर्निरीक्ष्यशिरोधरः ॥ २ ॥

देवदेवस्तु कर्तव्यस्तत्र [3]सुप्तश्चतुर्भुजः ।
एकः पादोऽस्य कर्तव्यो लक्ष्म्युत्सङ्गगतः [4]प्रभोः ॥ ३ ॥

तथापरश्च कर्तव्यः शेषभोगाङ्कसंस्थितः ।
एको भुजोऽस्य कर्तव्यस्तत्र जानौ प्रसारितः ॥ ४ ॥

[5]कर्तव्यो नाभिदेशस्थस्तथा तस्यापरः करः ।
[6]तथैवान्यः करः कार्यो देवस्य तु शिरोधरे ॥ ५ ॥

सन्तानमञ्जरीधारी तथैवास्यापरो भवेत् ।
नाभीसरसि सम्भूते कमले तस्य यादव ॥ ६ ॥

सर्वपृथ्वीमये देव्याः प्राग्वत्कार्यः पितामहः ।
नाललग्नौ च कर्तव्यौ पद्मस्य मधुकैटभौ ॥ ७ ॥

नृरूपधारीणि भुजङ्गमस्य
कार्याण्यथास्त्राणि तथा समीपे ।
एतत्तवोक्तं यदुपुङ्गवाग्र्य
देवस्य रूपं परमस्य तस्य ॥ ८ ॥

इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे पद्मनाभरूपनिर्माणं नाम ॥ ८१ ॥

---

१. C. पन्नाग– २. C. –दुर्निरीक्ष. ३. B. सप्तश्चतुर्भुजः ४. V.C. प्रभो. ५. A.B. कर्तव्यौ. ६. V. तथा चान्यः

## द्व्यशीतितमोऽध्यायः ।

वज्रः— आचक्ष्व रूपं लक्ष्म्या मे भृगुवंशविवर्धन ।
या माता सर्वलोकस्य पत्नी विष्णोर्महात्मनः ॥ १ ॥

मार्कण्डेय :— हरेः समीपे कर्तव्या लक्ष्मीस्तु द्विभुजा [1]नृप ।
दिव्यरूपाम्बुजकरा सर्वाभरण[2]भूषणा ॥ २ ॥

गौरी शुक्लाम्बरा देवी रूपेणाप्रतिमा भुवि ।
पृथक्चतुर्भुजा कार्या देवी सिंहासने शुभे ॥ ३ ॥

सिंहासनेऽस्याः कर्तव्यं कमलं चारुकर्णिकम् ।
अष्टपत्रं महाभाग कर्णिकायां तु संस्थिता ॥ ४ ॥

विनायकवदासीना देवी कार्या महाभुज ।
बृहन्नालं करे कार्यं तस्याश्च [3]कमलं शुभम् ॥ ५ ॥

दक्षिणे यादवश्रेष्ठ केयूरप्रान्तसंस्थितम् ।
वामेऽमृतघटः कार्यस्तथा राजन्मनोहरः ॥ ६ ॥

[4]तथैवान्यौ करौ कार्यौ [5]बिल्वशङ्खधरौ नृप ।
आवर्जितघटं कार्यं तत्पृष्ठे कुञ्जरद्वयम् ॥ ७ ॥

देव्याश्च मस्तके पद्मं तथा कार्यं मनोहरम् ।
सौभाग्यं तद्विजानीहि [6]शङ्खं विद्धि तथा परम् ॥ ८ ॥

[7]बिल्वं च सकलं लोकमपां सारा(? रोऽ)मृतं तथा ।
पद्मं लक्ष्मीकरे विद्धि विभवं द्विजपुङ्गव ॥ ९ ॥

हस्तिद्वयं विजानीहि शङ्खपद्मावुभौ निधी ।
समुत्थिता वा कर्तव्या [8]शङ्खाम्बुजकरा [9]शुभा ॥ १० ॥

---

१. C. द्विज. २. V. –भूषिता. ३. A.B.C. कमले शुभे. ४. A.B.C. तथास्यान्यौ ५. A. बिलुशङ्खकरौ. ६. V. शङ्खमृद्धि. ७. A. बिलुं. ८. B. शंखंभुजकरा. ९. V. तथा.

[1]समुत्थिता [2]महाभाग पद्मे पद्मान्तरप्रभा ।
द्विभुजा चारुसर्वाङ्गी सर्वाभरणभूषणा ॥ ११ ॥

द्वौ च [3]मौलिकरौ मूर्ध्नि [4]कार्यौ विद्याधरौ शुभौ ।
कराभ्यां मौलिलग्नाभ्यां दक्षिणाभ्यां विराजितौ ॥ १२ ॥

कराभ्यां खड्गधारिभ्यां देवीवीक्षणतत्परौ ।
राजश्रीस्स्वर्गलक्ष्मीश्च ब्राह्मी लक्ष्मीस्तथैव च ॥ १३ ॥

जयलक्ष्मीश्च कर्तव्या तस्या देव्यास्समीपगाः ।
सर्वाः सुरूपाः कर्तव्यास्तथा च सुविभूषणाः ॥ १४ ॥

लक्ष्मीः स्थिता सा कमले तु यस्मिंस्तां( ? स्तत् ) [5]केशवं विद्धि महानुभाव ।
विना कृता सा मधुसूदनेन क्षणं न संतिष्ठति लोकमाता ॥ १५ ॥

इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे लक्ष्मीरूपनिर्माणं नाम ॥ ८२ ॥

---

१. V.C. समुक्षिता. २. V. महाभागा. ३. V. मौलिचरौ. ४. C. करौ. ५. A.B. केशवे.

## त्र्यशीतितमोऽध्यायः ।

वज्रः—

रूपेण केन कर्तव्यो विश्वरूपधरो हरिः ।
[1]एतं मे संशयं छिन्धि त्वं हि सर्वविदुच्यसे ॥ १ ॥

मार्कण्डेयः—

आदौ देवस्य कर्तव्याश्चत्वारो [2]वैष्णवा मुखाः ।
तेषामुपरि कर्तव्यास्तथा माहेश्वराः पुनः ॥ २ ॥

ईशानं( ? न )वक्त्रहीनास्ते [3]यथा प्रोक्ता मया पुरा ।
तेषामुपरि कर्तव्या [4]मुखा ब्र( ? ब्रा )ह्मा [5]यथेरिताः ॥ ३ ॥

[6]ततश्चान्ये मुखाः कार्यास्तिर्य[7]गूर्ध्वं तथैव च ।
सर्वेषामपि देवानां तथान्यानपि कारयेत् ॥ ४ ॥

ये मुखाः सत्त्वजातानां [8]नानारूपाणि भागशः ।
यावन्तो [9]दृष्टयः प्रोक्ताश्चित्रसूत्रे महात्मभिः ॥ ५ ॥

दर्शनीयास्तु ताः सर्वास्तस्य मूर्धसु भागशः ।
नानाविधानि सत्त्वानि मुखैरन्यैस्तथैव च ॥ ६ ॥

ग्रसमानः स कर्तव्यः सर्वैः सत्त्वभयङ्करैः ।
[10]कार्याण्युद्भवमानानि मुखाः [11]कार्याश्च ते शुभाः ॥ ७ ॥

यथा शक्त्या च कर्तव्यास्तस्य देवस्य बाहवः ।
हस्तानि यानि दृष्टानि नृत्तशास्त्रे महात्मभिः ॥ ८ ॥

तानि सर्वाणि कार्याणि तस्य देवस्य बाहुषु ।
हस्ताः कार्यास्तथैवान्ये सर्वायुधविभूषणाः ॥ ९ ॥

यज्ञदण्डधराश्चान्ये शिल्पभाण्डधरास्तथा ।
[12]कलाभाण्डधराश्चान्ये वाद्यभाण्डधराः [13]परे ॥ १० ॥

---

१. A.B. एतन्मे. २. V. वैस्तवोन्मुखाः ३. V.C. तथा. ४. V.C. मुख्या. ५. V.C. यथेरिता. ६. V. ततश्चान्य. ७. A.B.V. –गूर्ध्वे. ८. V. नानारूपा विभागशः. ९. A. दृष्टया. १०. V. कार्याण्युद्धूयमानानि. ११. V. केचन ते शुभाः. १२. V. कालभाण्ड– १३. B. परा.

रूपमन्यत्प्रकर्तव्यं वैकुण्ठ [1]वदतोऽच्युत ।
तत्रापि [2]गात्रगास्तस्य दर्शयेच्चित्रकर्मणा ॥ ११ ॥

त्रैलोक्यं सकलं राजन्यथाशास्त्रानुसारतः ।
दर्शनीयानि वर्णानि सर्वाण्येव महात्मनः ॥ १२ ॥

बहुरूपस्य देवस्य बहुमस्तकगानि तु ॥ १३ ॥

एवं हि शक्त्या जगतां प्रधानः
[3]समग्ररूपो भगवान् हि कार्यः ।
कात्स्न्येन रूपं पुरुषोत्तमस्य
वक्तुं न शक्यं कुत एव कर्तुम् ॥ १४ ॥

इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे विश्वरूपनिर्माणं नाम ॥ ८३ ॥

---

१. V. -वदतोऽच्युते. A.B. -वदतोच्यते. २. A.B. गात्रिणस्तस्य C. गात्रैयस्तस्य.
३. A. समग्ररूपी. B. समग्ररूपे.

## चतुरशीतितमोऽध्यायः ।

मार्कण्डेयः—

ऐड्डकरूपनिर्माणं शृणुष्व गदतो मम ।
ऐड्डकपूजनात्पूजा [1]कृतास्य जगतो भवेत् ॥ १ ॥

भद्रपीठं बुधः कुर्यात्सोपानैः शोभनैर्युतम् ।
चतुर्भिर्यादवश्रेष्ठ यथादिशमरिन्दम ॥ २ ॥

तस्योपरिष्टादपरं भद्रपीठं तु कारयेत् ।
तस्योपरिष्टादपरं तादृग्विधमरिन्दम ॥ ३ ॥

तस्योपरिष्टात्कर्तव्यं लिङ्गरूपं विजानता ।
न तु तत्रापि कर्तव्यं लिङ्गं रेखाविराजितम् ॥ ४ ॥

तस्य मध्ये ध्रुवां यष्टिं चतुरस्रां तु कारयेत् ।
तस्योपरिष्टात्कर्तव्या भूमिकास्तु त्रयोदश ॥ ५ ॥

तस्योपरिष्टात्कर्तव्यं तथैवामल[2]सारकम् ।
तस्योपरि पुनर्यष्टिः कार्या राजन्सुवर्तुला ॥ ६ ॥

समार्ध( ? र्क )चन्द्रमध्यस्थ चन्द्रकेण विराजिता ।
भूमिका या मया प्रोक्ता तथैवामलसारकम् ॥ ७ ॥

भुवनास्ते त्वया [3]ज्ञेयाः तथा राजंश्चतुर्दश ।
लिङ्गं महेश्वरो देवो वृत्ता यष्टिः पितामहः ॥ ८ ॥

चतुरस्रा तु या [4]यष्टिस्सा च देवो जनार्दनः ।
गुणरूपेण विज्ञेयं भद्रपीठत्रयं तथा ॥ ९ ॥

गुणाधानमिति प्रोक्तं त्रैलोक्यं सचराचरम् ।
अधस्ताद्भुवनानां तु लिङ्गोपरि तथा नृप ॥ १० ॥

---

१. B. कृतस्य. २ V. –तारकम् instead of सारकम्. ३. C. ज्ञेया तु या. ४. B.C.V. यष्टिस्स.

लोकपालाश्च कर्तव्याः शूलहस्ताश्चतुर्दिशम् ।
[1]विरूढो धृतराष्ट्रश्च विरूपाक्षश्च यादवः(?व) ॥ ११ ॥

कुबेरश्च महातेजाः [2]सूर्यवेशधराः शुभाः ।
सर्वे कवचिनः कार्याश्शुभाभरणभूषिताः ॥ १२ ॥

[1]विरूढकं विजानीहि शक्र(?क्रं) देवगणेश्वरम् ।
धृतराष्ट्रं विजानीहि यमं भुवननायकम् ॥ १३ ॥

विरूपाक्षं विजानीहि वरुणं यादसांपतिम् ।
राजराजं विजानीहि [4]कुबेरं धनदं प्रभुम् ॥ १४ ॥

ऐडूकरूपं कथितं मयैतत्
प्रजाहिताख्यं यदुवंशमुख्य ।
[5]ऐडूकपूजानिरता लभन्ते
[6]सुखं मनुष्या दिवि वासमन्ते ॥ १५ ॥

इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे ऐडूकरूपनिर्माणं नाम ॥ ८४ ॥

---

१. B. विगूठो. २. A.C.V. सूर्यवेशधरः शुभः. ३. V. विरूपाक्षं. ४. A. कुवीरं
५. V. omits ऐडूक...वासमन्ते. ६. B.C. सुखं.

## पञ्चाशीतितमोऽध्यायः ।

वज्र :— वासुदेवस्य देवस्य बहुरूपस्य भार्गव ।
ब्रूहि मे रूपनिर्माणं शाश्वतस्य महात्मनः ॥ १ ॥

मार्कण्डेय :— एकवक्त्रश्चतुर्बाहुः सौम्यरूपः सुदर्शनः ।
सलिलाध्मातमेघाभः सर्वाभरणभूषितः ॥ २ ॥

कण्ठेन शुभरेखेण कम्बुतुल्येन राजता ।
वराभरणयुक्तेन कुण्डलोत्तमभूषिणा ॥ ३ ॥

अङ्गदी [1]बद्धकेयूरो वनमालाविभूषणः ।
उरसा कौस्तुभं बिभ्रत्किरीटं शिरसा तथा ॥ ४ ॥

[2]शिरःपद्मस्तथैवास्य [3]कर्तव्यः चारुकर्णिकः ।
मुष्टिश्लिष्टायतभुजस्तनुस्ता( ? नु ता )म्रनखाङ्गुलिः ॥ ५ ॥

मध्येन त्रिवलिभङ्गशोभितेन [4]सुचारुणा ।
स्त्रीरूपधारिणी क्षोणी कार्या तत्पादम[5]ध्यगा ॥ ६ ॥

तत्करस्थाङ्घ्रि[6]युगलो देवः कार्यो जनार्दनः ।
तालान्तरपदन्यासः किञ्चिन्निष्क्रान्तदक्षिणः ॥ ७ ॥

[7]अन्तर्दृशा मही कार्या देवदर्शनविस्मिता ।
देवश्च कटिवासेन कार्यो [8]जान्ववलम्बिना ॥ ८ ॥

वनमाला च कर्तव्या देवजान्ववलम्बिनी ।
यज्ञोपवीतः कर्तव्यो नाभिदेशमुपागतः ॥ ९ ॥

उत्फुल्लकमलं पाणौ कुर्याद्देवस्य दक्षिणे ।
वामपाणिगतं शङ्खं शङ्खाकारं तु कारयेत् ॥ १० ॥

---

१. B. बद्धकेयूरं वनमालाविभूषणं. २. B. शरः. ३. C. कर्तव्याश्चारुकर्णिभिः. ४. C.V. सुधारुणा. ५. B. –मध्यगाः. ६. V. –युगुलो. ७. A.C. अनदृश्या. B. अनंदृश्या. ८. A. जान्वलम्बिता.

दक्षिणे तु गदा देवी तनुमध्या सुलोचना ।
स्त्रीरूपधारिणी मुग्धा सर्वाभरणभूषणा ॥ ११ ॥

पश्यन्ती देवदेवेशं कार्या चामरधारिणी ।
कार्यं तन्मूर्ध्निविन्यस्तं देवहस्तं तु दक्षिणम् ॥ १२ ॥

वामभाग[1]गतश्चक्रः कार्यो लम्बोदरस्तथा ।
सर्वाभरणसंयुक्तो [2]वृत्तविस्फारितेक्षणः ॥ १३ ॥

कर्तव्यश्चामरकरो देववीक्षणतत्परः ।
[3]कार्यो देवकरो वामो विन्यस्तस्तस्य मूर्धनि ॥ १४ ॥

वज्र :— किं भयं तस्य देवस्य नित्यं [4]सर्वायुधोद्यतः ।
यतस्तिष्ठति सर्वात्मा भयहा त्रिदिवौकसाम् ॥ १५ ॥

मार्कण्डेय :— नैतान्यायुधजातानि परमार्थेन यादव ।
महाभूतान्यथैतानि हरिर्धारयते प्रभुः ॥ १६ ॥

खं विजानीहि देवस्य करे शङ्खो महाभुजः ।
चक्रं जानीहि पवनं गदां तेजस्तथा विभोः ॥ १७ ॥

आपः पद्मं विजानीहि पादमध्ये व्यवस्थितम् ।
महाभूतान्यथैतानि त्यक्तानि हरिणा नृप ॥ १८ ॥

क्षिप्रमेव विशीर्यन्ते तेन धारयते हरिः ।
विष्णुर्जीवस्स[5]माख्यातस्तेन त्यक्ताः शरीरगाः ॥ १९ ॥

भूतानि पश्य प्रत्यक्षं शीर्यमाणानि सर्वशः ।
भूतैर्देवधृतैर्लोको धार्यते यदुनन्दन ॥ २० ॥

तेषां धारणशक्तिर्या सा ज्ञेया विष्णु[6]कारिता ।
वासुदेवस्य रूपेण कार्यस्सङ्कर्षणः प्रभुः ॥ २१ ॥

---

१. A. –गतः शक्रः. २. V. नृत्त–. A. वित्त–. ३. A.B.C. कार्यं देवकरं वामं विन्यस्तं. ४. B. सर्वायुधोभृतः. ५. C. –समाख्यातास्तेन. ६. A.B. –कारिका.

स तु शुक्लवपुः कार्यो नीलवासा यदूत्तम ।
[१]गदास्थाने च मुसलं [२]चक्रस्थाने च लाङ्गलम् ॥ २२ ॥

कर्तव्यौ तनुमध्यौ तौ नृरूपौ रूपसंयुतौ ।
वासुदेवस्य रूपेण प्रद्युम्नश्च तथा भवेत् ॥ २३ ॥

स तु दूर्वाङ्कुरश्यामः सितवासा विधीयते ।
चक्रस्थाने भवेच्चापं गदास्थाने तथा शरम्(?ः) ॥ २४ ॥

तथाविधौ तु कर्तव्यौ तथा मुसललाङ्गलौ ।
एतदेव तथा रूपमनिरुद्धस्य कारयेत् ॥ २५ ॥

पद्मपत्राभवपुषो रक्ताम्बरधरस्य तु ।
चक्रस्थाने भवेच्चर्म गदास्थानेऽसिरेव च ॥ २६ ॥

चर्म स्याच्चक्ररूपेण प्रांशुः खड्गो विधीयते ।
चक्रादीनां स्वरूपाणि किञ्चिन्मूर्धसु दर्शयेत् ॥ २७ ॥

रम्याण्यायुधरूपाणि चक्रादीन्येव यादव ।
वामपार्श्वगताः कार्या देवानां प्रवरा [३]ध्वजाः ॥ २८ ॥

स्वपताकायुता राजन् यष्टिस्थास्ते [४]यथेरिताः ।
पीतवर्ण(?र्णौ) प्रतिहारं(?रौ) वासुदेवस्य कारयेत् ॥ २९ ॥

सुभद्रवसुभद्राख्यौ वीरौ प्रासकरावुभौ ।
[५]आषाढो [६]यज्ञतारश्च [७]कार्यौ सङ्कर्षणस्य तु ॥ ३० ॥

नीलवर्णौ [८]महाभागौ तथा मुद्गरधारिणौ ।
प्रद्युम्नस्य प्रतीहारौ जयो विजय एव च ॥ ३१ ॥

श्वेतवर्णौ महाभाग तथा खड्गधरावुभौ ।
आमोदश्च प्रमोदश्च महाबलपराक्रमौ ॥ ३२ ॥

---

१. C. गदास्थानं. २. C. चक्रस्थानं. ३. B. ध्वजः. ४. A.B.C. यथेरितम्. ५. A. आषाढ. ६. B.C.V. यज्ञतातश्च. ७. B.C.V. कार्यः. ८. C. महाभागस्तथा.

अनिरुद्धस्य विज्ञेयौ प्रतीहारौ सुरेश्वरौ ।
रक्तवर्णौ महाभाग तथोभौ शक्तिधारिणौ ॥ ३३ ॥

सर्वे सुरूपाः कर्तव्याः सर्वाभरणधारिणः ।
[1]द्विबाहवस्तु [2]कर्तव्यास्तर्जन्युच्छ्रितपाणयः ॥ ३४ ॥

[3]दृष्टिस्तेषां तु कर्तव्या द्वारन्यस्ता महाभुज ।
शक्रं सुभद्रं जानीहि वसुभद्रं हुताशनम् ॥ ३५ ॥

आषाढं देव देवेशं यमं जानीहि यादव ।
[4]यज्ञता[ रं ] विरूपाक्षं विद्धि देवमनिन्दितम् ॥ ३६ ॥

जयं जानीहि वरुणं यादोगणमहेश्वरम् ।
पवनं च विजानीहि विजयं यदुनन्दन ॥ ३७ ॥

आमोदं धनदं विद्धि प्रमोदं शिवमेव च ।
एते कार्याश्च वा सर्वे [5]दिङ्नागोक्तवपुर्धराः ॥ ३८ ॥

[6]एत एव तथा प्रोक्ता भूय एव महात्मभिः ।
[7]अष्टौ देवगणा राजँस्तन्मे निगदतः शृणु ॥ ३९ ॥

वासुदेवप्रतीहारावणिमा लघिमा स्मृतौ ।
सङ्कर्षणप्रतीहारौ महिमाप्राप्तिसंज्ञितौ ॥ ४० ॥

प्राकाम्यं च तथैशित्वं प्रद्युम्ने कथितावुभौ ।
वशित्वं विद्धि चामोदं यत्र कामावसायिता ॥ ४१ ॥

[8]प्रमोदमथ जानीहि सर्वलोकनमस्कृतम् ।
एतत्ते रूपनिर्माणं चतुर्मूर्ते[9]र्मयेरितम् ॥ ४२ ॥

एकमूर्ति[10]धरः कार्या( ? र्यो ) वैकुण्ठेत्यभि[11]शब्दितः ।
चतुर्मुखः स कर्तव्यः प्रागुक्त[12]वदनः प्रभुः ॥ ४३ ॥

---

१. C. द्विबाहवश्च. २. B. कर्तव्यस्तर्जन्यु–. ३. C. दृष्टिस्तेषां च कर्तव्याद्वारे–. ४. A.B. C.V. यज्ञतातं. ५. C. दिङ्नगोक्त. V. दिनगोक्त. ६. A. एते. ७. C. अष्ट. ८. A.B. प्रमोदं शर्वं जानीहि. ९. C. –र्मयोदितम्. १०. A.C. –धरास्कार्या. ११. A.B.V. शब्दिताः १२. C. –वदनो विभुः

चतुर्मूर्तिः स भवति कृते मुखचतुष्टये ।
पूर्वं सौम्यमुखं कार्यं [1]यत्तु मुख्यतमं विदुः ॥ ४४ ॥

कर्तव्यं सिंहवक्त्राभं ज्ञानवक्त्रं तु दक्षिणम् ।
पश्चिमं वदनं रौद्रं [2]यत्तदैश्वर्यमुच्यते ॥ ४५ ॥

चतुर्वक्त्रस्य कर्तव्यं रूपमन्यत्तथेरितम् ।
चतुर्भुजो वा [3]कर्तव्यस्ताक्ष्यो [4]यादवनन्दन ॥ ४६ ॥

[5]गरुडश्च तथा कार्यो [6]धर्मज्ञ रचिताञ्जलिः ।
सुखोपविष्टस्तत्पृष्ठे तत्करस्थो हि पङ्कजः ॥ ४७ ॥

उपविष्टौ गदाचक्रौ कर्तव्यौ ताक्ष्यपक्षयोः ।
[7]ताक्ष्यासनस्था श्रीः कार्या वामोत्सङ्ग[8]गतापि वा ॥ ४८ ॥

शेषभोगोपविष्टो वा कार्यो देवो मनोहरः ।
तत्फणैरेव रचितं दुर्निरीक्ष्यं [9]प्रभोर्मुखम् ॥ ४९ ॥

शेषभोगोपविष्टस्य शून्यं करचतुष्टयम् ।
कार्यं चक्रं गदा कार्या सदेहा तत्समीपगा ॥ ५० ॥

लक्ष्मीः कार्या तथा तस्य शेषभोगगतापि वा ।
शेषपर्यङ्कशयने कार्यो वा भगवान्हरिः ॥ ५१ ॥

ऐरावति [10]समुद्भेदे यथारूपो मयेरितः ।
नृसिंहरूपं कथितं [11]वाराहं कापिलं तथा ॥ ५२ ॥

विश्वरूपं हयग्रीवं पद्मनाभं तथैव च ।
[12]ब्राह्मं रौद्रं च [13]रामीयं पुष्करेण महात्मना ॥ ५३ ॥

कर्तव्यो वामनो देवः सङ्कटैर्गात्रपर्वभिः ।
पीनगात्रश्च कर्तव्यो दण्डी चाध्ययनोद्यतः ॥ ५४ ॥

---

१. A.B. ये तु मुखमलं. C. यत्तु मुखमलं. २. A.B. यत्तदैश्वरमुच्यते. ३. B. कर्तव्यास्ताक्ष्यो. ४. C. यादवसूदनः. ५. V. गारुडश्च. ६. C. धर्मज्ञो. ७. A.B.C. ताद्यासनस्य. ८. C. नतापिवा. ९. C. प्रभोर्महान्. १०. V.C. समुद्भूते. ११. C. वराहे कपिलं. १२. C.V. ब्राह्मं. १३. A.B.C. रामाय.

दूर्वाश्यामश्च कर्तव्यः कृष्णाजिनधरस्तथा ।
सजलाम्बुदसंकाशस्तथा कार्यस्त्रिविक्रमः ॥ ५५ ॥

[1]दण्डपाशधरः कार्यः शङ्खसञ्चुम्बिताधरः ।
शङ्खचक्रगदा[2]पद्माः कार्यास्तस्य स्वरूपिणः ॥ ५६ ॥

नृदेहास्ते न कर्तव्याश्शेषं कार्यं तु पूर्ववत् ।
एकोर्ध्ववदनः कार्यो देवो विस्फारितेक्षणः ॥ ५७ ॥

रूपं नरस्य कथितं तथा नारायणस्य [3]ते ।
कृष्णस्य हरिणा सार्धं पूर्वं वरुणसूनुना ॥ ५८ ॥

हंसो मत्स्यस्तथा कूर्मः कार्यास्तद्रूपधारिणः ।
[4]शृङ्गीमत्स्यस्तु कर्तव्यो देवदेवो जनार्दनः ॥ ५९ ॥

स्त्रीरूपश्च तथा कार्यः सर्वाभरणभूषितः ।
करेऽमृतघटश्चास्य कर्तव्यो भूरिदक्षिणः ॥ ६० ॥

पृथुः कार्यस्तथा राजा [5]चक्रवर्त्यन्तलक्षणः ।
कार्यस्तु भार्गवो रामो जटामण्डलदुर्दृशः ॥ ६१ ॥

हस्तेऽस्य परशुः कार्यः कृष्णाजिनधरस्य तु ।
रामो दाशरथिः कार्यो राजलक्षणल[6]क्षितः ॥ ६२ ॥

भरतो लक्ष्मणश्चैव शत्रुघ्नश्च महायशाः ।
तथैव सर्वे कर्तव्याः किन्तु मौलिविवर्जिताः ॥ ६३ ॥

गौरस्तु कार्यो वाल्मीकिर्जटामण्डलदुर्दृशः ।
तपस्यभिरतः शान्तो न कृशो न च पीवरः ॥ ६४ ॥

वाल्मीकिरूपं सकलं दत्तात्रेयस्य कारयेत् ।
[7]कृष्णकृशतनुर्व्यासः पिङ्गलोऽति(? लाति)जटाधरः ॥ ६५ ॥

---

१. C. दण्डपाशहरः. A.B. दण्डपादहरः. २. C. drops पद्माः. ३. C. तु. ४. V. शृङ्ग–. ५. C.V. चक्रवत्यन्त. ६. V. –लक्षिताः. ७. A.B.C. कृशः. V. शान्ततनु–.

सुमन्तुर्जैमिनिः पैलो [1]वैशम्पायन एव च ।
तस्य शिष्यास्तु कर्तव्याश्चत्वारः परिपार्श्वयोः ॥ ६६ ॥

[2]युधिष्ठिरोऽपि कर्तव्यो राजलक्षणलक्षितः ।
श्मश्रुहीनोऽतिपीनाङ्गः क्षाममध्यो वृकोदरः ॥ ६७ ॥

तिर्यक्प्रेक्षी [3]संहतभ्रुः कर्तव्यश्च तथा गदी ।
दूर्वाश्यामोऽर्जुनः कार्यः किरीटी लोहिताङ्गदः ॥ ६८ ॥

बाणचापधरः श्रीमान्सर्वाभरणभूषितः ।
नकुलः सहदेवश्च कार्यावश्विसमावुभौ ॥ ६९ ॥

खड्गचर्मधरौ कार्यौ न [4]त्वेवौषधिपाणिनौ ।
नीलनीरजपत्राभा कृष्णा कार्यातिरूपिणी ॥ ७० ॥

पद्मपत्राभगौरा तु कर्तव्या देवकी तथा ।
मधूकपुष्पसच्छाया यशोदापि तथा भवेत् ॥ ७१ ॥

एकानंशापि कर्तव्या देवी पद्मकरा तथा ।
कटिस्थवामहस्ता सा मध्यस्था रामकृष्णयोः ॥ ७२ ॥

सीरपाणिर्बलः कार्यो मुसली चैव कुण्डली ।
[5]श्वेतोऽतिनीलवसनो मदादञ्चितलोचनः ॥ ७३ ॥

कृष्णश्चक्रधरः कार्यो नीलोत्पलदलच्छविः ।
इन्दीवरकरा [6]कार्या तथा श्यामा च रुक्मिणी ॥ ७४ ॥

[7]तार्क्ष्यस्था सा च कर्तव्या सत्यभामा सुरूपिणी ।
[8]अन्याश्च देव्यः कर्तव्यास्सुरूपास्सुमनोहराः ॥ ७५ ॥

चापबाणधरः कार्यः प्रद्युम्नश्च सुदर्शनः ।
[9]राजन्दूर्वादलश्यामः श्वेतवासा मदोत्कटः ॥ ७६ ॥

---

१. B. वैशंपायनमेव च. २. V. युधिष्ठिरोऽथ. ३. C. संहित भ्रुः. ४. C. त्वैवोषधिपाणिनौ. ५. C. श्वेताति-. ६. C. करा तस्य श्यामा. ७. A.B.C. तार्क्ष्यस्थस्य. ८. C. अन्यश्च. ९. C. राजन्दूर्वालयश्यामः.

कर्तव्यश्चानिरुद्धोऽपि खड्गचर्मधरः प्रभुः ।
साम्बः कार्यो गदाहस्तः सुरूपश्च विशेषतः ॥ ७७ ॥

साम्बानिरुद्धौ कर्तव्यौ पद्माभौ रक्तवाससौ ।
[1]खड्गहस्ते च कर्तव्ये [2]स्त्रियावेषां तु पार्श्वयोः ॥ ७८ ॥

युयुधानस्तथा प्रांशुर्बाण[3]चापधरो भवेत् ।
वर्णेनोत्पलगर्भाभो दीर्घबाहुस्सुलोचनः ॥ ७९ ॥

प्रादुर्भावा देवदेवस्य विष्णोः
वक्तुं शक्या [4]विस्तरान्नैव राजन् ।
बुद्ध्या तेषां कर्मयोगं यथावत्
शास्त्रं दृष्ट्वा ते तु [5]कार्या बुधेन ॥ ८० ॥

इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे देवोद्यानरूपनिर्माणं नाम ॥ ८५ ॥

॥ प्रतिमालक्षणं समाप्तम् ॥

---

१. V. खड्गहस्तौ च कर्तव्यौ. २. V. स्त्रियो वेषौ. ३. B. चापधरं. ४. C. विस्तरानैव. ५. C. कार्यं.

## षडशीतितमोऽध्यायः ।

[1]ॐवज्र :— प्रोक्तं त्वया द्विजश्रेष्ठ प्रतिमालक्षणं शुभम् ।
[2]प्रासादलक्षणं सम्यक्कथयस्वामितद्युते ॥ १ ॥

मार्कण्डेय :— [3]हस्तप्रमाणतः प्रोक्तं प्रासादानां तु लक्षणम् ।
संस्थानतो विनिर्दिष्टं हस्तमानानुकीर्तनम् ॥ २ ॥

तदहं ते प्रवक्ष्यामि तन्मे निगदतः शृणु ।
प्रासादलक्षणं [4]श्रेष्ठं विजयारोग्यवर्धनम् ॥ ३ ॥

भागं तु जगती कार्या प्रासादो भागमेव च ।
कर्तव्या जगती मा(? चा)त्र [5]तुल्योच्छ्रायत्रिभूमिका ॥ ४ ॥

[6]उच्छ्रायार्धेन कर्तव्या ह्येकैका भूमिका ग(? य)तिः ।
भद्रपीठाकृतिः कार्या भूमिका भूमिका पुनः ॥ ५ ॥

प्रासादार्धं कटिः कार्या कूटमेवं तथैव च ।
कटिमूलाष्ट[7]भागेन [8]सोपानविस्त[रो] भवेत् ॥ ६ ॥

समसंख्यं तु कर्तव्यं सोपानं [9]भूमिकां प्रति ।
कूटः कार्यस्त्रिधोच्छेदः शुभामलकसारकः ॥ ७ ॥

चतुरस्रस्तथा राजन्क्रमोपचयसंयुतः ।
विच्छेदाश्चात्र [10]कर्तव्याः सिंहमालाविभूषिताः ॥ ८ ॥

द्वारोच्छ्रायश्च कर्तव्यो देवाश्चा(? वोचा)ष्टांशसंयुताः(? तः) ।
विस्तारं(? र)द्विगुणं चात्र द्वारोच्छ्रायंतु(? यात्तु) कारयेत् ॥ ९ ॥

द्वार(? रे) शोभावती कार्या चन्द्रशाला समुच्छ्रिता ।
कूटप्रथमविच्छेदे [11]शुभामलकसारके ॥ १० ॥

---

१. B.C.V. omit ॐ. २. B. प्रसादलक्षणं. ३. B. हस्तप्रमाणतं प्रोक्तं. V. हस्तप्रमाणन्तत्प्रोक्तं. ४. C. तत्र. ५. B.C.V. तल्पोच्छ्राय. ६. V.C. उच्छ्राया तेन. ७. A.B. –भागोन. ८. A.C. सोपानाविस्तरा. V. सोपानविस्तरा. ९. A.B.C. भुमिकं. १०. B. कर्तव्यः सिंहमालां. ११. C. शुभामलकसारकाः. V. शुभामलकसारकैः.

द्वारैश्चतुर्भिर्भग्नैस्तु न भग्नैर्वा महीपते ।
प्रासादमेतत्कर्तव्यं [1]कूटच्छेदे द्वये तथा ॥ ११ ॥

[2]विच्छिन्ने चन्द्रशालाभिश्च[3]तस्त्रभिर(? रे)वावृतम् ।
हिमवान्नाम विख्यातः प्रासादोऽयं मनोहरः ॥ १२ ॥

कूटच्छेदद्वयोपेतो माल्यवानभिधीयते ।
एककूटस्तथैवायं शृङ्गवानिति कीर्तितः ॥ १३ ॥

आगाराख्यो भवत्येष द्वारेणैकेन शृङ्गवान् ।
[4]आगारो भवनाख्यः स्यात्प्रासादस्तु द्विमेखलः ॥ १४ ॥

[5]गृहाख्यश्चैष निर्दिष्टः प्रासादश्चैकमेखलः ।
शृङ्गवान्निषधाख्यः स्यात्प्रासादस्तु द्विमेखलः ॥ १५ ॥

स एव नीलो भवति तथा [6]चैवैकमेखलः ।
माल्यवाञ्श्वेतसंज्ञः स्यात्प्रासादस्तु द्विमेखलः ॥ १६ ॥

विन्ध्यनामा भवत्येष तथा चैवैकमेखलः ।
[7]आगारभेदरहिताः सर्वे सर्वदिवौकसाम् ॥ १७ ॥

राजन्देवगृहाः कार्या यथेष्टाशामुखाः शुभाः ।
आगारभेदाः कर्तव्याः पूर्वपश्चिमदिङ्मुखाः ॥ १८ ॥

तेषां लिङ्गप्रतिष्ठैका शस्ता भवति पार्थिव ।
द्विमेखला ये कथितास्तथा चैवैकमेखलाः ॥ १९ ॥

[8]भागस्तेषां तु जगती भागस्तेषां तथा कटिः ।
भागमेकं तथा कार्यं कूटं प्राग्वन्महीपते ॥ २० ॥

[9]वलभीसंस्थितं रम्यं प्रासादं तु चतुर्दिशम् ।
विस्तारत्रिगुणायामं तथा चैवैकमेखलम् ॥ २१ ॥

---

१. A.B.V. कूटच्छेदद्वये. २. V. विच्छिन्न. ३. V.C. –श्चतस्त्रभिरिवावृतम्. ४. V. अगारो. ५. B.C.V. गृहाख्यश्चैव. ६. चैवैकमेखलाः. ७. V. अगारभेदरहितः सर्वैः. ८. C. भागास्तेषां. ९. C. वडभी.

पार्श्वयोर्वलभीपृष्ठे चन्द्रशालायुतं भवेत् ।
प्रासादे तत्र कर्तव्यास्त्रयश्चामर(? ल)सारकाः ॥ २२ ॥

[1]भागस्तु मेखला तत्र कटिभा(? र्भा)गस्तथा भवेत् ।
भाग एकस्तु वलभी तथा तत्र प्रकीर्तिता ॥ २३ ॥

प्रासादस्याष्टमो [2]भागः कर्तव्यो मेखलाग(? य)तिः ।
[3]कट्यष्टभागौ द्वौ हित्वा सोपानं विस्तराद्भवेत् ॥ २४ ॥

एकस्यां दिशि चैवात्र द्वारः [4]कार्यः समुच्छ्रयः ।
स्वेच्छाशाभिमुखः कार्यो [5]वलभीसंज्ञितस्त्वयम् ॥ २५ ॥

प्रासादेऽस्मिंस्तु कर्तव्या ब्रह्मविष्णुमहेश्वराः ।
[6]एकानंशाथ वा कार्या मध्यगा रामकृष्णयोः ॥ २६ ॥

गणेशस्कन्दयोर्मध्ये कर्तव्यो वा त्रिलोचनः ।
मध्येऽर्कचन्द्रयोः कार्य[7]स्त्वष्टा वापि जनार्दनः ॥ २७ ॥

एकैव दुर्गा कर्तव्या बहुबाहुविभूषिता ।
तत्र कार्याथ वा लक्ष्मीर्जगत्त्रितय[8]भूषणम् ॥ २८ ॥

विष्णो(? ष्णु)र्भोगशयः कार्यः प्रासादे तत्र वा नृप ।
चतुरात्माथ वा कार्यो देवदेवो जनार्दनः ॥ २९ ॥

शक्रकीनाशवरुणैः सहितो वा धनेश्वरः ।
[9]अन्ये देवा न कर्तव्या ये मया नानुकीर्तिताः ॥ ३० ॥

एकाशाभिमुखैर्द्वारैश्चतुर्भिः संयुतस्त्वयम् ।
ब्रह्मणा(? णो) वृद्धिदो नाम प्रासादः परिकीर्तितः ॥ ३१ ॥

[10]कर्तव्यस्तत्र लोकेशश्चतुरात्मा हरिस्त्वथ ।
विस्तार[11]त्रिगुणोच्छ्रायान्दा(? न्द्वा)रांस्तत्र निवेशयेत् ॥ ३२ ॥

---

१. A. शङ्खस्तु. २. C. भागस्कर्तव्या. ३. कष्ट्यष्टभागौ. ४. A.B. कार्या समोच्छ्रया. ५. A. वडवी. B.C. वडभी. ६. A. एकोनंशाथ. C. एकनंशथ. ७. A.B. –स्त्वथवापि ८. A. –भूषिणा. C.V. –भूषणा. ९. B.C. अन्यदेवा. १०. A.B. कर्तव्यास्तत्र लोकेशाश्च– ११. V. –त्रिगुणैश्छायां–. C. त्रिगुणैश्छायां–.

विस्तारत्रिगुणोच्छ्रायैर्द्वारैर्वा संयुतस्त्रिभिः ।
प्रासादोऽयं भवेद्राजंस्त्रिगुणो नामतः शुभः ॥ ३३ ॥

एकाशाभिमुखद्वारगर्भभित्ति[1]समन्वितः ।
ब्रह्मा विष्णुश्च रुद्रश्च प्रासादेऽत्र निवेशयेत् ॥ ३४ ॥

आदित्यविष्णुचन्द्रार्काः( ? श्च ) पृथग् भूपालसत्तम ।
गणेशरुद्रस्कन्दान् वा प्रासादेऽस्मिन्निवेशयेत् ॥ ३५ ॥

पार्श्वस्थवलभीहीनो वलभीसंज्ञि( ? स्थि )तो भवेत् ।
प्रासादः पार्श्वसंयुक्तः शिखरो नामतो नृप ॥ ३६ ॥

पार्श्वस्थवलभीहीनं वृत्तिदं कामदं भवेत् ।
पार्श्वस्थवलभीहीनं त्रिगुणं नृगृहं भवेत् ॥ ३७ ॥

कृतविस्तृतदिग्द्वारं प्रासादं वलभीगतम् ।
तुरगाख्यं विनिर्दिष्टं रेतोमन्दगृहं हितम् ॥ ३८ ॥

विनायकस्य तत्कार्यं भद्रकाल्यास्तथैव च ।
स्कन्दस्य कार्यं तद्राजंल्लक्ष्म्याः कार्यमथापि वा ॥ ३९ ॥

नागानां प्रमथानां वा नान्यस्य तु विधीयते ।
[2]वृत्तविस्तृतदिग्द्वारं तुरगं कुञ्जरं स्मृतम् ॥ ४० ॥

तुरगाभिह( ? हि )तानां च देवानां तत्प्रशस्यते ।
शक्रस्य च महाभाग नान्येषां तद्विधीयते ॥ ४१ ॥

यथेष्टसंख्यागर्भं तु [3]प्रासादं वलभीगतम् ।
यथेष्टनामविख्यातं [4]यथेष्टायामसंज्ञि( ? स्थि )तम् ॥ ४२ ॥

यथेष्टमानं द्वारं तद् द्वारेणैकेन संयुतम् ।
एकगर्भं तदेवोक्तं विशालं नाम पार्थिव ॥ ४३ ॥

यथेष्टे च विशाले च कर्तव्या [5]मातरो यथा ।
ग्रहा वा राजशार्दूल नक्षत्राण्यथ वा पुनः ॥ ४४ ॥

---

१. B. –समन्विताः. २. A. C. V. कृतविस्तृत–. ३. C. प्रासादो. ४. C. तथेष्टा–. ५. B. मारुतो तथा. V.C. मातरो नृप.

आदित्या वसवो रुद्रा विश्वेदेवा मरुद्गणाः ।
भृगवोऽङ्गिरसस्साध्या देवौ वा यदि वाश्विनौ ॥ ४५ ॥

अष्टौ वाथ दिशां पाला यदि वा भूतपञ्चकम् ।
एवं देवगणः कार्यो राजन् प्रासादयोस्तयोः ॥ ४६ ॥

आयता माल्यवत्पृष्ठे वलभी तु यदा भवेत् ।
कर्तव्यो भद्रकाल्यर्थे प्रासादो भद्रसंज्ञितः ॥ ४७ ॥

तिर्यक्स्था माल्यवत्पृष्ठे वलभी तु यदा भवेत् ।
[1]द्वारशालेति संप्रोक्तः प्रासादो विबुधप्रियः ॥ ४८ ॥

[2]सुभद्राख्यस्स निर्दिष्टः श्वेताख्यो भद्रवत्कृतः ।
कृतस्तु द्वारशालवत्सौम्यः स्याद् गन्धमादनः ॥ ४९ ॥

सौम्यः सुभद्रश्च तथा सर्वेषामेव शस्यते ।
[3]अष्टां( ? ष्टा )श्रि (? श्र )कूटं त्रिच्छेदं शुभामलकसारकम् ॥ ५० ॥

[4]अष्टां( ? ष्टा )श्रिजगतीबन्धं तथा चैवैकमेखलम् ।
अष्टगर्भाष्टदिग्द्वारं कमलं परिकीर्तितम् ॥ ५१ ॥

[5]अष्टौ तत्र तु कर्तव्या लोकपाला यथादिशम् ।
[6]अष्टौ वा तत्र कर्तव्या ग्रहाः केतुविवर्जिताः ॥ ५२ ॥

सूर्यः शुक्रः कुजो राहुस्सौर( ? रि )श्चन्द्रो बुधो गुरुः ।
क्रमेणानेन कर्तव्यं तत्र राजन् ग्रहाष्टकम् ॥ ५३ ॥

भूजलाकाशवह्नीन्दुदीक्षितार्कमरुत्तनुः ।
महादेवोऽथ वा कार्यस्तत्र देवो जगद्गुरुः ॥ ५४ ॥

अष्टात्मा वासुदेवो वा प्रभवे यापनेन च ।
प्रासादेऽस्मिंस्तु कर्तव्यो विधिनानेन वा हरिः ॥ ५५ ॥

चतुरात्मा तु कर्तव्यो दिग्द्वारेष्वत्र केशवः ।
अश्वशीर्षं वराहं च नरसिंहं त्रिविक्रमम् ॥ ५६ ॥

---

१. V.C. द्वारपालेति स प्रोक्तः. २. A.B.C. शुभद्राख्यस्तु निर्दिष्टः. ३. V.(f) अष्टांशकूटं. ४. V. अष्टांशजगती–. ५. V. omits अष्टौ...यथादिशम्. ६. V. अष्टौ तत्र तु कर्तव्या.

ईशानादिषु कोणेषु कार्या देवा नरोत्तम ।
उच्छ्रिता जगती कार्या भद्रपीठाकृतिं विना ॥ ५७ ॥

प्राग्भागवलभीहीनं तुरगं तत्र कारयेत् ।
प्रशस्तः सर्वदेवानां प्रासादस्त्वरुणोदयः ॥ ५८ ॥

[1]पूर्वापराशाभिमुखः कार्योऽयं नान्यदिङ्मुखः ।
अयमेवातिदीर्घस्तु प्रासादो [2]गृहसंज्ञितः ॥ ५९ ॥

प्रासादे त्वरुणे [3]लग्नावल्य(? ल्प) प्रासादकावुभौ ।
[4]याम्योत्तराशाभिमुखौ तद्वज्जगति बन्धनौ ॥ ६० ॥

सम्मुखौ तौ तु जगति [5]वलभीच्छंदकौ भवेत् ।
शुभा जालप्रतिच्छन्ना [6]सौभ(? म)द्वारमुखा तथा ॥ ६१ ॥

[7]तश्च[? च] स्याद्गरुडो नाम प्रासादः सुमनोहरः ।
आदित्यस्य प्रतिष्ठानं प्रासादे तत्र शस्यते ॥ ६२ ॥

दण्डपिङ्गलकौ कार्यौ तत्र प्रासादयोर्द्वयोः ।
तयोर्वा नृप [8]कर्तव्यौ रेतोमन्दयमावुभौ ॥ ६३ ॥

[9]कर्तव्यौ वा महाराज तथा केशवशङ्करौ ।
प्रासादे [10]गारुडे वापि कर्तव्यश्चन्द्रमा बुधैः ॥ ६४ ॥

पार्श्वप्रासादयोस्तस्य कर्तव्यौ [11]शिशिराम्बुपौ ।
प्रासादे [12]गारुडे वापि कामदेवं तु कारयेत् ॥ ६५ ॥

पार्श्वप्रासादयोस्तस्य [13]कर्तव्यौ वनमालिनौ ।
प्रासादे [14]गारुडे वापि कर्तव्यो देवराड् बुधैः ॥ ६६ ॥

पार्श्वप्रासादयोस्तस्य कर्तव्यौ वनमालिनौ ।
प्रासादे गारुडे वापि कर्तव्यश्च तथा यमः ॥ ६७ ॥

---

१. B. पूर्वापराश्चाभिमुखः. २. B. गुरुसंज्ञितः. V. गूह–. ३. A.B. लग्ने स्वल्प. ४. C. यस्योत्तराशाभिमुखौ. ५. A.B. वलभीच्छादिका. ६. A. सागरंद्वारवत्तथा. B.C. सौ...रंद्वारवत्तथा ७. B.V. तत्र स्याद्गरुडो. ८. A. कर्तव्यो. B. कर्तव्या. ९. C. कर्तव्या. १०. B.C.V. गरुडे. ११. C. शिशिराम्बुधौ. १२. C. गरुडो. १३. C. कर्तव्या. १४. B.C. गरुडे.

पार्श्वप्रासादयोस्तस्य [1]मृत्युकालौ निवेशयेत् ।
प्रासादे गारुडे वापि कर्तव्यो वरुणो भवेत् ॥ ६८ ॥

पार्श्वप्रासादयोः कार्या गङ्गा कालिन्दिरेव च ।
प्रासादे गारुडे वापि धनाध्यक्षं तु कारयेत् ॥ ६९ ॥

पार्श्वप्रासादयोस्तस्य शङ्खपद्मौ निवेशयेत् ।
प्रासादे गारुडे वापि ब्रह्माणं विनिवेशयेत् ॥ ७० ॥

पार्श्वप्रासादयोस्तस्य कर्तव्यौ केशवेश्वरौ ।
प्रासादे गारुडे वापि महादेवं निवेशयेत् ॥ ७१ ॥

पार्श्वप्रासादयोस्तस्य कार्यौ [2]विष्णुपितामहौ ।
[3]विनायककुमारौ वा कर्तव्यौ यदुनंदन ॥ ७२ ॥

वीरभद्रश्च नन्दी च कर्तव्यौ वा मनोहरौ ।
प्रासादे गारुडे वापि गरुडं विनिवेशयेत् ॥ ७३ ॥

पार्श्वप्रासादयोः [4]कार्यौ कश्यपो विनता शुभौ ।
प्रासादे गारुडे वापि वासुदेवं निवेशयेत् ॥ ७४ ॥

पार्श्वप्रासादयोस्तस्य कार्यौ रुद्रपितामहौ ।
चन्द्रार्कौ वा महाराज यदि वा वरुणानिलौ ॥ ७५ ॥

लक्ष्मीं च (?श्च) कालरात्रिंच(?श्च) यदि वाप्यनलानिलौ ।
तार्क्ष्यानन्तौ महाराज यदि वा गरुडारुणौ ॥ ७६ ॥

प्रासादे गारुडे वापि धर्मः कार्यो महीपते ।
पार्श्वप्रासादयोस्तस्य कार्योऽर्थः काम एव च ॥ ७७ ॥

लिङ्गाकारं तु कर्तव्यं देववेश्म त्रिमेखलम् ।
तस्य नाम भवेल्लोके शर्वेति नरपुङ्गव ॥ ७८ ॥

द्विमेखलस्य तस्यैव त्रैलोक्यमिति निर्दिशेत् ।
स एव लिङ्गनामास्यात् प्रासादस्त्वेकमेखलः ॥ ७९ ॥

---

१. A. मृत्युःकालो. २. V. (f.) पितृपितामहौ. ३. V.C. विनायकः कुमारो वा कर्तव्यो. ४. V.C. कार्यो कश्यपो विनता तथा.

कूटवद्वलभीयुक्तं सर्वकीटं प्रकीर्तितम् ।
ब्रह्माण्डमिति विज्ञेयं त्रैलोक्यं वलभीयुतम् ॥ ८० ॥

लिङ्गाख्यं वलभीयुक्तं सारमित्यभिधीयते ।
शर्वाद्याः षडिमे कार्याः पूर्वपश्चिमदिङ्मुखाः ॥ ८१ ॥

लिङ्गसंस्थापनं कार्यं नित्यमेतेषु पण्डितैः ।
प्रासादं वलभीसंज्ञं चतुरस्रं विमेखलम् ॥ ८२ ॥

चतुरस्रमिति ख्यातं कार्यं तत्सुमनोहरम् ।
विद्वारं स्तम्भसंयुक्तं पुरस्ताद्भित्तिवर्जितम् ॥ ८३ ॥

[1]शक्रं देवगणैर्युक्तं यमं वा पितृसंयुतम् ।
मातृयुक्तं महाकालं नृसिंहमथ वा पुनः ॥ ८४ ॥

दुर्गां देवीं तथा राजन् नक्षत्रं शशिनं तथा ।
ग्रहैर्दिवाकरं युक्तं नागैर्वा नृप वासुकिम् ॥ ८५ ॥

[2]समेखलं तन्निर्दिष्टं तथा नृप समेखलम् ।
वि(? द्वि)मेखलं तत्कथितं [3]राजद्वारं द्विमेखलम् ॥ ८६ ॥

त्रिमेखलं तत्कथितं मेखलाढ्यं महीपते ।
सर्वेष्वेतेषु कर्तव्याः सभाख्याः सर्वकीर्तिताः ॥ ८७ ॥

अन्येऽप्यनुक्ताः कर्तव्याः सभाख्या नरपुङ्गव ।
चतुरस्रादयस्त्वेते द्वारवन्तो महीपते ॥ ८८ ॥

[4]धिष्ण्यशल्यबुधेन्द्राख्या नामतः [5]परिकीर्तिताः ।
[6]यथेष्टं नृप देवानां कार्यास्ते भूतिमिच्छू(? च्छ)ता ॥ ८९ ॥

भित्तिहीना[7]स्तथैवैते जालवन्तश्चतुर्दिशम् ।
चन्द्रमेघाम्बुदाकाशनामानः परिकीर्तिताः ॥ ९० ॥

---

१. V. शाक्रं. २. V. सुमेखलं. ३. V. राजन्द्वारं. ४. V. (f.) धिष्ण्यशिल्पविदै-द्वर्याख्या. ५. B. परिकीर्तितः. ६. V. omits यथेष्टं... परिकीर्तिताः. ७. B. –स्तथैवेते. C. –स्तथैर्वेते.

चतुरस्रो [1]गु( ? गृ )हाकारः प्रासादस्त्वेकभूमिकः ।
गृह इत्येव विख्यातो लक्ष्मीं तत्र निवेशयेत् ॥ ९१ ॥

स एव कार्यो देवानां [2]यथेष्टं बहुभूमिकः ।
बहुभूमिकसंज्ञस्तु यथेष्टं नृपपुङ्गव ॥ ९२ ॥

भूमिकाद्वादशोपेतः [3]षडस्रो मेरुरुच्यते ।
चतुर्द्वारस्तु कर्तव्यः सर्वेषां त्रिदिवौकसाम् ॥ ९३ ॥

शुक्तिमान्नामतः [4]सर्वः स चैकादशभूमिकः ।
मन्दरो नामतः प्रोक्तः [5]स तथा दशभूमिकः ॥ ९४ ॥

नवभिर्भूमिकाभिस्तु पारियात्रः प्रकीर्तितः ।
अलको नाम विख्यातस्तथा चैवाष्टभूमिकः ॥ ९५ ॥

विमानः सप्तभौमः स्यात् षड्भौमो नन्दनः स्मृतः ।
पञ्चतः( ? कः ) पञ्चभौमः स्याच्चतुर्भौमश्चतुष्ककः ॥ ९६ ॥

त्रिभूमिस्तु त्रिभूमिस्स्याद् द्विभूम्याख्यो द्विभूमिकः ।
एकभौमस्तु निर्दिष्टस्तथा चैवैकभूमिकः ॥ ९७ ॥

वृत्तः प्रोक्तः समुद्रा( ? द्गा )ख्यस्तथा वृत्तैकमेखलः ।
मेखला चतुरस्रा तु भद्रपीठाकृतिर्भवेत् ॥ ९८ ॥

कृतस्त्वष्टपरिच्छेदैः सर्वस्वामलसारकैः ।
वृत्त एव तथा नन्दी प्रासादः परिकीर्तितः ॥ ९९ ॥

[6]दीर्घराज[7]गृहाकारो गृहा( ? ह )राजः प्रकीर्तितः ।
[8]भद्रकाल्यास्स कर्तव्यो विष्णो( ? ष्णु )र्भोग( ? गि )शयस्य वा ॥१००॥

एकशृङ्गस्तथा वृत्तो वृषाख्यः स्याद् द्विमेखलः ।
हंसाकारस्तथा हंसो [9]घटाकारस्तथा घटः ॥ १०१ ॥

---

१. A.B.V. गृहः कार्यः. २. V. यथेष्टो. ३. C. षडस्रं. ४. A.B. सर्वे. ५. V. स तद्वादशभूमिकः. ६. B. omits दीर्घराज... प्रकीर्तितः. ७. V.C. गुहाकारो गुहाराजः. ८. V.B. –स्तथा कार्या. V. ( f. ) भद्राकारः स कर्तव्यो. ९. C. घटाकारो घटस्मृतः

[1]सिंहाकारस्तथा सिंहो मण्डपो मण्डपाकृतिः ।
द्वादशास्रिः षडस्रिस्तु तथाष्टास्रिर्महीपते ॥ १०२ ॥

[2]प्रासादास्तु मया प्रोक्तास्तथा प्रोक्ताश्रय(? श्रिक)स्थितिः ।
पञ्चभिः शिखरैर्जुष्टश्चतुर्भिरपि मण्डपैः ॥ १०३ ॥

द्वारैश्चतुर्भिः संयुक्तः [3]कैलासः परिकीर्तितः ।
त्रिमेखलस्त्रिशृङ्गश्च त्रिकूटो नाम विश्रुतः ॥ १०४ ॥

शृङ्गेणैकेन संयुक्तश्चतुर्भिरपि मण्डपैः ।
चतुर्द्वारः स्मृतस्सौम्यः प्रासादः सुमनोहरः ॥ १०५ ॥

प्राकारे [4]जानुदघ्नाख्या यस्यैका जगती भवेत् ।
[5]प्रासादत्र्यंशतुल्या तु त्र्यंशतुल्या तथा कटिः ॥ १०६ ॥

शिखरः कुहरोपेतो नानारूपकभूषितः ।
एकमण्डपसंयुक्तस्तादृशैः सुरमन्दिरैः ॥ १०७ ॥

स्वल्पैर्विदिक्षु संयुक्त[6]श्चतुर्भिर्भुवि मण्डपैः ।
सोपानमूले संयुक्तो द्वाभ्यामेव नराधिप ॥ १०८ ॥

प्रासादो राजराजाख्यो मुख्योऽयं परिकीर्तितः ।
प्रासादे राजराजाख्ये चत्वारो यदि [7]मण्डपाः ॥ १०९ ॥

सर्वे शिखरहीनाः [8]स्युस्तस्य [9]सोपानमूलगाः ।
अष्टौ देवगृहाणि स्युः स भवेद्धरणीधरः ॥ ११० ॥

मण्डपैः शिखरोपेतैर्विमानाख्यः स वै भवेत् ।
विदिक्षु यत्र प्रासादाश्चत्वारो मण्डपान्तरे ॥ १११ ॥

मण्डपाश्शिखरोपेता [10]मध्यमाञ्जलि(? मञ्जरी)संयुताः ।
नवभिः शिखरैरेष प्रासादः सुरराट्(? ड्) भवेत् ॥ ११२ ॥

---

१. V.B. सिंहाकारः स्मृतः सिंहो. २. A B. प्रासादाः स्वमतः प्रोक्ता–. ३ V. कैलाशः ४. V.C. जानुदघ्ना स्याद्यस्यैका. ५. V. प्रासादतुल्या त्र्यंशा तु. ६. A B. –श्चतुर्भिस्तु विमण्डपैः. ७. B. मंडपः. ८. A.B.V. स्युस्तथा ९. A B. चोपानमूलगाः. १०. A.B. मध्यमंजिरि. V. मध्यमंजारि.

बहुवातायनोपेतो बहुजालगवाक्षकः ।
चतुरस्रोऽथ वा वृत्तस्तथैवोच्छ्रितमेखलः ॥ ११३ ॥

आनन्दनामा भवति प्रासादः सर्वतोमुखः ।
मेखलापृष्ठभूभागात्क्रमेणामलसारकैः ॥ ११४ ॥

अविच्छिन्नैः क्रमाद् द्वारैर्बहुभिर्यो विनिर्मितः ।
न मुण्डो न च शूलाग्रः प्रासादः सुसमः स्मृतः ॥ ११५ ॥

[1]मुण्डमण्डलसंयुक्तः स एवोक्तः प्रभञ्जनः ।
चतुर्भिर्मण्डपैर्युक्तो विश्वकर्मेति कीर्त्यते ॥ ११६ ॥

मण्डपैः सुसमाकारैश्चतुर्भिरपि संयुतः ।
[2]महासुमन इत्येष प्रासादः परिकीर्तितः ॥ ११७ ॥

[3]छत्राकारः स्मृत[4]श्छत्रो मृदङ्गः स्यात्तदाकृतिः ।
विपरीतो मृदङ्गस्तु वज्र इत्यभिधीयते ॥ ११८ ॥

एका कटिर्भवेद्यस्य तथैका जगती नृप ।
[4]शिखराः श्रेणिगाः पञ्च [5]द्वाराः पञ्च तथा नृप ॥ ११९ ॥

प्रासादो लोकपालाख्यो लोकपालेषु शस्यते ।
[6]शंसन्त्यथान्यं प्रासादं महाभूतगणस्य च ॥ १२० ॥

प्रासादो वर्तुलकटिस्तथा वर्तुलमेखलः ।
अष्टास्रिः शिखरोपेतो [7]द्वाराष्टकविभूषितः ॥ १२१ ॥

दिग्बन्ध इति विख्यातः प्रासादः सर्वदैवतः ।
[8]पश्चाद्गमनि(? णि)कोपेतो जगतीमान[9]मण्डपः ॥ १२२ ॥

प्रासादस्त्वेकशिखरः सामान्यः परिकीर्तितः ।
मण्डपे [10]जालकोपेते पश्चाद्भागे गुहा भवेत् ॥ १२३ ॥

---

१. A.B. मण्डमण्डलसंयुक्तः. २. B. महासम वा इत्येष. ३. A.B.V. भद्राकारः. ४. C. शिखराग्रेणगास्पञ्च–. ५. A.B. –द्वार–. ६. A.B.C. शस्यन्यथायं प्रासादो. ७. V. द्वाराष्टक-भूषितः. ८. V.C. पश्चाद्गविटकोपेतो ९. V. मण्डलः. १०. B. जालकोपेत.

विमेखलोऽयं प्रासादः सुगुहः परिकीर्तितः ।
स एव त्रिगुणोपेतस्त्रिगुणः परिकीर्तितः ॥ १२४ ॥

[1]हिमवान् बहुभिस्स्तम्भैर्युतो भवति नन्दकः ।
स्तम्भवान् वलभीयुक्तः प्रासादो भित्तिवर्जितः ॥ १२५ ॥

आकाशनी सा भवति तत्राकाशं प्रकल्पयेत् ।
षोडश(? शा)स्रिस्तु कथितः प्रासादस्तावदस्रिकः ॥ १२६ ॥

प्रासादः शङ्खसंज्ञः स्याच्छङ्खाकारः सुशोभनः ।
पद्माभशिखरोपेतो वैजयन्तो महीपते ॥ १२७ ॥

[2]अनस्रिः शिखरोपेतो भवेदम्बुदसंज्ञितः ।
शिखरैः कुहरोपेतैर्भवेन्मङ्गलसंज्ञितः ॥ १२८ ॥

प्रासादानां शतं चैतत् समासात् कथितं मया ।
यथेच्छाशामुखाः कार्या येषां [3]दिङ् न प्रयोजिताः(? ता) ॥ १२९ ॥

सर्वे देवगणाः कार्या येषां देवो न [4]कीर्तितः ।
विष्णोर्देवस्य [5]कर्तव्यः सर्व एव विशेषतः ॥ १३० ॥

अन्यमिश्रौ न कर्तव्यौ चन्द्रार्कावेकवेश्मगौ ।
[6]सूर्येण संयुतश्चन्द्रः क्षीणः [7]कर्तुः क्षयावहः ॥ १३१ ॥

परस्पराशाभिमुखौ कर्तव्यौ सूर्यरात्रिपौ ।
पूर्वापराशाभिमुखौ न तु याम्योत्तरामुखौ ॥ १३२ ॥

पूर्वापराशाभिमुखौ यदा स्यातां तदा शशी ।
पूज्यो भवति धर्मज्ञ कर्तुः कल्याणकारकः ॥ १३३ ॥

नैकवेश्मगतौ कार्यौ ग्रहौ स्कन्दविनायकौ ।
न नागगरुडौ कार्यौ न चान्तकमहेश्वरौ ॥ १३४ ॥

---

१. A.B. हिमवान्बाह्यतस्तंभैर्युतो. २. V.C. अनास्रिः ३. A.B. दिङ्नाम योजिताः. C. दिङ् स योजितः. ४. C. कीर्तिताः. ५. A.B. कर्तव्याः ६. B. सूत्रेण. ७. V. केतुः.

महाकालनृसिंहौ च रक्तां शुष्कां [1]तथैव च ।
ब्रह्मरुद्रकृतान्तैस्तु भद्रकाल्याथ वा सह ॥ १३५ ॥

कामदेवो न कर्तव्यस्तथैव वरुणानलौ ।
देवस्यैकस्य नो [2]कार्ये द्वे तथार्चे तथा नृप ॥ १३६ ॥

प्रादुर्भावगते कार्ये ते च विष्णोर्महात्मनः ।
येषामपि च देवानां द्वन्द्वयोगो विगर्हितः ॥ १३७ ॥

तेषामप्यन्यसहितः प्रशस्तो नृपसत्तम ।
[3]ग्रहपङ्क्त्या तु सहितौ कर्तव्यौ सूर्यरात्रिपौ ॥ १३८ ॥

महादेवसमीपस्थौ तथा स्कन्दविनायकौ ।
वासुदेवसमीपस्थौ शेषतार्क्ष्यौ तथैव च ॥ १३९ ॥

एवमन्य[4]समेतानां यथायोगैः पृथग्विधैः ।
कर्तव्यस्तु विरुद्धानां देवानां चापि सङ्गमः ॥ १४० ॥

प्रासादलक्षणमिदं कथितं समासाद्
आलोक्य पूर्वचरितं हि पितामहोक्तम् ।
शास्त्रं हिताय नरसत्तम मानुषाणां
धार्यं त्वया तदतियत्नपरेण नित्यम् ॥ १४१ ॥

इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे प्रासादलक्षणं नाम ॥ ८६ ॥

---

१. C. तथा नृप. २. A.B. कार्यौ. ३. V. ग्रहसंख्याऽसहितौ. ४. A.B. –समीतानां.

## सप्ताशीतितमोऽध्यायः ।

मार्कण्डेय :---

प्रासादमथ वक्ष्यामि सर्वतोभद्रसंज्ञितम् ।
चतुरात्मा हरिर्यत्र कर्तव्यो जगतीपते ॥ १ ॥

एक( ? का )त्र जगती कार्या चतुरस्रा मनोरमा ।
तस्यां गर्भगृहाः कार्या विंशतिश्चतुरुत्तराः ॥ २ ॥

[1]एषां पृष्ठे जगत्यूर्ध्वं [2]प्राकारं विनिवेशयेत् ।
सर्वत्र मेखलाकारं तत्रापि विनिवेशयेत् ॥ ३ ॥

प्रासादका महाराज चतुर्विंशतिरेव [3]च ।
चतुष्षु दिक्षु सोपानं मेखलायां [4]निवेशयेत् ॥ ४ ॥

सोपानस्त्र्यंशविस्तारो मेखलायाः प्रकीर्तितः ।
सोपानोभयतो राजन् प्रासादास्ते त्रयस्त्रयः ॥ ५ ॥

भवन्ति मेखलापृष्ठे तदादौ गर्भमन्दिरम् ।
विमेखलं तु सामान्यं मध्ये तेषां त्रिमण्डपम् ॥ ६ ॥

हिमवत्संज्ञितौ कार्यौ तस्य पार्श्वे विमेखलौ ।
सोपानमूले प्रासादे द्वे द्वे कार्ये मनोरमे ॥ ७ ॥

[5]दंष्ट्रे देवकुलाख्ये ते सामान्याख्ये विमण्डपे ।
तथैव जगतीपृष्ठे कोणे देवकुलं न्यसेत् ॥ ८ ॥

प्रासादो मध्यमश्चात्र कर्तव्यो मण्डपान्वितः ।
चत्वारो मण्डपाश्चात्र कार्याः शिखरसंज्ञि( ? स्थि )ताः ॥ ९ ॥

मध्यप्रासादकोणेषु तथा मण्डपसन्धिषु ।
द्विद्विगर्भ[6]गृहान् रम्यान् प्रासादान् विनिवेशयेत् ॥ १० ॥

---

१. V. येषां. २. B. प्रकारं. ३. C. तु. ४. A. निदेशयेत्. ५. A.B.C. दंष्ट्र. ६. V. –गुहा–.

एकैकं मण्डपं चात्र द्वारत्रितयभूषितम् ।
चतुर्थे च तथा द्वारे देवगर्भगृहं भवेत् ॥ ११ ॥

मण्डपस्य च ये द्वाराः कार्यास्ते स्तम्भभूषिताः ।
प्रासादस्यास्य शिखरा [1]भवन्त्येवं नवैव तु ॥ १२ ॥

उच्छ्रितं नवमं शृङ्गं तुल्यं स्याच्छिखराष्टकम् ।
मध्यगं शिखरं तत्र कार्यं शिखरवर्जितम् ॥ १३ ॥

रूपकैर्विविधैर्युक्तं न [2]मुण्डं न च शूलवत् ।
अष्टौ तु शिखरास्तत्र कर्तव्याः कुहरान्विताः ॥ १४ ॥

जालागवाक्षकोपेतैः कुहरैर्नृप भूषिताः ।
[3]सर्वत्र शिखराः कार्याः शुभामलकसारकाः ॥ १५ ॥

सचक्राः सपताकाश्च सध्वजाश्च नराधिप ।
खेऽभिपक्क इवाभाति प्रासादोऽयं समुच्छ्रितः ॥ १६ ॥

क्रमतो देवतान्यासं प्रासादेऽस्मिन्निबोध मे ।
वासुदेवोऽत्र कर्तव्यः पूर्वाशाभिमुखो नृप ॥ १७ ॥

पश्चिमाशामुखो वापि न [4]कार्यश्चान्यदिङ्मुखः ।
वासुदेवदिशं चात्र पूर्वां राजन् प्रकल्पयेत् ॥ १८ ॥

तस्याश्चैवानुसारेण दिशः स्यात् परिकल्पना ।
दक्षिणाशामुखः कार्यो देवः सङ्कर्षणः प्रभुः ॥ १९ ॥

पश्चिमाशामुखः कार्यः प्रद्युम्नश्चाप्यनन्तरम् ।
उत्तराशामुखो राजन्ननिरुद्धो विधीयते ॥ २० ॥

दिग्गर्भा ये मया प्रोक्ता गृहा [5]मण्डपसंधिगाः ।
प्राङ् मण्डपाद्दक्षिणतो लक्ष्मीं तत्र तु कारयेत् ॥ २१ ॥

दक्षिणाद्वामतो निद्रां कालरात्रीं तु दक्षिणे ।
पश्चिमाद्वामतस्सिद्धिं रतिं तस्यैव दक्षिणे ॥ २२ ॥

---

१. V.C. भवन्त्येव. २. V.B. मण्डं. ३. B. सर्वत्रिशिखराः. ४. B. कार्य–. ५. V. मण्डल–.

उत्तराद्वामतः कीर्तिं दक्षिणेन सरस्वतीम् ।
पूर्वस्यां वामभागे तु तथा [1]पुष्टिं निवेशयेत् ॥ २३ ॥

ऐशान्यादिक्रमाः कार्याः कोणप्रासादगास्त्विमे ।
अश्वशीर्षं वराहं च नरसिंहं त्रिविक्रमम् ॥ २४ ॥

प्रासादकेषु कर्तव्या मेखला बन्धकेषु च ।
चतुर्विंशतिरित्येते विबुधा [2]विबुधोत्तम ॥ २५ ॥

तार्क्ष्यं शङ्खं तथा पद्मं चक्रं लाङ्गलमेव च ।
मुसलं चाप्यनन्तं च गदां तालं तथैव च ॥ २६ ॥

त्रिशूलं च तथा शार्ङ्गं शरं मकरमेव च ।
परशुं मुद्गरं चैव चर्मपाशं च पार्थिव ॥ २७ ॥

पट्टिशं नन्दकं चैव शक्तिं [3]मुष्टिं तथैव च ।
वज्रं च कौस्तुभं चैव वनमालां च यादव ॥ २८ ॥

दंप्ट्रा( ? ष्ट्रा )[4]देवगृहाणां मे त्वं विन्यासमिदं शृणु ।
इन्द्राग्नी पूर्वतः कार्यौ दक्षिणेन तथा नृप ॥ २९ ॥

यमश्च निर्ऋतिश्चैव पश्चिमे वरुणानिलौ ।
उत्तरेण च कर्तव्यौ धनेश्वरमहेश्वरौ ॥ ३० ॥

ग्रहाष्टकं वा कर्तव्यं दंप्ट्रा[5]देवगृहेषु च ।
आदित्यशुक्रौ पूर्वेण याम्येन च कुजासुरौ ॥ ३१ ॥

शनैश्चरशशाङ्कौ च तथा पश्चिमतो नृप ।
उत्तरेण च [6]कर्तव्यौ चन्द्रपुत्रबृहस्पती ॥ ३२ ॥

दंष्ट्रादेवगृहावत्र वासुदेवस्य यावुभौ ।
वासुदेवप्रतिहारौ तयोर्वा कारयेन्नृप ॥ ३३ ॥

सुभद्रवसुभद्राख्यौ त्रैलोक्यस्येश्वरावुभौ ।
आषाढयज्ञ[7]ताराख्यौ कार्यौ सङ्कर्षणस्य तु ॥ ३४ ॥

---

१. C. मुष्टि. २. C. विबुधोपम. ३. C. मृश्यं. V. मृष्टिं. ४. A.B.–देवग्रहाणां. ५. A. देवग्रहेषु च. C. देवगृहेष्वथ. ६. A. कर्तव्यो. ७. A.B.C.V. ताताख्यौ.

जयं च विजयं चैव प्रद्युम्नस्य तु कारयेत् ।
आमोदं च प्रमोदं च अनिरुद्धस्य पार्थिव ॥ ३५ ॥

प्रागुक्तं देवतान्यासादृष्ट्वा देवकुलेष्वथ ।
प्रतीहारप्रतिष्ठानं शस्यते बहुभिर्गुणैः ॥ ३६ ॥

त एव ज्ञेया दिक्पालास्त एव च तथा ग्रहाः ।
[1]एतत्त्वं जगतीबन्धे शृणु देवान् यथाक्रमम् ॥ ३७ ॥

गायत्रीं चतुरो वेदान् वैष्णवीं चापराजिताम् ।
मृत्युं कालं यमं दण्डं कवचं शरमेव च ॥ ३८ ॥

[2]साङ्ख्यं योगं [3]पञ्चरात्रं ज्ञानं पाशुपतं तथा ।
व्यासवाल्मीकिमार्कण्डं महाभूताननन्तरम् ॥ ३९ ॥

एवंविधेऽत्र प्रासादे [4]विस्तीर्णमजिरं भवेत् ।
तोयैरकृत्रिमैर्दिव्यैस्सुबन्धैरुपशोभितम् ॥ ४० ॥

द्वारपालाश्चतस्रस्तु ततः कार्या विजानता ।
प्रासादो द्वार[5]शालाख्यस्सम[6]रूपो मनोहरः ॥ ४१ ॥

श्रेणीगताश्च [7]प्राकारे कार्या गर्भगृहाः शुभाः ।
[8]प्रादुर्भावान्न्यसेत्तेषु [9]विष्णोरमिततेजसः ॥ ४२ ॥

अथ वा पार्थिवश्रेष्ठ सर्वान् देवगणान् क्रमात् ।
प्रासादमेतद्विधिवद्यः करोति महीपते ॥ ४३ ॥

सर्वेषां देवतानां तु नित्यं विहितपूजनम् ।
कल्पं(? ल्पे) त्रेतायुगस्यादौ चक्रवर्त्यभिधीयते ॥ ४४ ॥

[10]परिवेशस्तथा कार्यः स्वर्गे वसति [11]कामतः ।
[12]ततस्सायुज्यतामेति देवदेवस्य [13]चक्रिणः ॥ ४५ ॥

---

१. A. एतत्तु. २. C. साङ्ख्ययोगे. ३. B. पाञ्चरात्रं. ४. C. विस्तीर्णमाजिरं. ५. A B. –मालाख्य–. ६. A. –रूप मनोहराः. ७. C.V. प्राकाराः. ८. A.C.V. प्रादुर्भावं न्यसेत्तेषु. ९. A. विष्णुरमिततेजसः. १०. A.B. परिवेशं तथा. ११. A.B. कामदः. १२. V.C. ततस्सायोजितामेति. १३. C. शार्ङ्गिणः.

फलं त्रैलोक्यदानस्य ध्रुवमाप्नोति मानवः ।
प्रासादेऽस्मिन् सकृत् कृत्वा सर्वेषामेव पूजनम् ॥ ४६ ॥

गन्धमाल्यनमस्कारधूपदीपान्नसम्पदा ।
यथेष्टं काममाप्नोति नात्र कार्या विचारणा ॥ ४७ ॥

सचक्रः सपताकोऽयं प्रासादोऽतिमनोहरः ।
यावद्दर्शनमायाति तावन्नश्य[1]न्त्युपद्रवाः ॥ ४८ ॥

व्याधिश्चैवापमृत्युश्च ईतयश्च तथा नृप ।
[2]नाशमायान्त्यसन्देहं तत्प्रविष्टस्य [3]मानद ॥ ४९ ॥

नाकालमृत्यवो [4]राजन् योगिन्यो यक्षराक्षसाः ।
प्रेता विनायका वापि [5]प्रभवन्त्यपि कस्यचित् ॥ ५० ॥

अत्र सात्त्वतमुख्या ये [6]सायुज्यं यान्ति ते ध्रुवम् ।
ये [7]देवग्रहगाश्चात्र दासीदासगणाश्च ये ॥ ५१ ॥

सर्वे ते स्वर्गमायान्ति यावदिन्द्राश्चतुर्दश ।
यस्य राज्ञस्तु विषये प्रासादोऽयं भवत्यपि ॥ ५२ ॥

स चापि शक्रलोकस्थश्चिरं मोदति पार्थिवः ।
तस्मिन्पताकां यो दद्यात्तया पापं विधूयते ॥ ५३ ॥

ईतयश्च शमं यान्ति पुण्यमाप्नोत्यनुत्तमम् ।
कृत्वा सितं तं प्रासादं [8]चक्रवर्त्यभिजायते ॥ ५४ ॥

एवं विधानविहिते मया देवा यथोदिताः ।
सर्वे सन्निहितास्तत्र भवन्ति वसुधाधिप ॥ ५५ ॥

तत्र यत् सलिलं [9]तिष्ठेत्तत्तीर्थं सततं भवेत् ।
तत्र यात्रा[10]विधाने तु सर्वे देवाः सवासवाः ॥ ५६ ॥

---

१. A.B.C. –न्त्युपद्रवः. २. A. नाशामायांति संदेहं. ३. V. यादव. ४. A. राजन्दाक्षिण्यो यक्षराक्षसा. ५. A.B.C. प्रभवंत्यत्र. ६. C. सातत्व. ७. A.B. देव गृहगाश्चात्र. C. ये च देवलगाश्चात्र. ८. V. चक्रवर्त्यभिधीयते. ९. A.B.तिष्ठन्सनीतिस्सततं. १०. C. विधानेन.

ऋषयश्च महाभागास्त्रैकाल्यामल[1]दर्शिनः ।
राजर्षयः पुराणाश्च सर्वैः समुदिता [2]गुणैः ॥ ५७ ॥

दिविष्ठाः सुमहात्मानः शक्रतुल्यपराक्रमाः ।
गन्धर्वाप्सरसश्चैव शुभा भूतगणाश्च ये ॥ ५८ ॥

सशरीराः समायान्ति [3]द्रष्टुं देवमहोत्सवम् ।
तत्रोत्सवं नरः पश्यन् ध्रुवं कल्याणभाग् भवेत् ॥ ५९ ॥

तत्र हिंसा न कर्तव्या देवद्रव्यस्य कर्हिचित् ।
राजा वा तन्नियुक्तो वा तत्रास्याधिकृतस्तु यः ॥ ६० ॥

स याति नरकं घोरं सपुत्रपशुबान्धवः ।
अस्मिंल्लोके ध्रुवं तस्य [4]स्थाननाशो भविष्यति ॥ ६१ ॥

ये तत्र भक्ता मनुजास्सपशुद्रव्यसञ्चयाः ।
नित्यं वृद्धिमुपायान्ति देवदेवप्रसादतः ॥ ६२ ॥

द्रष्टव्यमेत[5]त्रिदशेशवेश्म कृतं यदन्येन नरेन्द्रचन्द्र ।
दृष्ट्वा हि [6]पापात् सकलाद् मनुष्यो विमुच्यते पुण्यमवाप्नुयाच्च ॥ ६३ ।

इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे सर्वत्र( ? तो )भद्रप्रासादलक्षणं नाम ॥ ८७ ॥

---

१. B. –दर्शिनाः. २. V. गणैः. ३. V.C. इष्टं. ४. A.B.C. स्थाननाशं. ५. V. –त्रिदिवेशवेश्म. ६. V. पापैः सकलैर्मनुष्यो.

## अष्टाशीतितमोऽध्यायः ।

मार्कण्डेय :—

सामान्यमथ वक्ष्यामि प्रासादानां तु लक्षणम् ।
चतुष्पष्टि[1]पदं कार्यं देवतायतनं सदा ॥ १ ॥

द्वारं च मध्यमं तस्य समदिक्स्थं प्रशस्यते ।
द्वारं विस्तरतः कार्यं भूपाल [2]द्विगुणोच्छ्रयम् ॥ २ ॥

[3]गृहस्तम्भद्रुमशुभ्रं द्वारं देवकुलद्रुमैः ।
अविद्धं तच्च कर्तव्यं नाम्बुला[4]वि न कुक्षिमत् ॥ ३ ॥

[5]वज्रमध्यं नतं चैव द्वारं यत्नाद्विवर्जयेत् ।
मङ्गल्यं रूपकोपेतं तच्च कार्यं प्रयत्नतः ॥ ४ ॥

द्वारमानाष्टभागानां( ? भागोनां ) प्रतिमां तु सपिण्डिकाम् ।
द्वौ भागौ प्रतिमा तत्र तृतीयांशश्च पिण्डिका ॥ ५ ॥

[6]कटिरष्टमभागोनं( ? नां )[7]द्वारे कार्यं( ? र्या ) विजानता ।
तृतीयमंशं वसुधा तृतीयांशः कटिर्भवेत् ॥ ६ ॥

[8]मञ्जरी च तृतीयांशः प्रासादस्य महाभुज ।
गर्भ पादे( ? दो )न विस्तीर्णं तथा द्वारं प्रशस्यते ॥ ७ ॥

भित्तिर्गर्भाष्ट[9]भागोना तथा कार्या विजानता ।
प्रासादोच्छ्रायभागेन चतुर्थेन च शस्यते ॥ ८ ॥

वसुधासञ्चरो राजन् कट्यंशद्वितयेन( ? शे हि तथैव ) तु ।
[10]अष्टमेन तथा हीनो मध्ये सोपान इष्यते ॥ ९ ॥

समसंख्ये( ? ख्यं ) तु कर्तव्यं सोपानं नित्यमेव तु ।
नात्यर्थं संकटं कार्यं [11]न विस्तीर्णं तथैव च ॥ १० ॥

---

१. A.B. –पदे. २. A.B. द्विगुणोच्छ्रियम्. ३. B. गृहस्तम्भभ्रमशुभ्रद्वारदेव– C. गृहस्थस्तत्रमश्वत्र द्वारदेव– V. गृहस्थस्य तु द्वारेण. V. ( f₁. ) गृहस्तंभशुभद्वार. ( f₂. ) गृहस्थद्रुमद्वारेण. ४. V. ( f. ) विनिष्कमत्. ५. A.B. वज्रमन्यं. ६. C. कष्टि– ७. A.B.C. द्वारं. ८. A. मंजरीश्च. ९. A.B.C. –भागेन. १०. V. omits. अष्टमेन...नित्यमेव तु. ११. V. ना.

मूलक्रमाद्यथा चोर्ध्वं तथा विस्तारवर्जितम् ।
सोपानं कारयेद्राजन् पार्श्वयोस्सिंहभूषणम् ॥ ११ ॥

न मुण्डं न च शूलाग्रं नानतं कारयेत्तथा ।
समं [1]मनोहरं कार्यं तथा [2]माङ्गल्यरूपवत् ॥ १२ ॥

[3]सुधासुसितशृङ्गं च विचित्र[4]कटिभूषणम् ।
द्वारयोः सप्रतीहारं समगर्भगृहं समम् ॥ १३ ॥

[5]देवपीठं तु कर्तव्यं मध्ये गर्भगृहस्य तु ।
भद्रपीठनिभं सौम्यं श्लक्ष्णं घातविवर्जितम् ॥ १४ ॥

एवंविधे देवगृहे [6]निविष्टा
शुभावहा स्यात् प्रतिमा सदैव ।
नित्यं तथा सन्निहिता नृवीर
तस्मात् प्रयत्नादिदमेव चिन्त्यम् ॥ १५ ॥

**इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे सामान्यप्रासादलक्षणं नाम ॥ ८८ ॥**

---

१. A. मनोहरो. २. A.B. मंगल्यरूपवत्. ३. C. वसुधासितशृङ्गं. ४. B. -कटिभूषिणम्. ५. V. omits देवपीठं... तु. ६. A. विनिष्टा.

## एकोननवतितमोऽध्यायः ।

मार्कण्डेयः—

बनप्रवेशं धर्मज्ञ निबोध गदतो मम ।
शुभे दिवसनक्षत्रे मुहूर्त्ते [1]चापि पूजिते ॥ १ ॥

दैवज्ञं पुरतः कृत्वा स्थपतिः प्रविशेद्वनम् ।
ततस्तत्र परीक्षेत छिन्द्याद्भिन्द्याद्वनस्पतीन् ॥ २ ॥

सकोटरान् लताबद्धान् कृमिजग्धान् विवर्जयेत् ।
वह्निना च तथा स्पृष्टान् पातितान् [2]पवनेन च ॥ ३ ॥

कुञ्जरेण तथा भग्नान् पक्षिणां निलयाश्च ये ।
तापसानां समीपे च [3]सिक्ताश्च घटवारिणा ॥ ४ ॥

सत्त्वानामाश्रया ये च ये च कुब्जा नराधिप ।
सुशिरा ऊर्ध्वशुष्काश्च बालवृद्धास्तथैव च ॥ ५ ॥

श्मशानचैत्यवल्मीकदेवतायतनोद्भवाः ।
उद्यानजानेकवृक्षान् सीमावृक्षांस्तथैव च ॥ ६ ॥

मार्गवृक्षान् महाराज प्रयत्नेन विवर्जयेत् ।
पलाशं कोविदारं च [4]शाल्मलिं पिप्पलं वटम् ॥ ७ ॥

आम्रं च पुष्पकं चैव कपित्थं च विभीतकम् ।
वर्जयेद्वेतसं चैव ये चाराम[5]द्रुमास्तथा ॥ ८ ॥

नन्दनं स्यन्दनं सालं [6]शिंशपं खदिरं धवम् ।
किंशुकं पद्मकं चैव हरिद्रं चीनकं द्रुमम् ॥ ९ ॥

अर्जुनं च कदम्बं च मधूकं [7]चाञ्जनं तथा ।
[8]देववृक्षांश्च जात्यांश्च तथा वै रक्तचन्दनम् ॥ १० ॥

---

१. V.C. चाभिपूजिते. २. V. (f) पार्वतेन च. ३. A. सिक्तौ च. ४. A.C. शल्मलं ५. C.V.–स्तथा द्रुमाः A.B. चासाराद्रुमास्तथा. ६. A.B.C. शिंशपां. ७. A. साञ्जनं. ८. C. देववृक्षश्च जात्यश्च. B. जात्यश्च.

एते प्रशस्ता विज्ञेया ये च सारा महीरुहाः ।
शस्ताशस्ता न ये प्रोक्तास्ते तु मध्यफलाः स्मृताः ॥ ११ ॥

रक्तसारा नरेन्द्राणां शुक्लसारा द्विजन्मनाम् ।
पीतसारा [1]विशां शस्ताः शूद्राणां कृष्णमध्यकाः ॥ १२ ॥

छेत्तव्यं तु द्रुमं गत्वा सन्ध्याकाले तु पश्चिमे ।
द्रुमस्याग्रे बलिः कार्यो भूतानां तन्निवासिनाम् ॥ १३ ॥

कुल्माषोल्लोपिकाभक्ष्यपुष्पधूपादिभिर्नृप ।
कृत्वा [2]वाच्यं ततो मन्त्रमिदं [3]यदुकुलोद्वह ॥ १४ ॥

वसन्ति यत्र भूतानि तेभ्यस्स्वस्ति नमोऽस्तु वः ।
उपहारं गृहीत्वेमं क्रियतां वासपर्ययः ॥ १५ ॥

[4]भवद्भिश्चाभ्यनुज्ञातः पूजितैः प्रमथेश्वराः ।
देवागारे नियोक्ष्यामि द्रुममेतमसंशयम् ॥ १६ ॥

[5]न चेद्भवन्तस्त्यक्ष्यन्ति [6]द्रुममेतं ततो मम ।
स्वप्ने भवद्भिर्वक्तव्यं यथातथ्यमनुग्रहात् ॥ १७ ॥

एवमुक्त्वा [7]तथा तत्र प्रस्वपेत् स्थपतिर्नृप ।
दैवज्ञश्च महाभाग रक्षितौ शस्त्रपाणिभिः ॥ १८ ॥

ततः स्वप्नं शुभं रात्रौ तयोरेकोऽपि चेद्यदि ।
[8]पश्येद्राजन्न वा पश्येच्छिन्द्याद् वृक्षमसंशयम् ॥ १९ ॥

[9]स्वप्नं वाप्यशुभं पश्येत् न तं [10]भिन्द्यात् कथञ्चन ।
छेत्तव्यं छेदयेद्वृक्षं कल्यमुत्थाय बुद्धिमान् ॥ २० ॥

[11]मध्वाज्याक्तेन राजेन्द्र ततः परशुना शुचिः ।
रेखां प्रदक्षिणं कृत्वा पातयेत् प्रयतस्ततः ॥ २१ ॥

---

१. B. विशांलस्ताः २. V. चास्ये. C. चास्यं. ३. B. यदुकुलोद्वहः. C. यदुकुलोतम. ४. A.B.C. भवद्भयोहमनुज्ञातः ५. A.B. वदेद्भवंतस्स्यदयन्तु. ६. B. द्रुतमेनं ततो मम. ७. C. ततस्तत्र ८. A.B. पश्येद्राजन्वतान्मध्येच्छिन्द्या- ९. A. स्वप्नं वापि शुभं. १०. C. भिन्द्या ततो नृप. ११. B. मध्वाज्यार्थेन.

पूर्वाग्रमुत्तराग्रं वा पतनं तस्य शस्यते।
ऐशान्यां च महाराज दिक्षु शेषासु गर्हितम् ॥ २२ ॥

[1]वातप्रभग्नं न ग्राह्यं प्राणिहिंसाकरं तथा।
प्रशस्तं पतितं वृक्षं ग्राह्यं भवति यत्नतः ॥ २३ ॥

अग्रं मूलं प्रयत्नेन कर्तव्यं तस्य चिह्नितम्।
अग्रं देवस्य मूर्धानं पादं मूलं तु कारयेत् ॥ २४ ॥

अर्चा कृता विपर्यस्ता तिर्यग् वा [2]मरणावहा।
अग्रमूलविपर्यासं स्तम्भानां च विवर्जयेत् ॥ २५ ॥

अग्रमूलविपर्यासे कृते वेश्म क्षयं [3]व्रजेत्।
पूर्वाग्रा चोत्तराग्रा वा द्रुमा योज्या गृहेषु च ॥ २६ ॥

महावंशेषु वंशेषु विपर्यस्ता विगर्हिताः।
दक्षिणाग्राः पराग्रा वा गृहस्वामिविपत्तिदाः ॥ २७ ॥

तस्मात् सर्वप्रयत्नेन [4]चिह्नितं कारयेद् द्रुमम्।
अग्रे मूले च धर्मज्ञ ततः सम्यक् प्रवेशयेत् ॥ २८ ॥

शकटेन महाराज नैर्वाप्यथ गोवृषैः।
[5]शुभे दिवसनक्षत्रे मुहूर्ते चाभिपूजिते ॥ २९ ॥

प्रविश्य सम्यक् तं विद्वान् यथायोगं नियोजयेत्।
[6]यथोद्देशं महाराज स्थपति[7]र्लक्षणान्वितम् ॥ ३० ॥

एवं हि कृत्वा [8]वनसंप्रवेशं
यः काष्ठमानीय गृहाणि कुर्यात्।
[9]वृद्धिर्भवेत्तस्य सदैव राजन्
धनेन धान्येन सुतैश्च मुख्या ॥ ३१ ॥

**इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे दारुपरीक्षा नाम ॥ ८९ ॥**

---

१. V. वामे प्रभग्ने. C. वाते प्रभग्ने. २ A.B. मरणायवा. ३. A. भवेत्. ४. V. चिह्नैस्तं. ५. V.C. आप्ते. ६. A.B. अथोद्देशं. ७. C. -र्लक्षणान्वितः. ८. A. वसनं प्रवेशं. ९. C. वृद्धिमवेत्तस्य.

## नवतितमोऽध्यायः ।

मार्कण्डेय :—

पूर्वोक्तविधिना गत्वा शिलां वाथ परीक्षयेत् ।
शैलं गत्वा महाराज दैवज्ञः स्थपतिस्तथा ॥ १ ॥

शुक्ला शस्ता द्विजातीनां क्षत्रियाणां च लोहिता ।
विशां [1]पीता हिता कृष्णा शूद्राणां च हितप्रदा ॥ २ ॥

एकवर्णां समां स्निग्धां निमग्नां च तथा क्षितौ ।
[2]घातातिमात्रस्फुटनां दृढां मृद्वीं मनोरमाम् ॥ ३ ॥

कोमलां सिकताहीनां प्रियां दृग्मनसोरपि ।
सरित्सलिलनिर्धूतां [3]पवित्रां तु जलोषिताम् ॥ ४ ॥

द्रुमच्छायोपगूढां च तीर्थाश्रयसमन्विताम् ।
आयामपरिणाहाढ्यां [4]ग्राह्यां प्राहुर्मनीषिणः ॥ ५ ॥

[5]अग्राह्यां ज्वलनालीढां तप्तां भास्कररश्मिभिः ।
अन्यकर्मोपयुक्तां च तथा क्षाराम्बुसंयुताम् ॥ ६ ॥

[6]अत्यन्तोपहतां रूक्षामपुण्यजनसेविताम् ।
[7]बिलैः संदूषिता या तु विचित्रैर्बिन्दुभिश्रिता ॥ ७ ॥

रेखामण्डलसंकीर्णां विद्धां विमलसंयुताम् ।
विमलं त्रिविधं ज्ञेयं लोहं कांस्यं च हेमजम् ॥ ८ ॥

या लोहविमलैर्जुष्टा सा जनक्षयकारिणी ।
कांस्याभविमलोपेता जनमान[8]विनाशिनी ॥ ९ ॥

[9]हैमेन युक्ता दुर्भिक्षं तथा कुर्यादवग्रहम् ।
[10]दर्पणे छेदने चैव मण्डलं [11]यत्र दृश्यते ॥ १० ॥

---

१. A. पीता हि कृष्णा च. २. C. गात्रादिमात्र-. ३. B.C. पवित्रांतर्जलोषिताम्. ४. B. ग्राह्यं. ५. A.C. आग्राह्यां ६. C. omits अत्यन्तोपहतां...विमलसंयुताम्. ७. V. तिलैः सम्भूषिता. ८. B.C. विनाशनी. ९. A.B. हेमेन. १०. V. घर्षणे. ११. V. यत्प्रदृश्यते.

सगर्भां तां विजानीयाद् यत्नेन [1]च विवर्जयेत् ।
माञ्जिष्ठवर्णसंकाशे गर्भे भवति [2]दर्दुरः ॥ ११ ॥

पीतके मण्डले गोधा कृष्णे विद्याद्भुजङ्गमम् ।
कपिले मूषकं विद्यात् [3]कृकलासं तथारुणे ॥ १२ ॥

गुडवर्णे तु पाषाणं [4]कापोते [5]गृहगोधिका ।
[6]आपो निस्त्रिंशवर्णाभे भस्मवर्णे तु वालुका ॥ १३ ॥

अतस्त्वेकतमेनापि युक्ता कर्तुर्विपर्यये ।
एवं गर्भास्तु विज्ञेया बाह्यलक्षणलक्षिताः ॥ १४ ॥

[7]बाह्यतो लक्षणं नास्ति तेषां लेपानि दापयेत् ।
ब्राह्मीं माहेश्वरीं शाक्रीं वैष्णवीं [8]श्लक्ष्णपेशिताम् ॥ १५ ॥

अजास्तन्येन संयोज्य शिलालेपं तु दापयेत् ।
अहोरात्रे गते यत्र [9]शिलाशोषो न जायते ॥ १६ ॥

सगर्भां तां विजानीयात् प्रयत्नेन विवर्जयेत् ।
[10]कासीशं पीतकासीशं [11]गवां क्षीरेण पेषयेत् ॥ १७ ॥

पाषाणं लेपितं तेन बहुवर्णं यदा भवेत् ।
सा शिला न प्रशस्ता स्यात् प्राणिगर्भा तु सा स्मृता ॥ १८ ॥

[12]मुस्तकं करवीरं च कुष्ठं [13]तालीसपत्रकम् ।
स्त्रीस्तन्यपिष्टैरेतैस्तु पाषाणं लेपयेद् बुधः ॥ १९ ॥

एभिर्लेपितमश्मानं यदा सिमिसिमायते ।
कालकूटं विषं तत्र न तं हस्तेन संस्पृशेत् ॥ २० ॥

श्वेतश्च पद्मवर्णश्च [14]कुसुमोषरसन्निभम् ।
पाण्डुरो मुद्गवर्णश्च [15]कापोतो भृङ्गसन्निभः ॥ २१ ॥

---

१. C. तु. २. B. दुर्दुरः. ३. A.B.C.D. –हृकिलासं. ४. B. कपोते. ५. A.B.C. गृहगोलिका. ६. B. omits आपो...वालुका. D. अपो.. ७. D. वाह्यितो लक्षणं. ८. V. तक्षणोच्चिताम् . ९. V. शिलालेपो. १०. V.C.D. कासीसं पीतकासीसं. ११. V. गव्यक्षीरेण. १२. A.B. मस्तकं. D. पुस्तकं. १३. V. तालीशपत्रकम्. C. बालीसपत्रकम्. १४. V. कुसुमोषणसन्निभः C. कुसुमोष...,सन्निभम्. D. कुसुमोषरसन्निभः १५. C. कपोतो.

ज्ञेयाः प्रशस्ताः पाषाणाः अष्टावेते न संशयः ।
कृष्णवर्णा शिला या तु [1]शुक्ला हीरकसंयुता ॥ २२ ॥

सा शिला श्रीकरी ज्ञेया पुत्रपौत्र[2]विवर्धिनी ।
सितवर्णा तु या कृष्णैः [3]हीरकैः [4]शबलीकृता ॥ २३ ॥

बहुदोषकरी सा तु कृष्णा वा रक्तहीरकैः ।
सर्ववर्णेषु शुक्लेषु प्रशस्तं [5]हीरकं स्मृतम् ॥ २४ ॥

सर्वेषामेव वर्णानां अन्यवर्णं विगर्हितम् ।
[6]ग्राह्यां शिलां दिने गत्वा शोभने [7]स्नपयेद् बुधः ॥ २५ ॥

क्षीरेण नृप गव्येन [8]सकषायैस्तथा जलैः ।
आच्छाद्य कुसुमैर्दर्भैः प्राग्वत् कुर्यात्तथा बलिम् ॥ २६ ॥

स्वप्नार्थं च स्वपेत्तत्र दैवज्ञः स्थपतिस्तथा ।
प्राग्वद् दृष्टे शुभे स्वप्ने शिला नेया तु [9]या भवेत् ॥ २७ ॥

अदृष्टे तु तथा स्वप्ने न [10]त्वदृष्टे त्वशोभने ।
पूजनं तु द्वितीयेऽह्नि कृत्वा भाण्डगणस्य तु ॥ २८ ॥

छेदकस्य ततः कृत्वा संवाह्यं [11]तं प्रवेशयेत् ।
प्राग्वदेव महीपाल यथा वृक्षेषु कीर्तितम् ॥ २९ ॥

शिलानां गर्भविज्ञानं यदुक्तं नृपसत्तम ।
तदेव सर्वं [12]जानीहि द्रुमाणामपि यत्नतः ॥ ३० ॥

अनेन सम्यग्विधिना गृहीता
शिला भवेत् सर्वसुखावहा सा ।
तस्मात्प्रयत्नेन यथोक्तमेतत्
वनप्रवेशं सकलं हि कुर्यात् ॥ ३१ ॥

**इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे शिलापरीक्षा नाम ॥ ९० ॥**

---

१. A. शुक्लफीनकसंयुता. २. A.C. –विवर्धनी. ३. A.B. –फनकैः. ४. V.C. सवलीकृता. B. शिवलीकृता. ५. V.C.D. हीरकं विदुः. ६. V. ग्राह्मीं शीलां. ७. D. लेपयेद्बुधः V.B.C. धूपयेद्बुधः. ८. B. सकषायोस्तथा. ९. V. सा भवेत्. १०. B. तु दृष्टे तु शोभने. V. न दुष्टे शोभनं भवेत्. ११. A.B. तां. १२. A.B.C. जानीयात्–.

## एकनवतितमोऽध्यायः ।

मार्कण्डेय :—

अतः परं प्रवक्ष्यामि [1]पक्वेष्टनिचयं तव ।
ब्राह्मणानां शुभा श्वेता क्षत्रियाणां तु [2]लोहिता ॥ १ ॥

मृत्पीता वैश्यजातीनां कृष्णा चैवान्त्यजन्मनाम् ।
यस्य वर्णस्य या शस्ता तां [3]मृदं ग्राहयेद् बुधः ॥ २ ॥

[4]असङ्कीर्णाच्छुभाद्देशाद् गृहीत्वा शोषयेन्मृदम् ।
शोषितां तां विमृद्नीयात् [5]सशैवालेन चाम्भसा ॥ ३ ॥

हस्तदीर्घेण यन्त्रेण तदर्धविस्तृतेन च ।
तदर्धमुच्छ्रितेनाथ कर्तव्या [6]इष्टका [7]मताः ॥ ४ ॥

आतपे तास्तथा शुष्का विपचेन्नृपसत्तम ।
[8]काष्ठैरसारैर्भूपाल [9]गोकरीषैस्तृणैस्तथा ॥ ५ ॥

मृदुना नृप [10]पाकेन न शान्त्यर्थं पचेच्च ताः ।
अपक्वाश्च न संग्राह्या न विलीनाः कथञ्चन ॥ ६ ॥

तासामत्यर्थपक्वानां भङ्गो भवति रूपके ।
भवन्त्यसाराश्च पक्वा विलीनाः [11]कर्तृनाशदाः ॥ ७ ॥

इष्टकानिचये वह्निं यो नरः संप्रयच्छति ।
सोमविक्रयिणा तुल्यः स तु पापः प्रकीर्तितः ॥ ८ ॥

[12]तस्माच्छुद्धेन मूले( ? ल्ये )न तत्राग्निं [13]दापयेद्धरम् ।
[14]वर्तमानसुखासक्तं संविभज्याः प्रयत्नतः ॥ ९ ॥

पक्वास्तु [15]शीतलीभूताः स्वानुरूपैस्त्वरूपकैः ।
सम्यक्संयोजिता योज्या यथास्थाने नराधिप ॥ १० ॥

---

१. A. पक्वेष्टानिचयं. २. B. लोहिताः. ३. C. मृदे. ४. A. असंकीर्णा शुभा देशादूगृहीत्वा. ५. A.B.C.D. –सशेवालेन. ६. A.C. चेष्टका. B.V. वेष्टका. ७. A.B. मतः. ८. D. काष्ठैरसालैर्भूपाल. ९. C.D. गोकरीषतृणैस्तथा. १०. A.B. केनाथ न. ११. V. कर्दनाशदाः. V. (f.) कवृनाशनाः. १२. A.B. तस्माच्छूद्रेण मूलेन. १३. V. दापयेन्नरः. C. दापयेन्नरम्. १४. V. वर्तमानमुखः सत्यं संविभज्य. १५. B. शीतलाभूत्वास्सारूपैस्तु... रूपकैः. C. शीतलीभूताः स्वानुरूपैस्तु रूपकैः. D. शीतलेभूताः स्वानुरूपैस्तु रूपकैः. A. शीतलीभूताः सानुरूपैस्त्वरूपकैः.

इष्टकासङ्ख्ययेनैवमेकैकं रूपकं बुधः ।
दर्शयेत्तु सुयुक्तेन [1]यथास्थानमरिन्दम ॥ ११ ॥

एवं रूपकविन्यासं शिलास्वपि विधीयते ।
[2]एवं च युक्त्या कुर्वीत काष्ठसंघातकं तथा ॥ १२ ॥

काष्ठानामायसं बन्धं सम्यक्कार्यं विजानता ।
इष्टकानामपक्कानां [3]पङ्कबन्धो विधीयते ॥ १३ ॥

इष्टकानां तु पक्कानां शिलानां च नराधिप ।
बन्धः कार्यः प्रयत्नेन [4]वज्रलेपकृतः शुभः ॥ १४ ॥

पक्केष्टकानां रचना मयोक्ता
[5]सुधान्विता सैव भवेन्नरेन्द्र ।
सुधाशिलानां त्रिदशाधिवासे
सुधाशिला नैव गृहेषु देया ॥ १५ ॥

**इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे इष्टकापरीक्षा नाम ॥ ९१ ॥**

---

१. V. यमस्याज्ञां विजानता. २. V. एवं सुयुक्त्या कुर्वीत. ३. V. पक्क– ४. B. वज्रलेपः कृतं. ५. B. सुधान्वितामेव.

## द्विनवतितमोऽध्यायः ।

मार्कण्डेय :—

अतः परं प्रवक्ष्यामि वज्रलेपविधिं तव ।
[1]बिल्वकांश्च कपित्थांश्च आम्रान् संहृत्य यत्नतः ॥ १ ॥

[2]शाल्मलीनां तथा पुष्पं [3]सल्लकीबीजमेव च ।
[4]धन्वनश्च(? धनुश्चापि) तथा कल्कं वचां च मनुजेश्वर ॥ २ ॥

एतेषां समवेतानां [5]समानां मनुजोत्तम ।
तोयमष्टगुणं क्वाथमष्ट[6]भागावशेषितम् ॥ ३ ॥

ततस्तत्र क्षिपेद् द्रव्यं शृणु [7]तच्च समासतः ।
[8]सल्लकीनां तु विन्यासं [9]बकुलस्य च गुग्गुलम् ॥ ४ ॥

भल्लातकानि बिल्वानि [10]कुन्दुरुं सर्जमेव च ।
[11]अतसीं च सुतप्तोऽयं वज्रलेपः प्रकीर्तितः ॥ ५ ॥

लाक्षां च कुन्दुरुं चैव गृहधूमं तथैव च ।
कपित्थबिल्वमध्यानि तथा नागफलं नृप ॥ ६ ॥

बलां च मधुकं चैव किंजापं मदनं तथा ।
मञ्जिष्ठा[12]भल्के सर्जं वज्रलेपः प्रकीर्तितः ॥ ७ ॥

विषाणानि गवां राजन् महिषाणां तथैव च ।
अजानां च तथा चर्म [13]महिषं गव्यमेव च ॥ ८ ॥

[14]रसबिम्बाकपित्थास्तु वज्रलेपः प्रकीर्तितः ।
अष्टौ भागास्तु नागस्य कांस्यभागद्वयं तथा ॥ ९ ॥

---

१. A.B.C.V. बिन्दुकांश्च.. २. A.B.C.D. शल्मलीनां. ३. A.D. मल्लकी–. ४. V. धनुषश्च. B. धनुनश्च. ५. D. समानानां नृपोत्तम. ६. B. भागावशेषतम्. ७. A.B.C.D. तां च. ८. V. मल्लकीनां. ९. A. भक्तलस्य. V. वत्सलस्य. १०. V.C.B. कुर्मुरुं. ११. A.B.C.V. अतसीं वसुतप्तोऽयं. १२. A. –मल्की. V. –सल्लकं. १३. V. माहिष्यं. १४. V. रसबिंबकपित्यास्तु. V. ($f_1$) रसबिंबार्कस्तु. ($f_2$) रसनिम्बकपित्थानि. C. रसनिम्बार्कपित्थान. D. रसं निंबकपित्थानां.

रीतिभागं च [1]कथितो वज्रलेपस्तथैव च ।
सुधा[2]पकस्ततः क्लिन्नो गव्यचर्म[3]समन्वितः ॥ १० ॥

[4]खररोमयुतो राजन् [5]वज्रलेपस्तथैव च ।
तेषामेकैकसंयुक्ताः कार्याः [6]शैलगृहा नृप ॥ ११ ॥

पक्वेष्टक[7]गृहाश्चैव स्थायिनो मनुजोत्तम ।
वज्रलेपयुता ह्येते भवन्त्यपि दृढास्तथा ॥ १२ ॥

तिष्ठन्ति [8]सुमहाराज संवत्सरशतान्यपि ।
[9]सहस्राण्यपि धर्मज्ञ चायुता[10]न्यर्बुदानि च ॥ १३ ॥

[11]सुधावर्णेन [12]सर्वेषां( ? सर्वत्र ) लेपं [13]दद्यात्तथा बहिः ।
ततश्च तां सुधां दद्याच्छोभार्थमरिमर्दन ॥ १४ ॥

वज्रलेपविधानं [14]तु प्रोक्तं [15]सम्यग् मयानघ ।
देवायतन[16]मध्येषु तथा च भवनेषु च ॥ १५ ॥

**इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे [17]वज्रलेपनं नाम ॥ ९२ ॥**

---

१. D. कथितं. २. V.C.D. –पक्का ततः क्लिन्ना. ३. V.C.D. –समन्विता. ४. V.C.D. खररोमयुता. ५. C.D. –व्रजलेपः प्रकीर्तितः. ६. B. शैलगृहान्नृप. ७. V.C. गताश्चैव. A.B. गतश्चैव. ८. D. सुमहाराजन्संवत्सर. ९. V.C.D. सहस्राणि च धर्मज्ञ. १०. A.C. –न्यर्बुधाने च. ११. A.B.D. सुधा वज्रेण. १२. C. सर्वेण. १३. B. दद्यात्तथाविधि. १४. A. ते. १५. V. सम्यक्तया तव. D. सम्यग्मया नृप. B.C. सम्यग्मया मनुष्येन्द्र. १६. B. मन्येषु. V.मुख्येषु. १७. V. वज्रलेपनिरूपणं.

## त्रिनवतितमोऽध्यायः ।

मार्कण्डेयः—

कृते तु देवायतने विधानं नाभवत् क्षितौ ।
[1]केवलं तु तदा ह्यासन् प्रत्यक्षेण नराधिप ॥ १ ॥

प्रत्यक्षेणापि [2]पश्यन्तस्त्रेताद्वापरयोर्जनाः ।
देवानां प्रतिमाः कृत्वा पूजयन्ति [3]यथाविधि ॥ २ ॥

गृहे प्रतिष्ठा तत्रापि त्रेतायां तु प्रवर्तिता ।
द्वापरे चाप्यरण्येषु ऋषिभिस्तु ततः कृता ॥ ३ ॥

तेषां सम्पूजनं नित्यं सिद्धैस्तु क्रियते नृप ।
प्रतिष्ठामात्रकरणान्निर्वृता ऋषयस्तु ते ॥ ४ ॥

कलौ प्रवृत्तः सर्वोऽयं प्रतिष्ठा[4]करणे जनः ।
ज्ञानं परं [5]कृतयुगे त्रेतायां च [6]तपः परम् ॥ ५ ॥

द्वापरे तु तथा ज्ञेयं प्रतिष्ठा तु कलौ युगे ।
देवतावेश्मपूर्वाणि नगराणि कलौ युगे ॥ ६ ॥

कर्तव्यानि महीपालैः स्वर्गलोकमभीप्सुभिः ।
राजा तु [7]स(? ख)र्वनगरं न कुर्यान्नृपसत्तम ॥ ७ ॥

यो न राजा हतो युद्धे स पुरं कर्तुमर्हति ।
रूपकं च [8]सुनामाङ्कं कुर्याद्राजा तथाप्यसौ ॥ ८ ॥

दुर्गं सर्वेण कर्तव्यं राज्ञा भूपतिसत्तम ।
भूमिदानादिभिर्यस्तु [9]कुर्यात् सुविहितं सदा ॥ ९ ॥

प्रतिष्ठां सकलां कुर्यादन्यथा पापभाग्भवेत् ।
[10]तत्कृतायां सुरार्चायामनिष्टं स्यात् कलौ युगे ॥ १० ॥

---

१. V. केवलं हि तदा ह्यासीत्प्रत्यक्षेण. २. V. दृश्यन्ते त्रेता. C. दृश्यन्तस्त्रेता. D. दृश्येत स्त्रेता. A. पश्यंतुस्त्रेता. ३. V. यथाविधिम्. ४. V.C. करणो जनः. ५. B. कृतयुगं. ६. D. ततः परम्. ७. D. सर्वो. ८. V. सुनामाख्यं. A.C. स्वनामांकं. ९. A.B. कुर्यात्सुविहितां सदा. V. कुर्यात्सुविहितं मुदा. १०. C. यत्कृतायां सुवचार्या–. D. यत्कृतायामनर्चाया–.

[1]कर्तुस्तु तदनिष्टं स्याज्जन्मान्तरशतेष्वपि ।
कृतत्रेताद्वापरेषु प्रतिष्ठाकरणात्फलम् ॥ ११ ॥

यस्मात्तेषु कृतामर्चां सिद्धाः सम्पूजयन्त्यलम् ।
कलौ कृतायामर्चायां सिद्धपूजा न विद्यते ॥ १२ ॥

तस्मात्सुविहितां कुर्याद्भूमिदानादिभिः कलौ ।
येन राज्ञा हतो राजा नान्यो युधि भवेत् कलौ ॥ १३ ॥

प्रतिष्ठा तेन कर्तव्या नगरे पूर्वनिर्मिते ।
अनुज्ञां नृपतेः प्राप्य कुर्यादन्योऽपि यादव ॥ १४ ॥

स्थिरां प्रतिष्ठां [2]गृह्णीयां नृपानुज्ञान[3]कारणम् ।
परप्रणीतां यस्त्वर्चां स कुर्यात् पुनरेव तु ॥ १५ ॥

विधानं [4]भूमिदानाद्यं कुर्यात्तत्र [5]च शक्तितः ।
द्विगुणं फलमाप्नोति कुलं चैव समुद्धरेत् ॥ १६ ॥

कृत्वा सुविहितामर्चां प्रतिष्ठापि यथाविधि ।
इष्टापूर्तेन धर्मेण नरो युज्यत्यसंशयम् ॥ १७ ॥

राजसूयाश्वमेधानां फलेन च नराधिप ।
कृते त्रेतायुगे राजन् द्वापरे च [6]नरोत्तमाः ॥ १८ ॥

आगच्छन्ति नृलोकेऽस्मिन् सशरीरा दिवौकसः ।
नागच्छन्ति कलौ यस्मात् [7]सशरीराः कथञ्चन ॥ १९ ॥

आगच्छन्ति प्रतिष्ठासु द्विजैरावाहितास्ततः ।
[8]तस्मात् कलौ प्रयत्नेन प्रतिष्ठां [9]कारयेद् बुधः ॥ २० ॥

अर्चास्थैस्त्रिदशै[10]र्लोकः कलौ [11]सर्वो हि [12]पाल्यते ।
अर्चागताश्च गृह्णन्ति कृतदेवप्रतिष्ठिताः ॥ २१ ॥

---

१. V. कृतं तु. २. B. गृह्या वा. ३. D. –करणम्. ४. D. –भूमिदानाद्यं. ५. A.B.V. न. ६. D. नरोत्तम. ७. C. स्वशरीराः. ८. A. तस्मात्कालौ. ९. C. कारयेन्नरः. १०. A.B.C.D. –र्लोकं. ११. A.B.C. सर्वं हि. D. सर्वं हिं. १२. A.B. पालिते.

[1]तस्मात् कलौ प्रयत्नेन प्रतिष्ठाकरणं हितम् ।
[2]यत्नात् सुविहितं कुर्याद् भूमिदानादिभिः सदा ॥ २२ ॥

[3]इष्ट्वा यज्ञैर्यथा यान्ति मानवास्त्रि[4]दिवालयम् ।
तथैव राजन् गच्छन्ति कृतदेव[5]प्रतिष्ठिताः ॥ २३ ॥

[6]तस्मात् कलौ प्रतिष्ठानं कर्तव्यं भूरिदक्षिणम् ।
यत्नात् सुविहितं कृत्वा भूमिदानादिभिः शुभा ॥ २४ ॥

दुर्गे प्रतिष्ठा कर्तव्या नगरे च तथा शुभे ।
नित्यमापणवीथ्यग्रे नान्यत्रेति नराधिप ॥ २५ ॥

ग्रामे वा यदि वा घोषे नास्ति [7]यत्रापणं नृप ।
तत्रोद्याने बहिः [8]कुर्याद्ग्राममध्ये न कारयेत् ॥ २६ ॥

नदीतीरेषु कर्तव्या वनेषूपवनेषु च ।
सरसां चैव तीरेषु गिरीणां शिखरेषु च ॥ २७ ॥

उपत्यकासु रम्यासु गुहासु च विशेषतः ।
एतेषु यान्ति सान्निध्यं स्थानेषु त्रिदिवौकसः ॥ २८ ॥

जलाशयविहीनेषु देशेषु मनुजोत्तम ।
सान्निध्यं नैव कुर्वन्ति कदाचित्त्रिदिवौकसः ॥ २९ ॥

तथा सुरगृहं कार्यं यथा वामे जलाशयम् ।
पुरस्ताद्वा भवेत्तस्य नान्यथा मनुजाधिप ॥ ३० ॥

समन्तात्तु जलं शस्तं द्वीपे देवगृहे कृते ।
यत्र देवगृहं कार्यं तत्र भूमिं परीक्षयेत् ॥ ३१ ॥

श्वेता रक्ता तथा पीता [9]कृष्णा वर्णक्रमान्विता ।
कुशाभिश्च शरैः [10]काशैर्दूर्वाभिश्च तथा युता ॥ ३२ ॥

---

१. A. तस्मात्कालौ २. D. यस्मात्सुविहितं. ३. A.C. यष्ट्वा–. D. दृष्ट्वा यज्ञैस्तथा. ४. D. –दशालयम्. ५. V. प्रतिष्ठकाः. ६. A. writes throughout तस्मात्कालौ instead of –कलौ. ७. D. यत्रापणे. ८. V.C.D. कार्या ग्राममध्ये. MS. D. has lost the other pages so this अध्याय is not complete. ९. B. कृष्ण. १०. B. काशैर्पूर्वाभिश्च.

मधुरा च कषाया च [1]तथाम्ला लवणा च या ।
वर्णक्रमाद्धिता भूमिः सर्वेषां श्रृण्वतः [2]परम् ॥ ३३ ॥

कण्टकिद्रुमसंकीर्णा शर्करालोष्टसंयुता ।
[3]सश्वभ्रा विषमा दुर्गा सवल्मीका तथा च या ॥ ३४ ॥

मूषिकावासबहुला पिपीलक[4]गणान्विता ।
नित्यं च शकटच्छिन्ना प्लुता या च पुरोदकैः ॥ ३५ ॥

आघातसूना भूमिश्च बन्धनागारसंयुता ।
वसतिर्यत्र दग्धा च विद्युता वह्निनापि वा ॥ ३६ ॥

वसतां दृष्टिदोषा च कूर्मपृष्ठा तथैव च ।
[5]त्रिकोणा स्रग्विहीना च शूर्पाकारा तथा च या ॥ ३७ ॥

दक्षिणेन तथा निम्ना निम्ना पृष्ठत एव च ।
[6]पुराम्बुग्राहिणी या च सुशिरा च तथा नृप ॥ ३८ ॥

खातं च [7]सुमृदा यत्र पूर्यते न पुनस्तथा ।
खाते यत्र कृतं दीपं प्रम्लानिमुपगच्छति ॥ ३९ ॥

माल्यं च म्लायते खाते तां भूमिं परिवर्जयेत् ।
खाते तोयेन पूर्णे च यत्र तोयं न तिष्ठति ॥ ४० ॥

तां भूमिं वर्जयेद्यत्नाद् दुर्गन्धा च तथापि या ।
प्रागुदक्प्रवणा शस्ता स्निग्धा च सुदृढा तथा ॥ ४१ ॥

[8]खातेऽधिकं च मृद्यत्र [9]पूर्यमाणे तथा भवेत् ।
[10]दीपं न म्लायते यत्र न्यस्तं च कुसुमं तथा ॥ ४२ ॥

तोयं सन्तिष्ठते खाते यत्र कालान्तरं बहु ।
सा प्रशस्ता मही ज्ञेया सुगन्धा सुस्वना तथा ॥ ४३ ॥

---

१. V.C. तथा तु लवणा. २. B. परः. ३. V. अशुभ्रा. A.C. सशुभ्रा. ४. V.C. गुणान्विता. ५. A. त्रिलोकास्रग्विहीना. ६. A.C. पराम्बु. ७. C. स्वमृदा-. ८. V.C. खातेऽधिकां. ९. V. पूर्यमाणे भवेन्नृप. १०. V. दीपो.

भुवः परीक्षणं कुर्याद्दिवसेऽतिशुभे तथा ।
भुवः परीक्षणे यत्र मङ्गल्यद्रव्यदर्शनम् ॥ ४४ ॥

श्रवणं वा तथैव स्यात् सा शुभा स्यात् वसुन्धरा ।
नं तां [1]राजन् परीक्षेत प्रशस्ता सा प्रकीर्तिता ॥ ४५ ॥

अमङ्गल्यं तथा दृष्ट्वा श्रुतं वा नृपसत्तम ।
भुवः परीक्षणं [2]तत्र न [3]कार्यमशुभा हि सा ॥ ४६ ॥

शुभा मही यत्र भवेन्नृवीर
　　कार्या प्रतिष्ठा भवतीह [4]तत्र ।
कृता भवेत्तत्र नरेन्द्रचन्द्र
　　हिताय कर्तुः [5]स्वविवृद्धये च ॥ ४७ ॥

**इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे भूमिपरीक्षा नाम ॥ ९३ ॥**

---

१. A. राजन्परीक्षेतं. २. A B C. यत्र. ३. C. कार्यमशुभं ४. A.B.C. यत्र. ५. A. सुनिवृद्धये च. C. स्व विवृद्धं ये च.

## चतुर्णवतितमोऽध्यायः ।

[1]मार्कण्डेय :— शुभां परीक्ष्य वसुधां तत्र कुर्यात् सुरालयम् ।
आदौ तां शोधयेद्विद्वान् दिवसे गुणसंयुते ॥ १ ॥

तत्र देशं शुभं विद्वान् गोमयेनोपलेपयेत् ।
ततः संपूजयेत्तत्र देवदेवं विनायकम् ॥ २ ॥

तथा च विश्वकर्माणं भाण्डं तदुपयोगि च ।
[2]पललोल्लूपिकाभक्ष्य[3]कुल्माषौदनपर्पटैः ॥ ३ ॥

परमान्नेन [4]मेध्यैश्च पुष्पधूपानुलेपनैः ।
पूजयित्वा च दैवज्ञं सात्त्वतं स्थपतिं तथा ॥ ४ ॥

भुवः संशोधनं कुर्याद्यथाव[5]त्पृथिवीपतिः ।
तावत् संशोधयेद्भूमिं निजा यावत्प्रदृश्यते ॥ ५ ॥

तदा संशोधयेद्विद्वान्यावत्स्याच्छल्यवर्जिता ।
ततस्तु पूरयेत्पश्चाद् दृढं मृत्तिकया पुनः ॥ ६ ॥

तद्वर्णया [6]तु या शस्ता [7]तस्य वर्णस्य कीर्तिता ।
अशल्यया मृत्तिकया पूरयेत्सुदृढं पुनः ॥ ७ ॥

कृत्वा तु पूरितं देशं सुदृढं सुसमं ततः ।
सुसूक्ष्मशल्यज्ञानार्थं कुर्याच्छल्यपरीक्षणम् ॥ ८ ॥

यथा वक्ष्याम्यहं राजंस्तथा यत्नेन बुद्धिमान् ।
यदि स्याच्छल्यसंयुक्ता शल्यमुद्धृत्य यत्नतः ॥ ९ ॥

पुनः संपूरयेद्विद्वान् यत्नाच्छुभमृदा नृप ।
एवं संशोध्य भूमिं तु कुंम्भं संस्थापयेत्ततः ॥ १० ॥

शिलान्यासं तु कुर्वीत तत्रैवाऽह्नि चतुर्दिशम् ।
[8]पक्वेष्टारचिते कार्यास्ता एव तु चतुर्दिशम् ॥ ११ ॥

---

१. In Ms. C. अध्याय ९४ begins after the ślo. no. 29. २. C. पललेल्लोपिका-भक्षकुर्माषोदनपर्पटै. ३. A.B. कुल्माषोदनपर्पटैः. ४. A. मध्यैश्च. B. मद्यश्च. C. सर्वैश्च. V. सत्यैश्च, ५. A. –त्पृथिवीपतिम् ६. V. तया शस्ता. ७. V.C. यस्य. ८. A.C. पक्वेष्टारेचिते.

मृण्मये चेष्टकान्यासं कर्तव्यं न च [1]दारुणे ।
[2]शुभे दिवसनक्षत्रे मुहूर्ते चाभिपूजिते ॥ १२ ॥

कुम्भाकारां शिलां कुर्याच्छैलदेवगृहे शुभम् ।
अन्यत्र ताम्रकलशं सुदृढं यत्र संयुतम् ॥ १३ ॥

चतुःष्षष्टिपदं कृत्वा समे स्थाने तु मण्डलम् ।
कृत्वा तु [3]देवतान्यासं तत्र [4]मण्डलके द्विज ॥ १४ ॥

[5]सर्वासां वास्तुविद्योक्तदेवतानां यथाविधि ।
[6]श्रियाः सम्पूजनं कृत्वा वास्तुदेवस्य चाप्यथ ॥ १५ ॥

पूजनं [7]मण्डलं कार्यं वास्तुदेवगणस्य च ।
विनायकस्य देवस्य विश्वकर्मण एव च ॥ १६ ॥

भाण्डानां च महाराज तथा तदुपयोगिनाम् ।
गन्धार्धपुष्पनैवेद्य[8]दीपधूपैर्यथाविधि ॥ १७ ॥

[9]ॐकारपूतमाज्यं च जुहुयाच्छ्रीधरस्य च ।
[10]श्रियः कृत्वा ततो होमं ब्रह्मणः [11]कारयेत्ततः ॥ १८ ॥

ब्रह्माणं पुरतः कृत्वा वासु(? स्तु)देवगणस्य च ।
मध्ये कृत्वा ततः कुम्भं शिलान्यासं तु कारयेत् ॥ १९ ॥

ऐशाने तु ततः कोणे शिलां पूर्वं [12]प्रतिष्ठयेत् ।
प्रदक्षिणं ततो राजन् शिलान्यासं विधीयते ॥ २० ॥

सूत्रन्यासं [13]च कुर्वीत तस्मिन्नेव तथाहनि ।
यथानिवेशं कर्तव्यं प्रासादस्य सुनिश्चितम् ॥ २१ ॥

कृत्वा तु सूत्रविन्यासं नाधिकं तं तु कारयेत् ।
[14]नूनं मनुजशार्दूल कर्तुर्दोषकरावुभौ ॥ २२ ॥

---

१. B. दारुणं. २. V.B.C. शुभम्. ३. C. च. ४. B. मण्डले द्विज. ५. C.V. सर्वेषां वास्तुविद्योक्ता. ६. A.B. श्रियः. ७. V.B. मण्डले कार्ये, मण्डले कार्यं. ८. V. –धूपदीपैर्यथाविधि— ९. A. ॐकारपूतसाज्यं B. ॐकारयुतसाज्यं. १०. V. श्रियाः. ११. V. C. कारयेत्तदा. १२. V. प्रतिष्ठिताम्. १३. V तु. १४. A.B.C. नोनं.

कुम्भस्य च शिलानां च ततः स्थानं विधीयते ।
[१]वटाश्वत्थकषायेण सर्वौषधिजलैस्ततः ॥ २३ ॥

ततोऽनुलेपनं कुर्याच्चन्दनेन सुगन्धिना ।
आच्छादनं ततः कार्यं वासोभिः कुसुमैस्तथा ॥ २४ ॥

धूपं दीपं सुनैवेद्यं तेषां नाम्ना निवेदयेत् ।
दक्षिणाभिर्द्विजेन्द्राणां ततः पूजा विधीयते ॥ २५ ॥

कालवित्स्थपतिः [२]पूज्यो ततो [३]नाम विजानता ।
ततः कर्ता जपेन्मन्त्रं [४]स्थपतिर्वाथ कालवित् ॥ २६ ॥

नन्दे नन्दय वासिष्ठे वसुभिः पूजया सह ।
जये [५]भार्गवदायादे प्रजाभ्यो जयमावह ॥ २७ ॥

पूर्णेङ्गिरसदायादे पूर्णकामं कुरुष्व माम् ।
भद्रे कश्यपदायादे कुरु भद्रां [६]मतिं मम ॥ २८ ॥

सर्वबीजसमायुक्ते सर्वरत्नौषधैर्वृते ।
रुचिरे [७]नन्दिते नन्दे वासिष्ठे रम्यतामिह ॥ २९ ॥

प्रजापतिसुते देवि चतुरस्रे [८]महीमये ।
सुभगे सुव्रते भद्रे इह काश्यपि रम्यताम् ॥ ३० ॥

[९]पूज्यते परमाचार्यैर्गन्धमाल्यै[१०]रलंकृते ।
[११]भवभूतिकरे देवि इह काश्यपि रम्यताम् ॥ ३१ ॥

अव्यङ्गे चाक्षते पूर्णे [१२]मुनेरङ्गिरसः सुते ।
इष्टके त्वं प्रयच्छेष्टं प्रतिष्ठां कामयाम्यहम् ॥ ३२ ॥

देशस्वामिपुरस्वामिपशुस्वामिपरिग्रहे ।
मनुष्यपशुहस्त्यश्व[१३]धनवृद्धिकरी भव ॥ ३३ ॥

---

१. B. वटाश्वत्थ कथां येन. २. B. पूज्यौ. ३. V.C. राम. ४. V.C. स्थपतिं वाथ. ५. C. भार्गवदायादं. ६. V. गतिं. ७. A.C. नन्दिने ८. V. महीमयि. V. ($f_1$) महीसहे. ($f_2$) महीयये. ९. V. omits. पूज्यते. ...रम्यताम् । B.C. पूजिते. १०. C.–रलंकृतै. ११. B. प्रजापति सुते देवि. १२. D. मनोरंगिरसः. १३. B. धनवृद्धिकरे.

अनेनैव विधानेन कार्या [१]भूमिः समक्रिया ।
द्वारन्यासं महाराज [२]द्वारोच्छ्रायस्तथैव च ॥ ३४ ॥

स्तम्भोच्छ्रायं तथा वंशविन्यासं च यदूत्तम ।
तथामलकसारस्य चिह्नस्य तु [३]समुच्छ्रयम् ॥ ३५ ॥

आयुधं वाहनं चिह्न यस्य देवस्य यद्भवेत् ।
तस्मादेकतमं चिह्नं कार्यं चामलसारके ॥ ३६ ॥

सुधासिते समाप्ते तु चित्रकर्म विधीयते ।
कटिः सुचित्रिता कार्या पृष्ठं कार्यं सुधासितम् ॥ ३७ ॥

चित्रं लक्षणवत् कार्यं सर्वकामसमृद्धिदम् ।
आश्चर्याणि तथान्यानि तत्र यत्नान्निवेशयेत् ॥ ३८ ॥

चिह्नं विष्णुगृहे तत्र गरुडं वापि कारयेत् ।
दुर्गागृहे तथा सिंहं त्रिशूलं हरवेश्मनि ॥ ३९ ॥

पद्मं लक्ष्मीगृहे चिह्नं [४]हंसं स्याद्ब्रह्मणो गृहे ।
मकरं कामदेवस्य तालं सङ्कर्षणस्य [५]तु ॥ ४० ॥

अर्धचन्द्रस्थितं सिंहमादित्यस्य गृहे भवेत् ।
वृत्तमण्डलमध्यस्थं [६]मृगं चन्द्रमसो भवेत् ॥ ४१ ॥

वज्रं शक्रस्य कुर्वीत दण्डं [७]वैवस्वतस्य च ।
वरुणस्य तथा पाशं गदां च धनदस्य [८]च ॥ ४२ ॥

स्कन्दस्य शक्तिः कर्तव्या गणाध्यक्षस्य पार्थिव ।
[९]कर्तव्यं परशोश्चिह्नं [१०]वह्नेर्ज्वाला विधीयते ॥ ४३ ॥

वायोरम्बरभङ्गं तु उष्ट्रं [११]निर्ऋतये तथा ।
अन्येषामपि देवानां चिह्नं स्यादायुधं स्वकम् ॥ ४४ ॥

---

१. A.D. भूमि. २. B. द्वारोच्छ्रायं. ३. C. समुच्छ्रयन्. ४. D. हंसः. ५. D. च. ६. A.C. मृगं चन्द्रमसो. B. गृहं चन्द्रसमो. Ms. D. omits वृत्तमण्डल...भवेत्। ७. A.B. वैवसुतस्य च. ८. V. वै. ९. A.B.C.D. कर्तव्याः परशुचिह्नं. १०. A.B.D. वह्नेर्ज्वालां. ११. A.B.C.D. निनृत्तये instead of निर्ऋतये.

ततो ध्वजस्य विन्यासः कर्तव्यः [1]पृथिवीपते ।
असुरा [2]वासमिच्छन्ति ध्वजहीने सुरालये ॥ ४५ ॥

ध्वजेन सकलं [3]पापं जनस्य च विनश्यति ।
तस्मात्सर्वप्रयत्नेन [4]दद्याद्देवकुले ध्वजम् ॥ ४६ ॥

एवं कृते देवगृहे नरेन्द्र
वृद्धिस्सदा स्यान्न हि संशयोऽत्र ।
तस्मात्प्रयत्नेन विधानयुक्तं
देवालयं [5]कार्यमदीनसत्त्व ॥ ४७ ॥

इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे [6]ब्रह्मशिलान्यासध्वजविधिर्नाम ॥ ९४ ॥

---

१. B. पृथिवीपतेः. २. A.B.C. वस्तुमिच्छन्ति. ३. V. पापं ध्वजदस्य विनश्यति. C. चापं ध्वजात्तस्य...नश्यति. D. चापं ध्वजस्य...नश्यति. ४. V. दद्याद् देवगृहे. ५. B.C D. कार्यमदीसनत्त्व. ६. V. ब्रह्मशिलपध्वज–.

## पञ्चनवतितमोऽध्यायः ।

[1]ॐ एवं वादिनं [2]श्रीभगवन्तममलतप[3]समतिशयसञ्चिरजीविनं [4]श्रीमार्कण्डेयं राजा वज्रः प्रपच्छ । भगवन्नष्टशल्यज्ञानं कथं भवति । तमुवाच [5]श्रीभगवान्मार्कण्डेयः । कदाचित्कमपि महद्भूतं त्रैलोक्य[6]नाशायोत्थितमभवत् । [7]तं भूतं ससंभ्रमैस्त्रिदशैर्निगृह्य वेगेनाधोमुखं न्यस्तं । तस्य चोत्थानभीता देवा अङ्गेषूपविष्टास्तस्य पर्जन्याद्याः क्रमेण दक्षिणेऽङ्गभागे, व्युत्क्रमेण नागाद्या [8]वामे, पर्जन्यहुताशनौ शिरसि, करग्रहौ वदने, दृशोश्च [9]यज्ञकामौ, स्तनयोः [10]महेन्द्रादिती, श्रवणयोः स्त्यदिति, उरःस्थले अंसयोश्च सत्यभृशान्तरिक्षपवनाः । भुजे [11]चन्द्रभल्लाटमुख्या नागराजानो, द्वितीये भुजे सावित्रसवितारौ, [12]करे रुद्रव्याधी, द्वितीये करे अर्यमा [13]पृथिवीधरश्च [14]करस्य कक्ष्ययोः, पुष्पवितथ[15]बृहत्क्षताः पार्श्वे, शोषशोकयक्षाश्च द्वितीये पार्श्वे, हृदि ब्रह्मा, [16]विवस्वान्मित्रश्च जठरे, जयेन्द्रौ मेढ्रे, वृषणयोश्च यमवरुणौ, [17]स्फिजे वृषासुरौ, ऊर्वोः गंधर्वपुष्पदन्तौ जान्वोः, मृगग्रीवौ जङ्घयोः, पितृदौवारिकौ चरणयोः एवमयमैशानी दिक् शिरः, नैर्ऋती [18]दिक्पादौ वास्तुपुरुषस्य । तत्र च यत्स्वाङ्गं [19]स्पृशं प्रष्टा प्रयच्छति तत्रैव वास्त्वङ्गे शल्यं [20]विद्यात् । अथ वा यत्रैवाङ्गे [21]गृहपतेः भूयो भूयो रुग्भवति । अथ वास्तुदेवतामेकैकामुद्दिश्य घृतं जुहुयात् । [22]यद्वाज्यं हूयमाने अग्निलक्षणमशुभं भवेत् तद्देवदेशे । वा अथैतद्देवताभागे [23]सुखेन शल्यज्ञानमहं चतुष्षष्टिपदविभागेन वक्ष्यामि । तत्र बहिः

१. V.B.C.D. omit ॐ. २. C. omits श्री. ३. V. –समतियश. ४. B.C. omit श्री. ५. A.B.C. omit श्री. ६. V. –नाशायार्थितमभवत्. C. –नाशायोर्थितमभवत्. ७. V.B.C. तद्भूतं. ८. B. वासे. ९. C. यक्षकामौ. १०. A.C. महींद्रदिती. ११. A. चन्द्रबल्लाटकमुख्या. १२. V. करौ. १३. A.C. पृथिवीन्धरश्च. १४. करश्च. १५ A.B. C.V. बृहक्षताः. १६. C. विवस्वान्मित्रो जठरे. १७. V. स्फिजि वृषासुरौ. V. (f.) स्फिजो वृषासुरौ. C. स्फिजोः वृषासुरावूर्वोः. १८. V. दिगादौ. १९. V.D. स्पृशप्रष्टा. २०. A.D. विद्यात्. २१. A.B. गृहपते भूयो भूयो रुग्भवति. C. गृहपतेर्भूय रुग्भवति. २२. A.D. यद्वाज्ये. २३. A. B.D. मुखेन शल्यज्ञानमहं. C. सुखेन शल्यज्ञानाहं.

पूर्वेणार्धपदेश्वरः । पर्जन्यः अध्यर्धपदेश्वरः, [1]पर्जन्यः अध्यर्धपदेश्वर-करग्रहः महेन्द्ररविसत्यवृषाः यथाक्रमं द्विद्विग्रहेशाः, अन्तरिक्षो-[2]ऽध्यर्धपदेशः । [3]पवनोऽध्यर्धपदेशश्च दक्षिणेन पुष्पोऽर्धपदेशः । वितथोऽध्यर्धपदेशः । [4]बृहत्क्षतयवभृङ्ग गन्धर्वा द्विपदेशाः, कोशोऽध्यर्ध-[5]पदेशः । शेषोऽर्धपदेशश्चात्र दिङ्नगराजेनार्ध पदेशः । मुख्योऽर्धप-देशः । [6]भल्लाटचन्द्रादिदितयो द्विपदेशाः । रागोऽध्यर्धपदेशः । तदाशनो ऽर्धपदेशश्च तदन्तरः पूर्वेणार्धपदनाथः । यक्षो द्विपदनाथोऽर्यमा [7]अर्धपद-नाथः, सावित्रो दक्षिणतोऽर्धपदनाथः, सविता [8]द्विपदनाथो विवस्वानर्धपदनाथः जयः पश्चिमेनार्ध [9]पदनाथः, इन्द्रः द्विपदनाथो मित्रः अर्धपदनाथो रुद्रः । उदगर्धपदनाथो व्याधिः । द्विपदनाथो [10]महीधरः । [11]अर्धपादनाथः कामः । मध्ये चतुष्पदेश्वरो ब्रह्मा । एवं बहिर्द्वात्रिंश-द्देवताः, अन्तस्त्रयोदश, एवं पञ्चचत्वारिंशत् । तत्र प्रश्नकाले । यस्य नाम श्रूयते रुतं वा तदस्ति [12]विद्यात् पृच्छकवचनप्रथमाक्षराद्वा अकारादिवर्गे वाजिनराः [13]श्वगोमायुमेषरासभाजं [14]वस्तुतो नवधा विभक्तस्य मध्ये वकारः [15]अकजत एवं [16]सग इत्येते क्रमेण प्राच्या-दिषु वर्णाः । वर्णप्रथमश्रवणाद्वास्तुनि तद्दिशि शल्यम् । लग्नाच्छू-न्येषु केन्द्रेषु निःशल्यं दृढं भवति । पापयुक्तेषु [17]सशल्यां सशल्ये च केन्द्रे राशिवशो दिग्भवति [18]बलिनिग्रहे अस्थिशल्यम् । बलहीने शर्करा-ङ्गारकाष्ठतुषभस्मादि तत्र सर्वेष्वस्थिषु कर्तुर्मरणं भवति शर्करातुष-केशाङ्गारभस्मशल्येषु शोकानर्थव्याधिमरण[19]चौरोपद्रवाः सशल्ये च देवतायतने देवता[20]सन्निधानं न भवति । तस्मात्सर्वप्रयत्नेन निःशल्यं वास्तुदेवतायतनं च कुर्यात् । [21]देवतायतनदक्षिणे भागे

---

१. C. पर्जन्यः करग्रहः. २. B. –ध्यर्धपदेशाः. ३. V.D. पवनोऽर्धपदेशश्च. C. पवनो-श्वपदेशश्च. ४. V.C. गृहर्क्षतयवभृङ्ग– ५. V. –पदेशाः. ६. A.B.C. भल्लाटचन्द्रादितितयो. ७. B. अर्धपदनाथोः. ८. V. omits, द्विपदनाथो...मित्रः ९. C. –यमनाथः. १०. V. महीश्वरः. ११. A. अर्धपथनाथः. १२. A.B. विंधात्. १३. A. श्वगोमायुमेषरामभजं वास्तुतो. B. श्वरोगो-मायुमेषरामभजं वास्तुनो. D. श्वरोगोमायुमेष रासभं वास्तु सा. १४. C. वस्तुनो. १५. V.D. अकनत. १६. B. गम. V. ( f. ) सन. १७. V.C. सशल्यं च केंद्रे. १८. D. बलिनिगृहे. १९. A.B.C.D. चौरोपद्रवाणि. २०. B.C.D. सन्निधानं भवति. २१. C. दिग्भागे.

देवता कोशभवनम् । तस्याग्नेये महानसम् । दक्षिणेन [1]स्नानभवनम् । नैर्ऋते कुप्यगृहम् । पश्चिमेन तोयगृहम् । वायव्येन [2]भाण्डगृहम् । [3]उदक् प्रेक्षागारम् । ऐशानेनेज्यागृहम् । प्राक् सर्व[4]कर्मकारगृहमिति । एतान्यपि च शल्यवर्जितानि कुर्यात् । सर्वत्र द्रविणशल्येन वृद्धिर्भवति । तद्विज्ञानं भवति । भवति चात्र—

ऊर्ध्वस्थे केन्द्रगे [5]सौम्ये शल्यं द्रविणसंज्ञितम् ।
दिक् तत्राप्यवगन्तव्या केन्द्रराशिवशेन च ॥ १ ॥

ऊष्मा प्रदृश्यते यत्र छत्राकारः क्षितौ [6]भवेत् ।
तत्र वित्तं विजानीयात् सुशिरं यदि भूतलम् ॥ २ ॥

[7]नीलाभिः श्वेतपक्ष्माभिर्मक्षिकाभिः समन्विता ।
दुर्गन्धा च तथा भूमिस्तत्राधःस्याद्धनं भवेत् ॥ ३ ॥

एकनाल[8]समुत्थे द्वे [9]दृश्येते यत्र पुष्करे ।
भूयोभूयश्च तत्राधः कथयन्ति धनं बहु ॥ ४ ॥

अक्षीराः क्षीरिणो वृक्षास्तन्तुभिर्यदि वेष्टिताः ।
अकण्टकाः कण्टकिनस्तत्रापि [10]द्रविणं वदेत् ॥ ५ ॥

द्रुमे भवति [11]वन्दाकं यत्र चान्यं नराधिप ।
तत्रापि द्रविणं वाच्यं श्वेतं यत्र च किंशुकम् ॥ ६ ॥

[12]हिमाम्भसानि भ्रियन्ते न प्ररोहन्ति पादपाः ।
अकाले पुष्पदा वृक्षास्तत्राधो धनमादिशेत् ॥ ७ ॥

शार्ङ्को मैथुनं यत्र भुजगश्चित्रमस्तकः ।
दृश्यते यत्र राजेन्द्र तत्राधो धनमादिशेत् ॥ ८ ॥

**इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे प्रतिष्ठाकल्पे शल्योद्धारनाम ॥ ९५ ॥**

---

१. A.B.C.D. स्थानभवनम् . २. C. दण्डगृहम्. ३. V.D. उदक्प्रेक्ष्यागारम्. ४. A.B.D. –कर्मकर. ५. V.B.D. सोम्यै. A. सौमे. ६. B.C.D.V. क्वचित्. ७. B. omits नीलाभिः......पुष्करे । ८. V.C. समर्थे. ९. C. दृश्ये द्वे. १०. B. द्रवणं. D. द्रविणं भवेत्. ११. A. वदीकं. १२. C.V. हिमांभसीन भ्रियते. D. भ्रियेते.

## षण्णवतितमोऽध्यायः ।

वज्र उवाच— कस्मिन् काले तु कर्तव्या प्रतिष्ठा भृगुनन्दन ।
कस्मिन् कस्मिन् कृता काले [1]तदा भवति कीदृशी ॥ १ ॥

मार्कण्डेय :— शृणु कालं प्रवक्ष्यामि प्रतिष्ठाकरणे तव ।
यस्मिन् यस्मि[2]न् कृते काले यथा भवति यादव ॥ २ ॥

नित्यं सन्निहिता लोके [3]वैष्णवी तु युगे कृता(? ते) ।
धनधान्यवती [4]स्फीता वरदा च तथा भवेत् ॥ ३ ॥

दृष्टा(? ढा) भवति विख्याता त्रिदशेश[5]गुरोर्युगे ।
[6]ऐन्द्री [7]तेजोवती स्फीता भूतनिग्रहकारिणी ॥ ४ ॥

तथाविधा तथाग्नेये [8]भूतदाहमवाप्नुयात् ।
नित्याश्चर्ययुता त्वाष्ट्रे गम्या लोकैस्तथैव च ॥ ५ ॥

आहिर्बुध्न्ये दृढा नित्यं लोकानुग्रहकारिणी ।
पित्र्ये विनाशमाप्नोति कर्तुश्च मरणावहा ॥ ६ ॥

वैश्वे लोकहिता [9]कर्तुर्लोकगम्या कृता भवेत् ।
सौम्या सौम्ये तथा कान्ता वरदा च तथा भवेत् ॥ ७ ॥

ऐन्द्राग्ने नाशमाप्नोति कर्तुः कृत्वा विनाशनम् ।
[10]आश्विने श्रीमती भूत्वा शीघ्रं नाशमवाप्नुयात् ॥ ८ ॥

लोकाभिगम्या [11]भाग्ये स्यात् कर्तुर्दोषवती भवेत् ।
[12]अशुभेऽपि युगे कार्या प्रतिष्ठा [13]मनुजोत्तम ॥ ९ ॥

यस्मिन् यस्मिन् युगे[14]नाथो यो यो देवः प्रकीर्तितः ।
धनधान्यवती स्फीता कर्तुः श्रेयोवहा तथा ॥ १० ॥

---

१. D. कदा. २. V. –न्कृता. ३. B.C.V. वैष्णवे. ४. B. स्फीतां. ५. C. गुरुयुगे. ६. V. ऐन्द्रै. ७. B. तेजवती. ८. C.D. भूत्वादा. ९. A.B.C.D. कांता लोक. १०. V. अश्विनी B.D. आश्विनी, ११. B.D. भागे. १२. V. अशुभोऽपि. १३. D. मनुजेश्वर. १४. B. नाथ.

[1]संवत्सराख्ये वर्षे तु नित्यमाज्ञायुता भवेत् ।
[2]परिपूर्वे तु भूतघ्नी [3]लोकख्याता तथैव च ॥ ११ ॥

इडापूर्वे तथा सौम्या वरदा लोकसुन्दरी ।
अनुपूर्वे तु वरदा धनधान्यवती भवेत् ॥ १२ ॥

तत्पूर्वे नाशमाप्नोति कर्तुर्नाशावहा भवेत् ।
तत्रापि शम्भोर्मृत्योश्च यमस्य च हिता भवेत् ॥ १३ ॥

उत्तरे [4]त्वयने सौम्या धनवृद्धिकरी भवेत् ।
धनधान्ययुता स्फीता लोकानन्दकरी भवेत् ॥ १४ ॥

दक्षिणे त्वयने कर्तुः पापवृद्धिकरी भवेत् ।
तत्रापि सुप्ते देवेश(?शे) सर्वानर्थ[5]विवर्धिनी ॥ १५ ॥

शिशिरे लोककान्ता स्याद् दृढा च वसुधाधिप ।
स्फीता [6]वसन्ते सौम्या च वरदा च तथा भवेत् ॥ १६ ॥

ग्रीष्मे तेजस्विनी कान्ता भूतनिग्रहकारिणी ।
प्रावृट्काले कृता नाशं कर्त्रा सह समाप्नुयात् ॥ १७ ॥

शरत्काले कृता नाशं [7]शीघ्रमेव प्रपद्यते ।
हेमन्ते वरदा सौम्या धर्मवृद्धिकरी भवेत् ॥ १८ ॥

[8]माघे कर्तुर्विनाशाय फाल्गुने सुभगा भवेत् ।
लोकानन्दकरी [9]चैत्रे वैशाखे धनसंयुता ॥ १९ ॥

आज्ञायुता तथा ज्येष्ठे आषाढे कर्तृवृद्धिदा ।
श्रावणे धनहीना स्यात् प्रोष्ठपादे विनश्यति ॥ २० ॥

आश्विने नाशमाप्नोति वह्निना कार्तिके तथा ।
सौम्ये सौभाग्यमत्तुल्यं पौषे पुष्टिरनुत्तमा ॥ २१ ॥

---

१. V. संवत्सराख्ये कर्तव्यानित्य- २. C. परिपूर्वेत. D. omits परिपूर्वे तु ..पापवृद्धिकरी भवेत्. ३. A.B. लोकाख्याता. ४. V. ह्ययने. ५. V. –विवर्द्धिनी. C.D. –विवर्धनी. ६. C.D. वसन्ती. ७. D. शीघ्रं चैव. ८. D. माघे कर्तुश्च धनदा फाल्गुणे. ९. C. चैत्री वैशाखी.

दोषावहाधिमासे स्यात् कर्तुरात्मन एव च ।
कृष्णपक्षत्रिभागे तु प्रथमे स्याच्छुभावहा ॥ २२ ॥

मध्या द्वितीये भवति तृतीये कर्तृनाशिनी ।
शुक्ले त्रिभागे प्रथमे देशनाशाय कीर्तिता ॥ २३ ॥

द्वितीये मध्यफलदा तृतीये च शुभावहा ।
धनधान्यवती स्फीता वरदा च तथा भवेत् ॥ २४ ॥

यस्य पक्षस्य वृद्धिः स्यात् तस्मिञ्शुभावहा भवेत् ।
तेजस्विनी सूर्यदेवे चन्द्रे [1]क्षेमावहा भवेत् ॥ २५ ॥

भौमेऽग्निना प्रदह्येत बुधेन धनदा भवेत् ।
गुरुणा [2]स्याद् दृढा नित्यं लोकानन्दकरी सिते ॥ २६ ॥

आचन्द्रार्क[3]स्थिता सौरे प्रतिष्ठा समुदाहृता ।
तेजस्विनी कृत्तिकासु भूतनिग्रहकारिणी ॥ २७ ॥

[4]किञ्चिद्भूता ततः काले पुनर्दह्यति वह्निना ।
वह्नेः सूर्यस्य भौमस्य कुमारस्य च मानद ॥ २८ ॥

[5]गङ्गायाश्च कृता तत्र न दह्यति च वह्निना ।
[6]प्राजापत्ये दृढा नित्यं लोकानुग्रहकारिणी ॥ २९ ॥

[7]सौम्ये तु वरदा [8]प्रोक्ता मूषकैस्तु विनाश्यते ।
[9]आर्द्रायां [10]कर्तुर्मरणं क्षिप्रमेव प्रयच्छति ॥ ३० ॥

[11]पुनर्वसौ विनाशश्च संस्कारं चाप्नुयात् पुनः ।
[12]पुष्टिं पुष्ये समाप्नोति धनेन यशसा तथा ॥ ३१ ॥

[13]सार्प्ये कर्तु[14]र्विनाशः स्यान्नागानां च हिता भवेत् ।
[15]पित्र्ये मरणदा कर्तुस्तथा नाशं च गच्छति ॥ ३२ ॥

---

१. V.D. क्षमावहा. C. क्षेमवहा. २. V. च दृढा. ३. V. –स्थिरा. D. स्थिरा सोम्ये प्रतिष्ठा. ४. A.B.C.D. किञ्चिद्भूत्वा ततः कालं. ५. V.B. गंगायां च. ६. B. प्रजापत्ये. D. कृ प्रजापत्ये. ७. D. रो सौम्ये. ८. D. प्रोक्त. ९. D. मृ आर्द्रायां. १०. V. कर्तृमरणं. ११. D. आ पुनर्वसौ विनाशः स्यात्संस्कारं. १२. D. पु पुष्टिं. १३. D. ति सार्पे. १४. C. विनाशाय नागानां च. १५. D. श्ले पित्र्ये.

[1]लोकगम्या भवेद्भाग्ये [2]कर्तुर्नाशावहा तथा ।
तत्रापि कामदेवस्य कर्तु[3]स्सौख्यावहा भवेत् ॥ ३३ ॥

[4]आर्यम्णे सुदृढा स्फीता लोकानुग्रहकारिणी ।
[5]आज्ञायुता कृता हस्ते चिरान्नाशमवाप्नुयात् ॥ ३४ ॥

[6]नित्याश्चर्ययुता लोके चित्रायां च हितप्रदा ।
[7]स्वातौ तु वरदा सौम्या लोकानुग्रहकारिणी ॥ ३५ ॥

[8]ऐन्द्राग्ने कर्तृनाशाय मैत्रे [9]मित्राभिवृद्धये ।
[10]ज्येष्ठायां तेजसा युक्ता धनधान्यवती भवेत् ॥ ३६ ॥

[11]तथाविधा तथा मूले किन्तु [12]भूतसमाश्रया ।
[13]आप्ये [14]क्लेशमवाप्नोति वैश्वदेवे सुखप्रदा ॥ ३७ ॥

[15]श्रवणे धनधान्याढ्या [16]वासवे वसुसंयुता ।
[17]वारुणे शीघ्रनाशाय [18]तथाजे मनुजोत्तम ॥ ३८ ॥

[19]आहिर्बुध्न्ये दृढा स्फीता [20]कर्तुः काम्यप्रदा तथा ।
[21]धनधान्ययुता पौष्णे [22]आश्विने [23]रोगनाशिनी ॥ ३९ ॥

[24]याम्ये मरणदा कर्तुर्यमस्य तु हितप्रदा ।
[25]नक्षत्रे [26]सव्यतीपाते तथैव च [27]सवैधृते ॥ ४० ॥

ज्ञेया मरणदा कर्तुरात्मनाशकरी तथा ।
सार्के स्याच्छोकजननी ससौरे मृत्युदायिनी ॥ ४१ ॥

सभौमे वह्निभयदा [28]सतमस्के स्थिरा न तु ।
केतुना [29]भूषिते ऋक्षे वह्निदाहमवाप्नुयात् ॥ ४२ ॥

---

१. D. म लोकगम्या भवेद्भागे. २. A.B. कर्तुर्नाशवहा. ३. D. –स्सौख्यावहामहा-भवेत्. ४. D. पू. आर्यम्णे. V. अर्यम्णे सदृढा. ५. D. उफां आज्ञायुता. ६. D. ह नित्याश्चर्ययुता. ७. D. चि स्वातौ च वरदा. ८. D. स्वा ऐंद्राग्ने. ९. V.C. मैत्राभिवृद्धये. १०. D. विअं ज्येष्ठायां. ११. D. ज्ये तथाविधा. १२. B. भूतसमाश्रिया. १३. D. मू आप्ये. १४. A.B.D. –क्लेदम– १५. D. पू. उ. श्रवणे. १६. D. अ वासवे. १७. D. धं वारुणे–. B.C. वारुणी. १८. D. श तथाजे. १९. D. पूभां आहिर्बुध्न्ये. २०. V.C. कर्तुस्सौख्यप्रदा. २१. D. उ. भ. धनधान्य-युता. २२. D. रे आश्विने. A. आश्विनी. २३. A.B.C.D. रोगनाशनी. २४. D. अ याम्ये. २५. D. भ नक्षत्रे. २६. A.B. सव्यतीपात्रे. २७. C. सवैधृती. २८. A. सत मस्तके. C. समतस्के. २९. A.B.C.D. धूमिते.

केतूदयं भवेद्येन तेन [1]दुर्भिक्षमाप्नुयात् ।
भौमोदयो भवेद्येन तेन दह्यति वह्निना ॥ ४३ ॥

सौरोदयो भवेद्येन तेन [2]कर्ता विनश्यति ।
नक्षत्रे सपरीवेशे परचक्रभयं [3]वदेत् ॥ ४४ ॥

उल्काहते विनाशाय सभूकम्पे भयप्रदा ।
[4]उल्कापातो भवेद्यत्र तत्र [5]व्याधिकरो भवेत् ॥ ४५ ॥

त्रिविधोत्पातयुक्ते भे न शुभा [6]तु प्रकीर्तिता ।
दिव्ये कर्तृविनाशाय भौमे चात्म[7]विनाशनी ॥ ४६ ॥

अन्तरिक्षे च विज्ञेया लोकनाशकरी तथा ।
सवैधृतव्यतीपात[8]मृक्षमेकं विवर्जयेत् ॥ ४७ ॥

शेषैर्दोषैस्तथा युक्तं यावदागमनाद्रवेः ।
जन्मनक्षत्रविहिता कर्तुः [9]श्रेयस्करी भवेत् ॥ ४८ ॥

[10]सम्पत्करी [11]द्वितीये स्यात् तृतीयेऽरिभयप्रदा ।
[12]क्षेम्या [13]चतुर्थे भवति पञ्चमे व्याधिवर्धिनी ॥ ४९ ॥

[14]कार्यवृद्धिकरी षष्ठे सप्तमे निधनप्रदा ।
अष्टमे वरदा सौम्या नवमे श्री[15]विवर्धिनी ॥ ५० ॥

कर्मणां [16]साधकी प्रोक्ता [17]जन्मभाद्दशमे तु भे ।
[18]एकादशे भूतिकरी द्वादशेऽरिभयप्रदा ॥ ५१ ॥

ज्ञेया त्रयोदशे क्षेम्या रोगदा [19]तु चतुर्दशे ।
वृद्धिदा पञ्चदशके षोडशे निधनप्रदा ॥ ५२ ॥

[20]सप्तदशे [21]भूतिकरी श्रीदा [22]चाष्टदशे भवेत् ।
एकोनविंशतितमे कर्तुर्मरणदायिनी ॥ ५३ ॥

---

१. C. दुर्भिक्षमावहेत्. २. V. कल्पं. ३. C. भवेत्. ४. C. उल्कापाते. ५. V.B.C. व्याधिकरी. ६. D. च. ७. V. –विनाशिनी. ८. C. मृक्षेमेके. ९. B. श्रेयस्करे. १०. B. संपत्करे. ११. C.D. द्वितीया–. १२. A. क्षेमा. १३. C. चतुर्थी भवति पञ्चमी. D. चतुर्थी. B. omits कार्यवृद्धिकरी...विवर्धिनी. १४. D. कार्यसिद्धिकरी षष्ठी. १५. C. –विवर्धनी. १६. C. साधके. १७. A.B.C.D. जन्महाद्दशमे. १८. C. एकादशी. १९. D. च. २०. C. सप्तादशे. २१. D. भूतिकरे. २२. A.B. चाष्टादशे.

ततो द्वितीये धनदा तृतीयेऽरिभयप्रदा ।
चतुर्थे क्षेमजननी पञ्चमे रोगवर्धिनी ॥ ५४ ॥

षष्ठे लक्ष्मीकरी ज्ञेया धनधान्य[1]विवर्धिनी ।
[2]सप्तमे कष्टदा प्रोक्ता चाष्टमे धनदा स्मृता ॥ ५५ ॥

नवमे वित्तदा चैव सुखसौभाग्यवर्धिनी ।
द्वितीये च चतुर्थे च पञ्चमे च [3]तथाष्टमे ॥ ५६ ॥

द्वादशे नवमे चन्द्रे कर्तुर्दोषकरी भवेत् ।
जन्मस्थश्च तृतीयश्च षष्ठश्चैकादशस्तथा ॥ ५७ ॥

दशमः सप्तमश्चैव यदा विद्धो [4]भवेद्ग्रहैः ।
पञ्चमैर्नवमैश्चैव द्वादशैश्च तथाष्टमैः ॥ ५८ ॥

[5]चतुर्थे वा द्वितीये वा क्रमात्पादफलो भवेत् ।
विपर्ययेण वेधस्थो पापोऽपि शुभकृत् स्मृतः ॥ ५९ ॥

[6]चन्द्राद् [7]द्वादशगः सूर्यो द्वितीये वा [8]भयप्रदः ।
[9]द्वादशेऽथ द्वितीये च भौमे दाहमवाप्नुयात् ॥ ६० ॥

[10]द्वादशे षड्द्वितीये वा सौरे मरणदा भवेत् ।
पापमध्यगते चन्द्रे ध्रुवं मरणदा भवेत् ॥ ६१ ॥

एकस्मिंस्तु यदा [11]केन्द्रे चन्द्रः [12]सम्यग् व्यवस्थितः ।
केन्द्रत्रयमथान्यं स्याद्युक्तं सूर्यारसूर्यजैः ॥ ६२ ॥

तदा कर्तुर्विनाशाय प्रतिष्ठा स्यान्नराधिप ।
चन्द्रे सार्के विनाशाय भौमे दाहमवाप्नुयात् ॥ ६३ ॥

ससौरे मृत्युदा ज्ञेया सराहौ निधनप्रदा ।
नक्षत्रे [13]सोपरागे तु कर्तुर्मरणदायिनी ॥ ६४ ॥

---

१. C. विवर्धनी. २. A.B.C. & V. omit सप्तमे...वर्धिनी. ३. D. तथाष्टमी. ४. V. भवेद्ग्रहः. ५. D. चतुर्थै वा द्वितीयै वा. ६. B. omits चंद्रा...मवाप्नुयात्. ७. V. द्वादशमः. C. द्वादशमो. ८. C. भयप्रदा. ९. A. B. omit द्वादशेऽथ... वाप्नुयात्. १०. V. (f.) C. द्वादशे वा. D. द्वादशे च. ११. C. चन्द्रे. १२. A.B. सम्यग्विवस्थितः. १३. C. सापरागे.

[1]परिवेष्टे तथा चन्द्रे मरणं तु प्रयच्छति ।
[2]सार्पान्त्यपादगे चन्द्रे तथा ज्येष्ठान्तपादगे ॥ ६५ ॥

पौष्णान्तपादगे चैव कर्तुर्निधनकारिणी ।
यस्मिन्नृक्षे यदेवोक्तं फलं भूपतिसत्तम ॥ ६६ ॥

तदेवेह फलं प्रोक्तं तन्मुहूर्तेऽपि यादव ।
दिनमध्यगते सूर्ये मुहूर्तेऽभिजितेऽष्टमे ॥ ६७ ॥

सर्वकामसमृद्धा स्यात् सर्वोपद्रववर्जिता ।
गुरावस्तमयं प्राप्ते नीचस्थे कर्तृघातिनी ॥ ६८ ॥

[3]तस्माद्बलस्थे जीवे तु धनधान्यकरी भवेत् ।
ब्राह्मे [4]रौद्रे दृढा ज्ञेया प्राजापत्ये सुखावहा ॥ ६९ ॥

स्वर्गलोकप्रदा स्वर्ग्ये चक्रे [5]चक्रप्रवर्तिनी ।
वानस्पत्ये तु वरदा [6]ह्याग्ने चान्नविवर्धिनी ॥ ७० ॥

[7]वासे भवति वस्त्राढ्या काले मृत्युप्रदायिनी ।
आग्नेये दाहमाप्नोति [8]क्लेदमब्दैवते तथा ॥ ७१ ॥

सौरे भवति सुस्फीता चान्द्रे च वरदा तथा ।
नश्यते [9]शम्भुदैवत्ये गो[10]देवे वृद्धिमाप्नुयात् ॥ ७२ ॥

[11]वैष्णवे पुष्टिदा प्रोक्ता तथा भवति पूजिता ।
[12]कौमारे वृद्धिमाप्नोति पित्र्ये नाशं तथैव च ॥ ७३ ॥

वारुणे रोगदा प्रोक्ता शुभा चानन्तदैवते ।
चला पवनदैवत्ये याम्ये मृत्युप्रदा भवेत् ॥ ७४ ॥

[13]वाद्दैवते सदा कान्ता श्रीगेधे श्रीयुता भवेत् ।
धनदे धनसंयुक्ता सुदृढा शैलदैवते ॥ ७५ ॥

---

१. D. omits परिवेष्टे... कारिणी. २. A.B.C. सर्पान्त्य. ३. D. तस्माद्बलस्थिते जीवे धन-. ४. V. राश्ये. D. रौच्ये. ५. A.C. चक्रप्रवर्तनी. ६. A.B. आग्ने चानुविवर्धिनी. D. आग्ने-. ७. A. वामे. ८. D. क्लेशम-. ९. A.B. शस्तु. १०. V. (f.) गोदेव्ये. ११. A. वैष्णवी. D. omits वैष्णवे...दैवते. १२. V.C. कामारे. १३. A.B.D. वाग्दैवत्ये.

पृथ्वी दैवे[1] दृढा सौम्या शुभा स्याद् वेद( ? दैव )दैवते ।
पौरुषे [2]तु तथा [3]रौच्ये बहुधर्म[4]विवर्धिनी ॥ ७६ ॥

कर्तुः सुखावहा चैव तथा चाज्ञायुता भवेत् ।
दृढा धनयुता स्फीता तथा प्रतिपदि स्मृता ॥ ७७ ॥

द्वितीयायां [5]धनोपेता तृतीयायां वरप्रदा ।
चतुर्थ्यां नाशमाप्नोति यमस्य स्यात् सुखावहा ॥ ७८ ॥

विनायकस्य देवस्य तथा तत्र हितप्रदा ।
पञ्चम्यां श्रीयुता कान्ता वरदा च तथा भवेत् ॥ ७९ ॥

षष्ठ्यां लक्ष्मीयुता नित्यं सप्तम्यां [6]रोगनाशिनी ।
अष्टम्यां धान्यबहुला नवम्यां तु विनश्यति ॥ ८० ॥

[7]भद्रकाली कृता तत्र कर्तुर्भवति पुष्टिदा ।
धर्मवृद्धिकरी ज्ञेया दशम्यां तु तथा [8]कृता ॥ ८१ ॥

एकादश्यां तथा युक्ता द्वादश्यां सर्वकामदा ।
त्रयोदश्यां तथा ज्ञेया चतुर्दश्यां विनश्यति ॥ ८२ ॥

कृष्णपक्षे [9]पञ्चदश्यां कर्तुः क्षयकरी भवेत् ।
पञ्चदश्यां तथा शुक्ले सर्वकामकरी भवेत् ॥ ८३ ॥

ऊनरात्रे महाराज कर्तुर्मरणदा भवेत् ।
[10]त्र्यहस्पृशा च विज्ञेया तथा दोषवती नृप ॥ ८४ ॥

दिव्यान्तरिक्ष[11]भौमेन चोत्पातेन तु या युता ।
कर्तव्या विप्रयोगान्ता प्रतिष्ठा तु कृता भवेत् ॥ ८५ ॥

तिथिहानौ [12]क्षयं ज्ञेयं वृद्धौ वृद्धिः प्रकीर्तिता ।
शकुनौ दोषजननी [13]चतुष्पदि भयावहा ॥ ८६ ॥

---

१. V.C. देवी. २. C.D. च. ३. A.B.C.V. रौचे. ४. C. –विवर्धनी. ५. A. पीता. ६. A.C. रोगनाशनी. ७. C.D. भद्रकाल्या. V. भद्रा काल्या. ८. D. वृताः. ९. A. चतुर्दश्यां. १०. A.B.C.V. वृहत्स्पृशा. ११. C. भौमे च तत्पातेन. A.B. भौमे च चोत्पातेन. D. भौमे तु चौत्पातेन. १२. V. क्षयं प्रोक्तं वृद्धौ. १३. A.B.V. चतुष्पदि तथावहा D. चतुष्पादे जयावहा.

नागे भवति शून्या च [1]किंस्तुघ्ने तु शुभप्रदा ।
बवे दृढा तथा ज्ञेया बालवे तु शुभप्रदा ॥ ८७ ॥

कौलवे वरदा [2]प्रोक्ता [3]तैतिले [4]रोगनाशिनी ।
गरादौ रोगजननी तथा वणिजि पुष्टिदा ॥ ८८ ॥

विष्टौ मरणदा कर्तुरात्मदोषवती तथा ।
जन्मराश्युदये कर्तुः क्षिप्रं नाशवती भवेत् ॥ ८९ ॥

द्वितीये धननाशाय तृतीये कर्तृवृद्धिदा ।
चतुर्थे [5]ग्रहनाशाय पञ्चमे व्याधिदा भवेत् ॥ ९० ॥

षष्ठे शत्रुविनाशाय सप्तमे धननाशिनी ।
अष्टमे मृत्युदा ज्ञेया नवमे धर्मनाशिनी ॥ ९१ ॥

[6]दशमे कर्मणां वृद्ध्यै लाभे लाभकरी भवेत् ।
द्वादशे तु व्ययाय स्यात् प्रतिष्ठा [7]तु शुभा कृता ॥ ९२ ॥

जन्मलग्नोदये श्रेष्ठा धनधान्यवती भवेत् ।
जन्मराशिफलं सर्वं शेषस्थाने तु निर्दिशेत् ॥ ९३ ॥

मेषोदये कृता क्षिप्रं [8]नाशमाप्नोति पार्थिव ।
वृषोदये स्थिरा प्रोक्ता धनधान्यवती तथा ॥ ९४ ॥

लोककान्ता च मिथुने बहुकल्याणकारिणी ।
कुलीरे क्षिप्रनाशः [9]स्यात् सिंहे च सुदृढा भवेत् ॥ ९५ ॥

कन्यायां लोककान्ता स्यात् तुले भवति चास्थिरा ।
वृश्चिके तु स्थिरा प्रोक्ता कल्याणाय धनुर्धरे ॥ ९६ ॥

मकरे [10]क्षिप्रनाशा स्यात् कुम्भलग्ने दृढा भवेत् ।
मीने [11]गुणावहा कर्तुः कल्पाशून्या तथा भवेत् ॥ ९७ ॥

---

१. D. किंस्तुघ्ने. २. C. omits प्रोक्ता. ३. V. तैतले. ४. A.C. रोगनाशनी. V. throughout °नाशनी instead of °नाशिनी. ५. A. ग्रहणाशाय. V. गृहनाशाय. ६. D. दशमी कर्तुणां वृद्धै. ७. V. तु तथा कृता. A. तु शुभाकरा. D. शुभदा कृता. ८. D. नाशमायाति. ९. V.C. स्यात्सिंहे बसुदृढा. D. स्यात्सिंहे तु सुदृढा. १०. C. क्षिप्रनाशः. ११. V.C. पुण्यवहा.

उग्रा स्यात् सूर्यहोरायां सौम्या सोमस्य कीर्तिता ।
पापग्रहस्य [1]द्रेष्काणे कर्तुर्नाशाय कीर्तिता ॥ ९८ ॥

सौम्यग्रहस्य [2]सुशुभा कर्तुर्भवति वृद्धिदा ।
फलं [3]यदेव लग्नेषु नवांशेषु तदेव तु ॥ ९९ ॥

द्वादशांशेषु [4]विज्ञेयस्तदेव मनुजोत्तम ।
कर्तुर्नाशाय विज्ञेया त्रिंशांशे भौमसौरयोः ॥ १०० ॥

सितजीवेन्दुपुत्राणां कर्तुः कल्याणदा भवेत् ।
शुभमंशं महाराज लग्ने पापफले शुभम् ॥ १०१ ॥

लग्ने [5]शुभतरे ज्ञेयः पापांशः पापदो नृणाम् ।
लग्नस्थे शङ्करा कर्तुः कृता भवति भास्करे ॥ १०२ ॥

द्वितीयेऽर्थस्य हानिः स्यात्तृतीये धनसंयुता ।
आयुःक्षयं चतुर्थस्थे पञ्चमे [6]सुतनाशनम् ॥ १०३ ॥

षष्ठे शत्रुविघातं तु दारिद्र्यं सप्तमे भवेत् ।
मरणं चाष्टमे भानौ नवमे धर्मपीडनम् ॥ १०४ ॥

दशमे [7]सुतवृद्धिश्च लाभे लाभयुता भवेत् ।
द्वादशे व्ययसंयुक्ता निर्धना [8]तु तथा भवेत् ॥ १०५ ॥

चन्द्रे लग्नगते [9]ज्ञेया सुदृढा मनुजोत्तम ।

धनान्विता द्वितीये तु तृतीये लाभसंयुता ॥ १०६ ॥

चतुर्थे बान्धवहिता पञ्चमे सुतवृद्धिदा ।
षष्ठे रिपुविनाशाय सप्तमे च धनावहा ॥ १०७ ॥

अष्टमे मरणा[10]योक्ता नवमे धर्मपीडनम् ।
दशमे कर्मदा प्रोक्ता लाभे लाभप्रदा भवेत् ॥ १०८ ॥

---

१. A.D. द्रेक्काणे. २. C. स्वशुभा. ३. B. यथेव. ४. C.D. विज्ञेयं तदेव. ५. A.B.D. शुभतरे प्राप्ते पापमंशमशोभनम्. C. शुभतरे ज्ञेयः पापमंशमदो भवेत. ६. V.C. स्वत्वनाशनम्. ७. A.C. सुतवृद्धिं च लाभे. D. सुत वृद्धः स्याल्लाभे. ८. D. च. ९. C. ज्ञेयो, १०. C. युक्ता.

व्यये व्ययवती राजंस्तथा धनविवर्जिता ।
[1]अर्धबिम्बाधिके क्षीणे क्रमादथ निबोध मे ॥ १०९ ॥

चन्द्रे लग्नगते ज्ञेया क्षिप्रनाशा महाभुज ।
द्वितीये च दरिद्रा स्यात्तृतीये धनसंयुता ॥ ११० ॥

[2]बह्वनर्था चतुर्थे स्यात् पुत्रनाशाय पञ्चमे ।
षष्ठे रिपुविनाशाय भार्यानाशाय सप्तमे ॥ १११ ॥

अष्टमे मरणायोक्ता नवमे [3]धर्मघातिनी ।
धनान्विता स्याद्दशमे लाभे लाभवती भवेत् ॥ ११२ ॥

व्यये व्ययवती [4]नित्यं दरिद्रा च तथा भवेत् ।
लग्ने मृत्युकरो भौमस्तथा दारिद्र्यदो धने ॥ ११३ ॥

कीर्तिं त्रिभुवने शुभ्रां तृतीयस्थः करोत्यसौ ।
चतुर्थे बन्धुनाशः स्यात् सुतनाशस्तथा सुते ॥ ११४ ॥

अरिनाशस्तथा षष्ठे सप्तमेऽग्नौ विनश्यति ।
अष्टमे कर्तृमरणं नवमे देशविच्युतिः ॥ ११५ ॥

दशमे कर्मसिद्धिः स्याल्लाभे लाभवती भवेत् ।
धनजायात्मजैर्नित्यं वियोगो व्ययगे भवेत् ॥ ११६ ॥

बुधो लग्ने [5]धनयुता द्वितीये च तथा भवेत् ।
तृतीये वरदा प्रोक्ता चतुर्थे धनसंयुता ॥ ११७ ॥

कीर्तिश्च [6]पञ्चमे ज्ञेया षष्ठे रिपुविनाशिनी ।
सुखदा सप्तमे ज्ञेया हर्षदा च तथाष्टमे ॥ ११८ ॥

सौख्यदा नवमे राजन् दशमे कर्मवृद्धिदा ।
स्थिरा [7]लाभवती ज्ञेया व्यये धनसमन्विता ॥ ११९ ॥

जीवे धनाढ्या लग्नस्थे द्वितीये च तथा भवेत् ।
दृढास्पदा तृतीये स्याच्चतुर्थे [8]धनसंयुता ॥ १२० ॥

---

१. C. अर्धबिम्बादिके. D. omits व्यये...तथा भवेत्. २. C. बह्वनर्थं. ३. C. धर्मपातिनी. ४. V. नित्ये. ५. V. धनयुतो. ६. B. पंचमी. ७. B.V. लाभगते. ८. A.B.D. धनसंपदा.

पञ्चमे सुतदा प्रोक्ता षष्ठे [1]शत्रुविनाशिनी ।
सप्तमे राज्यदा कर्तुरष्टमे च समृद्धिदा ॥ १२१ ॥

कीर्तिदा नवमे ज्ञेया दशमे [2]च समृद्धिदा ।
लाभस्थे लाभदा ज्ञेया व्यये लाभसमन्विता ॥ १२२ ॥

लग्नस्थे निश्चला शुक्रे सर्वकामप्रदा भवेत् ।
धनगे च धनं दद्यात्तृतीये भ्रातृवृद्धिदा ॥ १२३ ॥

चतुर्थे सुभगा ज्ञेया पञ्चमे सुतवृद्धिदा ।
षष्ठे पूज्या तथा लोके सप्तमे धनवृद्धिदा ॥ १२४ ॥

अष्टमे सुखदा [3]ज्ञेया नवमे च सुखार्थदा ।
दशमे लोककान्ता [4]स्यादरिनाशस्तथायुगे ॥ १२५ ॥

तथा [5]व्ययस्थे विज्ञेया सव्यथा सधना तथा ।
मृत्युदा लग्नगे [6]सौरे [7]दरिद्रा स्याद् द्वितीयगे ॥ १२६ ॥

तृतीये धनलाभाय [8]चतुर्थे कर्तृमृत्युदा ।
सुतगे सुतनाशः स्यादरिनाशस्तथारिगे ॥ १२७ ॥

जायानाशस्तु जायास्थे मृत्युर्मृत्युगृहोपगे ।
धर्मगे धर्महानिः स्यात् कर्मवृद्धिस्तु कर्मगे ॥ १२८ ॥

महीलाभस्तु [9]लाभस्थे व्ययगे च व्ययो भवेत् ।
शून्यं [10]विवर्जयेत् केन्द्रं शुभान् केन्द्रे नियोजयेत् ॥ १२९ ॥

एवं ज्ञात्वा शुभं [11]कालं प्रयत्नेन तु दैववित् ।
छायाम्बुभिः प्रयत्नेन गृह्णीयादवधानतः ॥ १३० ॥

शुभेऽह्नि पूर्वं यन्त्रस्थं तत्कालं प्रतिमां स्वयम् ।
समां तु पीठिकां गर्ते स्थपतिर्विनिवेशयेत् ॥ १३१ ॥

तत्कालमेव कुर्वीत नाम चास्याः समाहितः ।
[12]स्वस्थां तां तु स्वनाम्नान्ते वैष्णवी प्रतिमा भवेत् ॥ १३२ ॥

---

१. A.C. –विनाशनी. २. A.C. न. ३. C. प्रोक्ता. ४. A. –रिनाशा तथा. ५. A. व्यवस्थे. ६. V. सौरी. ७. A.B. दरिद्राः. ८. C. चतुर्थौ. ९. C. कर्मस्थे. १०. B. विवर्जयेत्केन्द्रे. ११. A. शुभं कार्यं. १२. A.B. स्वस्थं ता तु स्वनाम्नाते. C. स्वास्यन्तां तु स्वनाम्नोन्ते. V. स्वनां नान्ते.

[1]केशवान्ताः [2]स्त्रियस्कार्या नाथान्तो ब्राह्मणो भवेत् ।
ईश्वरान्ता हरस्योक्ता मिहिरान्ता [3]रवेः स्मृता ॥ १३३ ॥

अन्येषां देवनामान्ताः सुराणां प्रतिमाः स्मृताः ।
सूक्ष्मा तु प्रतिमा कार्या द्वितीया चाधिवासने ॥ १३४ ॥

चित्रकर्मकरा या च मृण्मयी या तथा भवेत् ।
तस्याः पवित्रके कार्यं तथा चैवाधिवासनम् ॥ १३५ ॥

संवत्सरं तु कर्तव्यं षण्मासानथ वा पुनः ।
पक्षं द्वादशरात्रं वा सप्ताहं त्र्यहमेव वा ॥ १३६ ॥

एकाहमेकरात्रं वा यथावदधिवासनम् ।
विभवेनातिमहता [4]गीतैर्नृत्तैः सुशोभनैः ॥ १३७ ॥

[5]नित्यमन्नप्रदानैश्च वह्निपूजाभिरेव च ।
[6]निजपुण्याहघोषेण कर्तव्यमधिवासनम् ॥ १३८ ॥

ततः प्रतिष्ठा कर्तव्या काले [7]संवत्सरोचिते ।
शुभे काले कृता सा तु परा वृद्धिकरी भवेत् ॥ १३९ ॥

राज्ञां प्रजानां कर्तुश्च तथा कालविदो नृप ।
ऋत्विजां च महाराज शुभकालकृता हिता ॥ १४० ॥

सुलक्षणा [8]लक्षणसंयुता च देशे कृता शास्त्रविदा तु सम्यक् ।
काले शुभे लोकसुखावहा स्यात् कर्तुः प्रशस्ता वरदानसौम्या ॥१४१॥

**इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे प्रतिष्ठाप्रतिमालक्षणे कालनिर्देशोनाम ॥ ९६ ॥**

---

१. B. केशवान्तः. २. A B. स्त्रिया कार्या. ३. B. रवैः स्मृताः. ४. C. गीतर्नृत्तैस्सु- V. गीतैर्नृत्यैः. ५. V. नित्यमम्बुप्रदानैश्च. ६. A.B.C. द्विज. ७. A B. सांवत्सरोचिते. ८. C. लक्षणसंयुते च देशा.

## सप्तनवतितमोऽध्यायः ।

वज्र उवाच— भगवन् केन विधिना प्रतिष्ठा कृता भवति ।

मार्कण्डेय :— अथ सुर[1]प्रतिष्ठापने षोडशर्त्विजो भवन्ति ।

एतद्यथा दैववित् स्थपतिः कल्पकः वाचकः यजुर्वेदविदर्धबाहुः यजुर्वेदविद्देवहोता यजुर्वेदविद्देवद्रव्यरक्षिता ऋग्वेदविद्यजुर्वेदवित् सामवेदविदथर्ववेदविदिति चत्वारः कलशाधाराश्चत्वारस्सात्त्वचतुर्थो तास्तेषामेको मूर्तिधरः द्वितीयो देवकर्मवित् । तृतीयो मन्त्ररक्षिता द्रव्यरक्षितेति । तत्र कलशाधाराणां शक्त्या सहायाः कर्तव्याः । सर्व एव [2]ऋत्विजोऽव्यंगा अकपिला अकेकरा अनधिकाङ्गाः स्वशास्त्र-परिनिष्ठिताः [3]श्लक्ष्णाः अपौनर्भवाश्चेति । ततः प्रशस्तेऽह्नि [4]तैस्सहायैः सुस्नातैः स्वनुलिप्ताङ्गैर्माल्यवद्भिर्हविष्याशिभिश्चाहतास्वरसंवीतैः पवित्र-पाणिभिः सह दीक्षां यजमानो गृह्णियात् । तस्य स्नातस्याहतवसन-संवीतस्य गोमयेनोपलिप्ते देशे ब्राह्मणाः स्वस्तिवाचनपूर्वकवचनेन कल्पकः [5]कङ्कणं बध्नीयात् सितसूत्रेण [6]सितवस्त्रेण सिद्धार्थकवचान् बद्ध्वा दक्षिणपाणौ प्रतिसरं [7]कङ्कणं बध्नीयात् । ततः प्रभृति याव-त्प्रतिष्ठाकालं प्रतिष्ठाकालादुपरि च सप्तरात्रं तावन्मां [8]समद्यक्षारा-ब्रह्मचर्यक्रोधेर्ष्यामानानार्यत्व[9]वर्जनीयानि भवन्ति । भवति चात्र

दीक्षादिनात्प्रभृत्येवं प्रतिष्ठा [10]सप्तमे दिने ।
यावत्ताव[11]द्भवेन्नित्यं यजमानः सुयन्त्रितः ॥ १ ॥

ब्रह्मचारी हविष्याशी जितक्रोधो विमत्सरः ।
अधःशायी च राजेन्द्र नित्यस्नायी तथैव च ॥ २ ॥

इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे प्रतिष्ठाकल्पे दीक्षाध्यायो नाम ॥ ९७ ॥

---

१. C. प्रतिष्ठा पोडशषड्विजा भवन्ति. B. प्रतिष्ठापने षोडषर्षिजे भवन्ति. २. A. ऋत्विजोऽव्यंगाः अकपिलाः अकेकराः अनधिकाङ्गाः. ३. A.B. लक्षणाः. ४. B. तस्मैहायैः. ५. V. omits कंकणं बध्नीयात्. ६. A.B. सितवस्त्रे. ७. A.B. omit कंकणं. ८. A. –समध्यक्षीरा. ९. C. विवर्जनीयानि. १०. A.B. सप्तमे दिनम्. C. सप्तमं दिनम्. ११. V. –द्भवान्नित्यं.

## अष्टनवतितमोऽध्यायः ।

मार्कण्डेय :— अथ प्रासादलक्षणम् । पुरतो वा सुशुद्धे भूभागे स्थण्डिलत्रयं परिकल्पयेत् । यथावर्णोक्तमृदा [1]ससिकतया । ततः [2]स्थण्डिलत्रयमपतितगोमयेनोपलेपयेत् । तत्र मध्येऽधिवासनस्थण्डिलम् । [3]तद्दक्षिणेनेज्या स्थण्डिलम् । तदुदक्होमस्थण्डिलम् । [4]तत्राधिवासनास्थण्डिले चत्वारस्तोरणाः परिकल्प्यन्ते । सर्वे स्थण्डिला[5]श्चत्वारश्चाश्चतुर्हस्तोच्छ्रायास्तोरणत्रिभागविस्तीर्णाः । स्थण्डिलद्वय आर्द्राभिः [6]शिखाभिः पताकाभिः प्रतिसराभिश्च परिवारयेत् । वनप्रवेशोक्तेन विधिना प्रशस्तवृक्षाणामन्यतमस्य वृक्षस्य [7]तोरणार्थे काष्ठान्यानीय [8]स्थण्डिलेभ्य उपस्थापयेत् । न तोरणं काष्ठद्वयजं कुर्यात् । न कुब्जम् । तोरणाश्च सर्वे समप्रमाणाः । आदावेवाधिवासनस्थण्डिलस्य पश्चिमभागे । प्राङ्मुखः कल्पकः स्वामी न स्यात् । कल्पकाद्दक्षिणे भागे प्राङ्मुख एव [9]सात्त्वतः स्यात् । तस्यापि दक्षिणे भागे प्राङ्मुख एव ऋग्वेदविद्भवेत् । कल्पकाद्वामभागे प्राङ्मुख एव यजमानः । तस्य वामतः प्राङ्मुख एव अर्धबाहुः [10]स्थण्डिलाश्रितो दक्षिणाभिमुखो यजुर्वेदवित् । स्थण्डिले पूर्वतः पश्चिमाभिमुखः सामवेदवित् । तस्य दक्षिणतो वंशवादकः । तस्यापि दक्षिणतो वाचकः । तस्योदग्गायनः । पृष्ठे [11]वादनकनर्तकाः । स्थण्डिलाद्दक्षिणतः उत्तराभिमुखोऽथर्ववेदवित् । होमस्थण्डिले प्राङ्मुख[12]आगारात्पश्चिमतो होता । चतुरस्रस्समन्ताद्धस्त[13]प्रमाणाश्चागारास्समेखलाः । तस्योदङ्मन्त्ररक्षिता द्रव्यरक्षिता च । इज्या स्थण्डिले इज्या[14]कृत्सात्त्वतः । तद्दक्षिणतः उत्तराभिमुखो मन्त्ररक्षिता द्रव्यरक्षिता च । [15]सांवत्सरोऽन्यत्रैक[16]चित्तकालग्रहणावहिताः स्यात् । स्थपतेरनियमः । ततस्सौवर्णे

---

१. A.B. ससिकितया. २. B. स्थंडिय-. ३. V. तद्दक्षिण इज्या-. ४. V. तत्राधिवासना. ५. V.C. चतुरस्राश्चतुर्हस्तो-. ६. V.B. omit शिखाभिः. ७. V. तोरणार्थं. ८. B. स्थण्डलेभ्य. ९. A. सान्त्वतः. B. सांत्वतः. १०. B. स्थण्डिलानितो. ११. V. वादन कतन्तकाः. C. वादनकरन्तकाः. १२. A.B.V.D. अगारा-. १३. V.B. मानश्चागारः समेखलः. १४. A. -कृत्सान्त्वतः. १५. V.B. संवत्सरोन्यत्रैकवित्त-, १६. A. वित्तकालग्रहणावर्हिता. V. °णावह्रितः.

राजतं[1] ताम्रं मृण्मयमकालमूलं वा कलशं सुदृढं तीर्थोदकपूर्णं सर्वौषधिभिः सर्वगन्धैः सर्वबीजैः सर्वरत्नैर्हिरण्येन चन्दनेन फलैश्च संयुतं कृत्वा [2]अनुलेपनार्थनिर्मितपवित्रमुखे सति सूत्रमाल्यग्रीवं कल्पकः पुरतः प्रतिष्ठापयेत्। कलशः पूर्वेण। स्थण्डिलमध्ये अष्टपत्रं कमलमालिखेत्। ततः कर्मारम्भं कुर्यात्। प्रणवव्याहृति[3]पूर्विकां गायत्रीं सशिरस्कां जपेत्। ॐकारं नमस्कारं कर्मारम्भं पवित्रं चेति। ततः स्तोत्रं [4]कश्चिद्वाचयेत्। ततो रक्षोघ्नैर्मन्त्रैर्दिक्षु विदिक्षु च [5]सिद्धार्थकान् न्यसेत्। ततो [6]द्वादशाङ्गुले खाते वनस्पतौ [7]वीत्वङ्ग इति प्राच्यादिक्रमेण तोरणन्यासं कुर्यात्। तोरणाश्चत्वारो युगा भवन्ति। पूर्वतः कृतयुगः, दक्षिणस्त्रेता, पश्चिमे द्वापरः, [8]उत्तरे कलिरिति। एवं तोरणन्यासं कृत्वा [9]युवा सुवास इति दर्भैरशुष्कपत्रैः स्रग्दामभिश्च तोरण[10]चतुष्कं चापि वेष्टयेत्। ततस्तोरणानामुपरि ध्वजाः कर्तव्याः। पूर्वेण पीतपताको गरुडः, दक्षिणेन नीलपताकस्तालः, पश्चिमेन श्वेतपताको मकरः, उदग् रक्तपताको ऋष्यः। गरुडस्य पार्श्वयोर्गदाचक्रे, तालस्य हलमुसलौ, मकरस्य धनुर्बाणौ ऋष्यस्य [11]खड्गचर्मौ। तोरणान्तराले आग्नेये दिग्भागे च्छत्रम्। नैर्ऋत्यां वैजयन्तीं [12]पताकाम्। वायव्यां ध्वजम्। ऐशान्यां दण्डम्। स्थण्डिलोपरि वितानकम्। तोरणं प्रतिघण्टामादर्शं च। इज्यास्थण्डिले वितानकम्। तत्र च [13]घटलिखिताः प्रतीहाराः सुभद्रभद्रौ पूर्वेण। आषाढ[14]यज्ञतातौ दक्षिणेन। जयविजयौ पश्चिमेन। [15]मोदप्रमोदौ उत्तरेण। एतत् कृत्वा [16]ध्रुवा द्यौरित्युदाहरेत्। माथुरं च मन्त्रं व्याचक्षेति। ततः कलशोदकेन पवित्रमन्त्रेण यजमानऋत्विजां भोगांश्चाभ्युक्ष्य गायत्रीं जपेत्। या ओषधयश्चेति तत्रैशानीदिक् प्र-

१. C. रजतं. २. A.B. अनुलेपनार्था–. ३. A.B. पूर्वकां. ४. A.B. किंचिद्वाचयेत्. ५. C. सिद्धार्थकान्यसेत्. ६. A. द्वादशांगुल्ये. ७. V.C. वीङ्वङ्ग. ८. C. उत्तरस्कलिरिति. ९. A. यवा सुवासा. १०. C. चतुष्कमपि. ११. V. खड्गचर्म. B. खड्गचर्मा. १२. V.C. पाताकाम्. १३. V. घटिलिखिताः. १४. B. –यज्ञततौ दक्षिण. १५. C. मदप्रमादुत्तरेण. A. मदप्रमोदौ उत्तरेण. १६. V.C. ध्रुवाद्यावित्युदाहरेत्.

भूतिषु [1]सपुंखान् सफलान् दृढाञ्छरांश्चत्वारो निखनेत्। तेषां नामानि--कंदर्पः, [2]सौमनः, दुर्धरः, शिखरः। तेषां चत्वारो लोकपालाः इन्द्रयमवरुणधनदाः। तेषां च निवेशने काण्डात्काण्डादित्युदीरयेत्। ततः पञ्चरङ्गं सूत्रं काण्डात्काण्डेति बध्नीयात्। तेनैव दिशः परिवारयेत्। पञ्चरङ्गत्वात् पञ्चसूत्रं पञ्चमहाभूतमयं संसारसूत्रम्। नीलं पृथ्वी, श्वेतमापः, रक्तमग्निः, [3]पीतो वायुः, [4]कृष्णमन्तरिक्षम्। [5]तद्बन्धेन दूष्यादूष्येति [6]मन्त्रो भवति। इन्द्राण्या कीर्तितं सूत्रमिति च ततः [7]काण्डे मूलेषु [8]स्थण्डिलाभ्यन्तरे च चतुष्षु [9]दिक्षु चत्वारः पूर्णकुम्भान् प्रतिष्ठापयेत्। ते चत्वार[10]स्सागरा ज्ञेयाः तत्राप्यैशान्यां दिशि प्रथमं कुम्भं प्रतिष्ठापयेत्। ततः क्रमेणान्यान्। तेषां नामानि सहस्रवीर्यः, विमलः, शतधारः, [11]प्रमन्दनः। तांश्च सहिरण्यान् सचन्दनान् सकुसुमान् सवनस्पतिकलापान् कुर्यात्। तत्र शन्न आप इति प्रथममभिमन्त्रयेत्। शन्नो [12]देवीरिति द्वितीयम्। आपोहिष्ठेति तृतीयम्। इदमापः प्रवहत इति चतुर्थम्। ततः पूर्वेण [13]लाजापूर्णं पात्रं स्थापयेत्। दक्षिणेन [14]तिलपात्रम्। पश्चिमेन [15]सिद्धार्थपात्रम्। उदगक्षतपात्रम्। [16]पात्रविशेषेण [17]आब्रह्मन्ब्राह्मण [18]इत्युदीरयेत्। [19]ततश्चतसृषु विदिक्षु [20]कुम्भानामभ्यन्तरे चत्वारो दीपा देयाः। ते च वेदा ऐशानीप्रभृति ऋग्यजुस्सामाथर्वाणः। तेषां च निवेशने तेजोसिशुक्रमित्युदीरयेत्। ततः पुनरपि रक्षोघ्नैर्मन्त्रैस्सिद्धार्थ[21]विकिरणं कुर्यात्। ये देवाः [22]पुरस्सदोमिति जपेत्। वाराहं प्रादुर्भावं च वाचयेत्। [23]श्रीसूक्तमुदीरयेत्। [24]ततस्तेन पञ्चगव्येन भुवनमभ्युक्षयेत्। तोरणानि

---

१. C. --सुपुंखान्स--. २. V. सोमनः. ३. V. पीतं. ४. A.B.C. कृष्णोंतरिक्षः. ५. A.B. तद्वंधने. ६. A.B.C. मंत्रे. ७. V. काण्डे. ८. V. स्थण्डिलाभ्यन्तरेण चतुर्षु. ९. A B. omit दिक्षु. १०. V. --स्सामरा. ११. C. ततस्क्रमेणन्यासम्. १२. A.B. प्रमर्दनः. १३. C. देव इति. १४. B. लाजापूर्णां. १५. A. बिल्वपात्रम्. १६. A.B. सिद्धार्थकपात्रम्. १७. C. पात्रशेषेण. B. पात्रविशेष. १८. A.B. आब्रह्मन्ब्रह्मण. १९. B. इत्युदेरयेत्. २०. A.B.C. ततश्चतुर्षु. २१. C. कुम्भानापथन्तरे. A. कुंभानामंतरे. २२. A.B. विकरणं. २३. C- पुरस्सद इति. २४. C. श्रीसूक्तं वोदीरयेत्. २५. A.B.C. omit ततस्तेन...अर्घ्यः।

च ( अर्चां शौचार्थं च स्थापयेत् । बृहत्स्नपने तद्देवं स्थादन्यं नावकल्पयेत् । ) अथार्घ्यः ।

एवं तोरणविन्यासे कृते भूपतिसत्तम ।
सर्वे विघ्नाः क्षयं यान्ति परा वृद्धिश्च जायते ॥ १ ॥

इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे प्रतिष्ठाकल्पे [1]तोरणाध्यायो नाम ॥ ९८ ॥

---

१. V. तोरणवर्णनो.

## नवनवतितमोऽध्यायः।

मार्कण्डेय :— अथ [1]पञ्चगव्यकल्पना भवति। तत्र [2]कपिलाया(? याः) [3]गोक्षीरं, कृष्णायाश्च दधि, नीलायाश्च घृतम्। श्वेताया गोमयं, [4]ताम्रवर्णायाः गोमूत्रं, गायत्र्या गोमूत्रं गृह्णीयात्, गंधद्वारेति गोमयं आप्यायस्वेति क्षीरम्, [5]दधिक्राव्णेति दधि, [6]घृतवति भुवनानामिति घृतम्। देवस्य-त्वेति कुशोदकम्। अघमर्षणेन संयोज्य गायत्रीमुदीरयेत्। ततस्तेन पञ्चगव्येन [7]भवनमभ्युक्षयेत्। तोरणानि च, [8]अर्चाशौचार्थं च स्थापयेत्। बृहत्स्नपने तदेव स्यादन्यं वा कल्पयेत्। अथार्घ्यकल्पना। भवति तत्र राजते पात्रे शंखबिल्वपद्मोशीरदर्भमूल[9]दूर्वाक्षीराक्षत सिद्धार्थक[10]तण्डुलान्युपकल्पयेत्। तीर्थोदकेन प्लावयेत्। [11]रथेति अक्षमन्त्रमुदीरयेत्। द्रविणं पापमन्यः द्रुपदं पवित्रं शङ्खमणिं श्रीसूक्तं काण्डात्काण्डेति पवित्रं च ततः शुभे दृढे स्वर्चिते भाण्डे पाद्यं कुर्यात्।

हिरण्यवर्णेत्यारभ्य ऋक्त्रयेण [12]च पार्थिव।<br>
आपो हि ष्ठेति तिसृभिः शन्नो देवीति चाप्यथ॥ १॥

ब्रह्मशुक्रेण सूत्रेण पवित्रेण तथैव च।<br>
वाचको वाचयेत्तत्र तीर्थमाहात्म्यमुत्तमम्॥ २॥

इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे प्रतिष्ठाकल्पेऽर्घ्यपाद्यपञ्चगव्यविधिः॥ ९९॥

---

१. V. पञ्चगव्यानि। २. A. कपिलाया गावः. B. कपिला गावः. ३. V. गोः क्षीरम्. ४. C. ताम्राया गोमूत्रम्. V. ताम्रवर्णाया. ५. A. दधिकाव्णोति. B. दधिकाष्णोति. ६. A.B. घृतवतीति घृतं. ७. A. भुवनमभ्युक्षयेत्. ८. V. अर्चाशौचार्थमवस्थापयेत्. ९. C. –दूर्वाक्षीराकृत-सिद्धार्थ–. १०. V. तण्डुलानुपकल्पयेत्. A.B. तण्डुलानि उपकल्पयेत्. ११. V. रथ अक्षेति. C. रथे अक्षेति. १२. C. द्रु.

## शततमोऽध्यायः ।

मार्कण्डेयः— अथार्चाशौचं भवति । [1]तत्र मृण्मयां चित्रकर्मकृतां च [2]शौचयेत् । उभयोर्दर्भपवित्रके शौचं [3]कुर्यादधिवासनं च [4]यद्द्रव्यं तद्द्रव्योक्तशौचं [5]चादावेव कुर्यात् । ततोऽम्बुना गायत्र्या कुर्यात् । [6]आक्राम्येति द्वितीया मृदा [7]अयं चात्रापरो मन्त्रो भवति ।

अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरे ।
मृत्तिके हर मे पापं यन्मया दुष्कृतं कृतम् ॥ १ ॥

उद्धृतासि वराहेण कृष्णेन शतबाहुना ।
[8]मृत्तिके त्वं प्रयच्छेष्टं सर्वकामप्रदा भव ॥ २ ॥

तृतीयं भूतिस्त्वमिति भस्मना । इह गाव इति चतुर्थं गोमयेन । विष्णोः पृष्ठमसीति पञ्चमं गौरसर्षपैः । बृहत्साम्ना षष्ठं त्रेताग्निभस्मना । [9]शाकरेणेति सप्तमं पञ्चगव्येन । [10]मनसः काममाकूतिरित्यष्टमं [11]कुष्ठेन । हिरण्यवर्णेति नवमं सुवर्णोदकेन । [12]तरत्समन्दीति दर्भपिञ्जलैर्दशमम् । पावमानीभिस्तीर्थमृत्तिकाभिरेकादशम् । नदीमृदा द्वादशम् । गिरयस्ते पर्वताग्रमृदा त्रयोदशम् । ऋषभेण [13]जातशृङ्गेणोद्धृतमृदा चतुर्दशम् । अश्वक्रान्तेति लाङ्गलोद्धृतमृदा पञ्चदशम् । कूष्माण्डीति वल्मीकाग्रमृदा [14]षोडशम् । [15]पृथिवीदेवीति मन्त्रेण तीर्थमृदा सप्तदशम् । सरोमृदा ब्रह्मजज्ञानेत्यष्टादशम् । दधिक्राव्णेति दध्ना एकोनविंशम् । [16]घृतवतीति घृतेन विंशतीतमम् । अघमर्षणेन [17]रत्नैरेकविंशम् । [18]एवमेकविंशत्यात्मकेन [19]शौचेन तां शौचयित्वा परमपावना मन्त्रा जप्तव्याः ।

---

१. C. तत्र स्पन्दायां चित्रकर्मकृतां. २. B. शोचयेत. ३. B. कुर्यादधिवासे च. ४. A.B. यद्द्रव्यमयमर्चा तद्द्रव्योक्तशौचं. ५. B. चादेवेव. ६. A. अक्रम्येति. B. आक्राम्येत. ७. A.B.C. इदं चात्रापरं मन्त्रं. ८. B. मृत्तिकं. ९. A.B.C. शाकरेण सप्तमं. १०. A. मनसा. ११ A.B. कुष्ठेषु. १२. A.B. तरत्समंदीति. १३. A.B. जातशृंगोद्घृतमृदा. १४. B. षोडशे. १५. V. पृथ्वीदेवीति. १६. घृतवती घृतेन. १७. A. रत्नैरेकविंशे. C. रत्नैरेकविंशतितमम्. १८. A. एकमेक. १९. V.C. सोमेन.

अघमर्षणं देवकृतं शुद्धवत्यस्तरत्समाः ।

कूष्माण्डाः पावमान्यश्च दुर्गा देवी सरस्वती ।
चान्द्रायणं च [1]वृषभं वासुदेवं रथन्तरम् ॥ १ ॥

पौरुषं च तथा सूक्तं [2]श्रीसूक्तमथवाप्सरम् ।
अभिज्ञां च पवित्रं च चरितं वैष्णवं तथा ॥ २ ॥

वादित्रशब्दैर्जयशब्दमिश्रै[3]र्नृत्तैस्तथा भूप वराङ्गनानाम् ।
शौचे निवृत्ते [4]त्वधिवासनं वै कार्यं सुरार्चासु यथाभिधास्ये ॥ ३ ॥

इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे [5]अर्चाशौचाध्यायो नाम ॥ १०० ॥

---

१. V.C. ऋषभं वामदेवं. २. A.C. श्रीसूक्तमथमाधुरम्. ३. V.C. –र्वृत्तैस्तथा.
४. A.B. पश्चादधिवासनं. ५. V. अर्चाशौचकथनं.

## एकाधिकशततमोऽध्यायः।

मार्कण्डेय :— अथार्चाशौचानन्तरं पवित्रकस्यार्चायाः [1]वाधिवासनं कुर्यात्। तत्र कमलकर्णिकायां ध्रुवा द्यौरिति मन्त्रेण [2]दक्षिणशिरस्कं प्राक् शिरसं वा [3]शय्यायां स्थापयेत्। अतः पञ्चवर्णैः पञ्चभिरास्तरणैरा[4]स्तरेत्। [5]शुद्धावत्यश्चोदीरयेत्। ततो युवा सुवासा इति प्रच्छादनपटं दद्यात्। गण्डोपधानं च। ततो गर्भमयं सप्तशीर्षमनन्तं नागं कुर्यात्। तं च शयने स्थापयेत्। ततो जीवस्यावाहनं कुर्यात्। शिवसंकल्पं चोदीरयेत्। [6]ततस्त्वनन्तमावाहनं प्रयोजयेत्। ततोऽर्ध्यपाद्यमाचमनीयमनुलेपनमाल्यदीपधूपमधुपर्कप्रापणकमात्राभिः प्रत्येकं [7]सावित्रेणानन्तरमर्चयेत्। [8]ततः सर्पसाम। नमोऽस्तु सर्पेभ्य [9]इति योगे योगेति मन्त्रं चोदीरयेत्। अनन्तमाहात्म्यं च [10]वा वदेत्। ततो [11]ध्रुवा द्यौरिति मन्त्रेणानन्तोपरि [12]श्रीभगवदर्चां पवित्रके स्थापयेत्। ततो जीवस्यावाहनं कुर्यात्। शिवसङ्कल्पं जपेत्। ततो भगवन्तमावाहयेत्। ततः सर्वे [13]भून्यस्तजानवः प्रणामं कुर्युः आगतश्च [14]भगवानिति ब्रूयुः। ततः शङ्खपटहभेरीजयशब्दैः पूजयेयुः। ततोऽर्घ्यपाद्याचमनीयस्नानीयानुलेपनमाल्यधूपदीपमधुपर्कप्रापणकमात्रादानैः श्रीभगवन्तं प्रत्येकं सावित्रेणार्चयेत्। ततः स्वस्ति न [15]इन्द्र इति जपेत्। ततो युवा सुवासा इति श्रीभगवन्तं महता वासोयुगेनाच्छादयेत् [16]युञ्जते मन इति पुष्पैरवकिरेत्। बोधश्च मा प्रतिबोधश्चेति सिद्धार्थैरवकिरेत। प्रादुर्भावानिति वाचयेत्। एवमधिवासनं कार्यम्। [17]अधिवासिते च भगवति अर्चास्थण्डिले वेदिं प्रतिष्ठाप्य आसनानि [18]पादपीठानि च अर्चाशौचविधानेन वेदि-

---

१. V. पश्चादधि–. २. A. दक्षिणां शिरस्कां. B. दक्षिणा शिरस्कं. ३. A.B.C. शय्यां. ४. V. शस्तरयेत् ५. A B. शुद्धवत्य– ६. V. ततस्त्वनन्तस्यावाहनं. ७. A.B. सावित्रेनान्तर–. ८.. C. ततस्तु. ९.. B. इति योगेति मंत्रं. १०. A.B. वाचयेत्. ११. C. ध्रुवाद्याविति. १२. C. omits श्री. १३. C. भून्यस्त. १४. A. भगवनिति. १५. B. न इति इन्द्र जपेत्. १६. C. युञ्जति. १७. B. अधिवसते च भवगति. C. भवति. १८. C. पाठपीठानि.

मासनानि च [1]शौचयेत् । ततः शङ्करगीतोक्तविधिना इज्यां [2]सात्त्वतः कुर्यात् । इज्यासमकालमेव [3]होमस्थण्डिले होता होमं त्रेदी शौचमासनानां सकृदेव [4]विधीयते ।

इज्याहोमौ तु कर्तव्यौ प्रत्यहं [5]त्वधिवासिते ।
पूजनं [6]गीतनृत्तैश्च प्रतिष्ठा [7]यावदागता ।
अधिवासनमेतत्ते मया [8]सम्यगुदाहृतम् ॥ १ ॥

इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे अधिवासनाध्यायो नाम ॥ [illegible]

---

१. V. शोधयेत्. २. A. सांत्वतः ३. B. होमकुंडिल होता होमं देवीशौचं आसनानां. ४. V. विधत्ते. ५. B. त्वधिवसिते. ६. V. -नृत्यैश्च. ७. A. यादवागता. ८. C. सम्यगुदाहृता.

## द्व्युत्तरशततमोऽध्यायः ।

मार्कण्डेय :— आवाहयाम्यहं जीवं बीजं सर्वगतं प्रभुम् ।
[१]पञ्चधावस्थितं देहे [२]पञ्चधावस्थितं पुनः ॥ १ ॥

वायव्येन तु भावेन पञ्चधावस्थितं [३]सदा ।
आग्नेयेन तु भावेन पञ्चधावस्थितं तथा ॥ २ ॥

वारुणेन च भावेन पञ्चधावस्थितं प्रभुम् ।
भूतात्मकत्वेन तथा पञ्चधावस्थितं पुनः ॥ ३ ॥

परमात्मानमत्युग्रम[४]नुजं जगदीश्वरम् ।
सर्वगं सर्वधातारं सर्वेशमपराजितम् ॥ ४ ॥

अत्यर्थसूक्ष्मं वरदं क्षेत्रज्ञं [५]प्रभुमीश्वरम् ।
भूतभव्यभविष्यस्य प्रभुं लोकनमस्कृतम् ॥ ५ ॥

गुणाधारं जगद्योनिं महद्भ्योऽपि महत्तरम् ।
[६]जीवदेव त्वमभ्येहि [७]प्रविशार्चामिमां स्वयम् ॥ ६ ॥

कुरुष्व देवदेवेश [८]सजीवं च तथानघ ।
इदमर्घ्यमिदं पाद्यं धूपोऽयं प्रतिगृह्यताम् ॥ ७ ॥

[९]इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे जीवावाहनाध्यायो नाम ॥ १०२ ॥

---

१. V. पञ्चभावस्थितं. २. V.C. पञ्चधा च स्थितं. ३. V. पुनः. ४. V.C. –नुमं. ५. B. प्रभुरीश्वरम्. ६. C. जीवदेह. ७. A.B. प्रविश्यार्चातिमां. ८. A.B. सजीवां. ९. C. omits the पुष्पिका.

## त्र्युत्तरशततमोऽध्यायः ।

वज्र उवाच— आवाहनानि मे ब्रूहि देवतानां भृगूत्तम ।
भवन्त्यावाहिता मन्त्रैर्यैस्सा[1]स्सन्निहिताः सुराः ॥ १ ॥

मार्कण्डेय :— आवाहनानि ते वच्मि देवानां यदुनन्दन ।
अथोक्तवर्जं केषांचित् केषांचित् पुनरेव [2]ते ॥ २ ॥

सर्वस्यावाहनस्यान्ते श्लोकार्धं [3]परिकीर्तयेत् ।
इदमर्घ्यं च पाद्यं च धूपोऽयं प्रतिगृह्यताम् ॥ ३ ॥

आवाहयाम्यहं देवौ नासत्यौ सूर्यनन्दनौ ।
[4]आगच्छेतां महाभागौ [5]वरदौ चाश्विनावुभौ ॥ ४ ॥

वसूनावाहयिष्यामि देवानष्टौ वरप्रदान् ।
आयान्तु वरदा देवा वसवः पापनाशनाः ॥ ५ ॥

विश्वानावाहयिष्यामि देवानद्भुततेजसः ।
आयान्तु वरदाः सर्वे विश्वे देवा महाबलाः ॥ ६ ॥

आवाहयाम्यङ्गिरसो देवानद्भुततेजसः ।
आयान्त्वङ्गिरसो देवा महाबलपराक्रमाः ॥ ७ ॥

रुद्रानावाहयिष्यामि त्रिनेत्रान् वृषवाहनान् ।
आयान्तु वरदा रुद्रास्त्रैलोक्यवरदाः शुभाः ॥ ८ ॥

आवाहयिष्याम्यादित्यान् वरदान् दीप्ततेजसः ।
आयान्तु वरदाः सूर्याः सर्वे ते तेजसोल्वणाः ॥ ९ ॥

भृगूनावाहयिष्यामि [6]देवान् दीप्ततपोन्वितान् ।
आयान्तु [7]भृगवो देवा वरदा दीप्ततेजसः ॥ १० ॥

---

१. B. –स्सन्निहिता. २. A. च. ३. V. परिकीर्तितम्. ४. C. आगच्छतां. ५. V. वरदौ चाश्विनौ शुभौ. C. वरदात्रश्विनावुभौ. ६. V. देवान्दीप्ततपोधनान्. A. देवान्दीप्ततपोन्विताम्. ७. A. भृगुवो.

सुरानावाहयिष्यामि मरुतस्तेज[1]साधिकान् ।
आयान्तु मरुतो देवा वरदा भुवनेश्वराः ॥ ११ ॥

[2]सुरानावाहयिष्यामि सर्वानेव दिवौकसः ।
आगच्छन्तु सुराः सर्वे मन्त्रपूजाभिलाषिणः ॥ १२ ॥

दैत्यानावाहयिष्यामि महाबलपराक्रमान् ।
आयान्तु दैत्या धर्मिष्ठा देवदेवानुगा मम ॥ १३ ॥

आवाहयिष्ये गन्धर्वान् रूपद्रविणसंयुतान् ।
आयान्तु सर्वगन्धर्वा [3]वरदाः कामरूपिणः ॥ १४ ॥

यक्षानावाहयिष्यामि धनाध्यक्ष[4]समन्वितान् ।
आयान्तु वरदा यक्षास्त्रैलोक्यविदिता मम ॥ १५ ॥

आवाहयिष्यामि तथा [5]राक्षसान् विविधायुधान् ।
आयान्तु राक्षसा वीरा देवदेवानुयायिनः ॥ १६ ॥

आवाहयिष्यामि तथा विद्याधरगणानहम् ।
विद्याधराः समायान्तु विविधाः गगनङ्गमाः ॥ १७ ॥

आवाहयिष्यामि तथा किन्नरान् देवगायनान् ।
आयान्तु किन्नराः सर्वे सुस्वरास्तु सुलोचनाः ॥ १८ ॥

नागानावाहयिष्यामि भुजङ्गान् सर्पगोचरान् ।
आयान्तु वरदा नागास्त्रैलोक्यविदिता मम ॥ १९ ॥

अहमावाहयिष्यामि तथैवाप्सरसः शुभाः ।
समायान्तु महाभागा देवयोषा [6]ममोज्ज्वलाः ॥ २० ॥

अहमावाहयिष्यामि सर्वास्त्रिदशपत्नयः ।
आयान्तु वरदाः [7]सर्वास्तप्तचामीकरप्रभाः ॥ २१ ॥

---

१. V.C. साधिकाः. २. A.B. omit सुराना... पराक्मान्. ३. A.C. वरदस्काम–. ४. A.C. क्षमान्वितान्. ५. C. राक्षसान्विबुधायुधान्. ६. B. समोज्ज्वलाः. ७. B. सर्वासप्त–.

आवाहयिष्यामि तथा वरदा देवमातरः ।
आयान्तु वरदाः सर्वाः सुवेशाः सुखदाः [1]शिवाः ॥ २२ ॥

पितॄनावाहयिष्यामि सूक्ष्मरूपधरानहम् ।
आयान्तु पितरः सर्वे गणस्थास्तु पृथक् पृथक् ॥ २३ ॥

आवाहयि[2]ष्याम्यजितान् सुपर्णान् बलवत्तरान् ।
सुपर्णास्तु समायान्तु विष्णुतेजोपबृंहिताः ॥ २४ ॥

आवाहयामि वरदान् [3]सर्वानेव प्रजापतीन् ।
प्रजाध्यक्षाः समायान्तु त्रैलोक्यपरिपालकाः ॥ २५ ॥

आवाहयामि देवेन्द्रान् देवान् भुवननायकान् ।
आयान्तु देवनाथा मे वरदाः कामरूपिणः ॥ २६ ॥

मनूनावाहयिष्यामि [4]प्रभुत्वे जगतः स्थितान् ।
आयान्तु मनवः सर्वे तपसा नष्टकिल्बिषाः ॥ २७ ॥

आवाहयिष्याम्योषध्यः( ? धीः ) सर्वप्राणिधराः शुभाः ।
ओषध्यश्च समायान्तु सर्वाः कामप्रदाः शुभाः ॥ २८ ॥

ऋषीनावाहयिष्यामि तपसा द्योतितप्रभान् ।
आयान्तु ऋषयः सिद्धाः सर्वे मे [5]दीप्ततेजसः ॥ २९ ॥

शैलानावाहयिष्यामि सर्वौषधिसमन्वितान् ।
आयान्तु भूधराः शैलाः सर्वे मे स्थावरेश्वराः ॥ ३० ॥

द्रुमानावाहयिष्यामि [6]नानारूपधरानहम् ।
द्रुमाः सर्वे समायान्तु मनोमारुतरंहसः ॥ ३१ ॥

आवाहयिष्यामि तथा पातालान् सर्वगोचरान् ।
आयान्तु सर्वे पाताला [7]दैत्यस्थानमनिन्दिताः ॥ ३२ ॥

द्वीपानावाहयिष्यामि सर्वानद्भुतधारिणः ।

---

१. A.B. शुभाः. २. V. –ष्यामि तथा सुपर्णा–. ३. A. –सर्वानिह. ४. A. रक्षिणे. B. रक्षणे. ५. A.B. दीप्ततेजसाः. ६. C. नानामूर्तिधरानहम्. ७. V. दैत्यस्थानाद्य विन्दिताः.

आयान्तु द्वीपा लोकानां स्थानभूता जगत्प्रियाः ॥ ३३ ॥

लोकानावाहयिष्यामि स्थानभूतान् [1]मनोहरान् ।
आयान्तु लोकाः सकलाः सर्वे मे भूतभावनाः ॥ ३४ ॥

आवाहयिष्यामि तथा समुद्रान् जगतः प्रियान् ।
समुद्रा मे समायान्तु रसाधारा जगत्प्रियाः ॥ ३५ ॥

वर्षानावाहयिष्यामि सर्वभूताश्रयानिह ।
आगच्छन्तु तथा चेह वर्षाः सर्वमनोहराः ॥ ३६ ॥

आवाहयिष्यामि तथा चतुरः सागरानहम् ।
सागराः शीघ्रमायान्तु सर्वे तोयधरा मम ॥ ३७ ॥

[2]नदीस्त्वावाहयिष्यामि वरदा लोकमातरः ।
आयान्तु वरदा नद्यः सर्वपापहराः शुभाः ॥ ३८ ॥

आवाहयिष्यामि [3]तथा सर्वानभ्रगणानहम् ।
आयान्त्वभ्रा महाभागाः सर्वे [4]चाशुचरा मम ॥ ३९ ॥

आवाहयिष्यामि तथा पिशाचान् सर्वगानहम् ।
पिशाचास्तु समायान्तु सर्वे मे कामरूपिणः ॥ ४० ॥

[5]आवाहयिष्यामि तथा स्कन्दस्य पार्श्वगानहम् ।
नानारूपाः समायान्तु स्कन्दस्य पार्श्वगा मम ॥ ४१ ॥

आवाहयिष्यामि तथा देवानां पार्षदानहम् ।
नानारूपाः समायान्तु देवानां पार्षदा मम ॥ ४२ ॥

आवाहयिष्यामि तथा हरस्य पार्षदानहम् ।
नानारूपाः समायान्तु हरस्य पार्षदा मम ॥ ४३ ॥

आवाहयिष्यामि तथा मातरो लोकमातरः ।

---

१. A.B. -मनोरमान्. २. A.B.C. नद्यस्त्वा-. ३. A. ततः. ४. चानुचरा.
५. A.B.C. omit आवाहयिष्यामि...पार्षदा मम.

आयान्तु मातरो [1]देव्यो वरदाः सर्वगाः शुभाः ॥ ४४ ॥

ग्रहानावाहयिष्यामि सर्वलोकेश्वरानहम् ।
ग्रहाः सर्वे समायान्तु दीप्ता भुवननायकाः ॥ ४५ ॥

आवाहयिष्यामि तथा नक्षत्रान् वरदानहम् ।
आयान्तु सर्वे नक्षत्राः सर्वे भुवननायकाः ॥ ४६ ॥

दिशस्त्वावाहयिष्यामि प्रागाद्याः सुमनोहराः ।
आगच्छन्तु दिशः सर्वाः सर्वभूतसुखावहाः ॥ ४७ ॥

वीथ्यस्त्वावाहयिष्यामि दिव्या [2]नवग्रहा शुभाः ।
आयान्तु वीथ्यः सकला ग्रहनक्षत्रमण्डिताः ॥ ४८ ॥

अहमावाहयिष्यामि मुहूर्तान् सूक्ष्मरूपिणः ।
मुहूर्ताः शीघ्रमायान्तु कालस्यावयवाः शुभाः ॥ ४९ ॥

ऋतूनावाहयिष्यामि षडहं भुवनेश्वरान् ।
आयान्तु ऋतवः सर्वे [3]कालचक्रप्रवर्तकाः ॥ ५० ॥

[4]आवाहयिष्यामि तथा पञ्चसंवत्सरानहम् ।
आयान्तु वत्सराः सर्वे कालचक्रप्रवर्तकाः ॥ ५१ ॥

युगानावाहयिष्यामि चतुरो दीप्ततेजसः ।
आगच्छन्तु युगाः सर्वे चतुर्मूर्तिव्यवस्थिताः ॥ ५२ ॥

अहमावाहयिष्यामि [5]मनूंश्चैव चतुर्दश ।
मन्वन्तराः समायान्तु त्रिदशावधिसंस्थिताः ॥ ५३ ॥

कालमावाहयिष्यामि देवं सावयवं शुभम् ।
आगच्छ [6]भगवन् काल देवदेव जनार्दन ॥ ५४ ॥

[7]वेदानावाहयिष्यामि यज्ञमूर्तिधरानहम् ।

---

१. B. देवो. २. V.C. नवग्रहाश्रयाः. ३. V.C. जगच्चक्र–. ४. B. omits आवाहयिष्यामि... प्रवर्तकाः. ५. C. मनवस्तु. ६. C. भगवान्काल. ७. V.C. देवानावा–.

[1]देवा वेदास्समायान्तु वरदा बहुरूपिणः ॥ ५५ ॥

[2]अहमावाहयिष्यामि विद्यास्थानान्यशेषतः ।
सर्वाणीह समायान्तु लोकानां हितकाम्यया ॥ ५६ ॥

शा(? श)स्त्राना(? ण्या)वाहयिष्यामि [3]श(? शा)तान् दर्शनवस्थितान् ।
[4]शस्त्राणि शीघ्रमायान्तु चमूनां मण्डनं परम् ॥ ५७ ॥

अस्त्राण्यावाहयिष्यामि त्रैलोक्यस्य [5]परायणान् ।
[6]सर्वाणीह समायान्तु धर्मसेतुप्रवर्तकाः ॥ ५८ ॥

अहमावाहयिष्यामि [7]वेदशास्त्राण्यनेकशः ।
[8]वेदशास्त्राः समायान्तु जगद्रक्षणतत्पराः ॥ ५९ ॥

अहमावाहयिष्यामि सर्वांस्त्रिदशवाहनान् ।
इह सर्वे समायान्तु सर्वे त्रिदशवाहनाः ॥ ६० ॥

नागानावाहयिष्यामि देवपुत्रान् महाबलान् ।
देवोपवाह्या नागेन्द्राः शीघ्रमायान्तु सत्वराः ॥ ६१ ॥

निधीनावाहयिष्यामि शङ्खपद्मपुरोगमान् ।
आयान्तु निधयः सर्वे सर्वलोकैकभावनाः ॥ ६२ ॥

आह्वानकार्यं यदि [9]संघमध्यादेकस्य कार्यं यदुवंशनाथ ।
[10]कार्यादथेहा तु तदेकवत् स्यादाह्वानमन्त्रस्य [11]यथानुरूपाः ॥ ६३ ॥

**इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे प्रतिष्ठाकल्पे देवसंघाह्वानं नाम ॥ १०३ ॥**

---

१. V. देवा सर्वैः समायान्तु. २. B. omits अहमा... परायणान्. ३. V.C. शान्तान्दर्शनवस्थितान्. ४. A. omits शस्त्राणि...... मण्डनं परम् ५. V. हितानि वै. C. परायणा. ६. V. सर्वे चेह. ७. A.B.C. देव. ८. A.B.C. देवशास्त्राः ९. A.B.V. सङ्घ–. १०. A. कार्यातथेहा. ११. B. यथारूपाः.

## चतुरुत्तरशततमोऽध्यायः ।

[1]मार्कण्डेय उवाच— आवाहयाम्यहं देवं ब्रह्माणं परमेष्ठिनम् ।
[2]जगतोऽस्य समुत्पत्तिस्थितिसंहारकारणम् ॥ १ ॥

चतुर्वेदं चतुर्वक्त्रं चातुर्वर्ण्यप्रभुं प्रभुम् ।
चतुराश्रमगोप्तारं वरदं भूतभावनम् ॥ २ ॥

पद्मयोनिं जगद्योनिं यज्ञयोनिं जगत्पतिम् ।
आत्मयोनिमनाधृष्यं यज्ञवाहं जगत्पतिम् ॥ ३ ॥

यज्ञेशं यज्ञमूर्तिं च त्रैलोक्यस्यैककारणम् ।
[3]सर्वत्र वरदं सौम्यं परमं परमेश्वरम् ॥ ४ ॥

भूतभव्यभवन्नाथं योगज्ञेयं सनातनम् ।
आगच्छ भगवन् ब्रह्मन् यजमानस्य वृद्धये ॥ ५ ॥

इदमर्घ्यमिदं पाद्यं धूपं चेदं प्रगृह्यताम् ।
आवाहयाम्यहं देवं देवदेवं हुताशनम् ॥ ६ ॥

जगतोऽस्य समुत्पत्तिस्थिति[4]संहारकारणम् ।
देवमूर्तिं तदाधारं सर्वदेवमुखं प्रभुम् ॥ ७ ॥

पिङ्गेक्षणं पिङ्गजटं धूमकेतुं विभावसुम् ।
शुकयान[5]गमं देवं सर्वाभरणभूषितम् ॥ ८ ॥

सर्वगं वरदं भानुं जठरस्थं च देहिनाम् ।
तेजोमूर्तिं दुराधर्षं सप्तजिह्वं महाबलम् ॥ ९ ॥

सप्तार्चिषं [6]सप्तमुनिं समित्सप्तकमच्युतम् ।
विष्णोरंशमनिर्देश्यं भानवं जातवेदसम् ॥ १० ॥

पावनं पुष्टिदं सौम्यं भक्तानां भूतिवर्धनम् ।
याजकं यजमानं च पुष्ट्या विभज सर्वशः ॥ ११ ॥

---

१. A. adds ओंश्री. २. A. जगतोऽसि. ३. V. सर्वगं नारदं. ४. V.C. संहार-कारकम्. ५. B. –गरं. ६. A.B.C. सप्तऋषिं.

इदमर्घ्यमिदं पाद्यं धूपं चेदं प्रगृह्यताम्।
आवाहनान्यतो वक्ष्ये सर्वेषां पार्थिवोत्तम ॥ १२ ॥

सर्वस्यावाहनस्यान्ते श्लोकोऽयं [1]परिकीर्तितः।
प्रविश्यार्चामिमां सम्यङ् मया भक्त्या विनिर्मिताम् ॥ १३ ॥

इदमर्घ्यमिदं पाद्यं धूपं चेदं प्रगृह्यताम्।
ध्रुवमावाहयिष्यामि [2]सर्वदेवगणेश्वरम् ॥ १४ ॥

निबद्धं भ्राम्यते येन भचक्रं वातरज्जुभिः।
एहि मे ध्रुव देवेश केशवाचिन्त्य[3]विक्रम ॥ १५ ॥

सर्वग्रहगणाध्यक्ष सर्वलोकनमस्कृत।
आवाहयिष्याम्याकाशं विमानशतमण्डितम् ॥ १६ ॥

तृतीयं देवदेवस्य पदं विष्णोर्महात्मनः।
एहि मे भगवन् सौम्य निरालम्ब[4]नभस्तल ॥ १७ ॥

अप्रमेयातिगम्भीर विमान[5]शतमण्डित।
ऊर्ध्वमावाहयिष्यामि [6]चानन्तां महतीं दिशम् ॥ १८ ॥

अप्रमेयां निरालम्बां चन्द्रसूर्यां[7]शुवर्जिताम्।
आगच्छेह महाभागे सततं सिद्धसेविते ॥ १९ ॥

अनन्ते विपुले देवि निर्मले हितकारिणि।
आवाहयाम्यधस्तात्तु दिशं शेषेण [7]पालिताम् ॥ २० ॥

नागदैत्योर[8]गगनैः सततं च [9]निषेविताम्।
गम्भीरे विपुले भीमे बहुस्थानातिमण्डिते ॥ २१ ॥

एहि मे रत्नबहुले बहुरूपे महाबले।
आवाहयिष्ये वरदं सहस्रांशुं दिवाकरम् ॥ २२ ॥

---

१. C. पारकीर्तयेत्. २. C. सर्वगण. ३. B. –विक्रमम्. ४. A.B. नभस्थलं. ५. B. शतमण्डितम्, ६. C. अनन्तां. ७. A. पार्जिताम्. ८. A.B.C. –गगणैः, ९. B. निषेविता,

तेजोमूर्तिं दुराधर्षं [१]भक्तानामभयप्रदम् ।
एहि देव जगन्नाथ ऋक्सामयजुषां पते ॥ २३ ॥

त्रैलोक्य[२]मण्डले दीप सर्वव्याधिविनाशन ।
आवाहयाम्यहं देवमादित्यमुदकेशयम् ॥ २४ ॥

स्निग्धवैदूर्यसङ्काशं वरुणं सुमहाद्युतिम् ।
एहि देव जलाध्यक्ष यादोगणमहेश्वर ॥ २५ ॥

नागदैत्योरगगणैः सततं सेविताच्युत ।
आवाहयाम्यहं चन्द्रं शीतां[३]शुभमृतप्रभुम् ॥ २६ ॥

ओषधीशं द्विजाध्यक्षं नयनानन्दकारकम् ।
एहि मे भगवन् चन्द्र शशाङ्क मृगलाञ्छन ॥ २७ ॥

भक्तानुकम्पिन् सततं सर्वनक्षत्रपूजित ।
भौममावाहयिष्यामि तेजोमूर्तिं दुरासदम् ॥ २८ ॥

[४]भद्रमूर्तिमनिर्देश्यं वक्रं रुधिरसप्रभम् ।
एहि मे भगवन् भौम अङ्गारकसमप्रभ ॥ २९ ॥

त्वयि सर्वं [५]समायत्तं भूतलेऽस्मिन् शुभाशुभम् ।
स्कन्दमावाहयिष्यामि षण्मुखं वरदं शिशुम् ॥ ३० ॥

देवारिसेनामथनं [६]पार्वत्यानन्दवर्धनम् ।
ऐहि देव [७]कुमाराद्यमहिषासुरतस्कर ॥ ३१ ॥

कार्तिकेय जगन्नाथ मयूरवरवाहन ।
बुधमावाहयिष्यामि बोधनं जगदीश्वरम् ॥ ३२ ॥

चान्द्रि ग्रहगणाध्यक्षं तेजोमूर्तिं दुरासदम् ।
एहि [८]शीतांशुभाचिन्त्य जगज्जिष्णो जनार्दन ॥ ३३ ॥

---

१. V. भक्तानामयप्रदम्. २. C. मण्डल दीप. A. मण्डले द्वीप. B. मण्डलोद्दीप. ३. V. –शुभमृतप्रभम्. ४. A. रुद्रमूर्ति–. ५. A.B. समायान्तं. ६. C. पार्वत्यानन्दिवर्धनम्. ७. C. कुमाराद्यं. ८. V. शीतांशुजाचिन्त्य.

महाबल [1]महासत्त्व महाबाहो महाद्युते ।
[2]विष्णुमावाहयिष्यामि शङ्खचक्रगदाधरम् ॥ ३४ ॥

अतसीकुसुमश्यामं पीतवाससमच्युतम् ।
एहि मे देवदेवेश प्रजानिर्माणकारक ॥ ३५ ॥

नारायण सुदुष्पार [3]महाशार्ङ्ग धनुर्धर ।
[4]शक्रमावाहयिष्यामि देवं सुरगणेश्वरम् ॥ ३६ ॥

वज्रपाणिं महाबाहुं गोब्राह्मणहिते रतम् ।
एहि देव सहस्राक्ष देवारिबलसूदन ॥ ३७ ॥

ऐरावतग धर्मज्ञ शचीहृदयनन्दन ।
जीवमावाहयिष्यामि देवेश्वरपुरोहितम् ॥ ३८ ॥

बृहस्पतिं बृहद्वाक्यं वेदवेदाङ्गपारगम् ।
एहि जीव महाभाग जीवभूत महीतले ॥ ३९ ॥

[5]सस्यवृद्धिस्त्वदायत्ता सततं [6]भूतिवर्धन ।
देवीमावाहयिष्यामि पार्वतीं वरदामुमाम् ॥ ४० ॥

हरस्य दयितां भार्यां चार्वङ्गीं भूतिवर्धिनीम् ।
एहि [7]देवि जगन्मातर्मेनाहृदयनन्दिनि ॥ ४१ ॥

पवित्रे वरदे सौम्ये नित्यं भक्तजनप्रिये ।
शुक्रमावाहयिष्यामि भार्गवं [8]जगदीश्वरम् ॥ ४२ ॥

नित्यं सर्वधनाध्यक्षं तपसा द्योतितप्रभम् ।
एहि शुक्र महाभाग षोडशार्चे वरप्रद ॥ ४३ ॥

प्रभुस्त्वं वरदो [9]नित्यं वर्षावर्षस्य निग्रहे ।
आवाहयाम्यहं देवं प्रजाध्यक्षमकल्मषम् ॥ ४४ ॥

---

१. V. महाभाग. २. C. जिष्णु–. ३. V. महेश्वास. ४. B. चक्र–. ५. V.C. सम्यग्वृद्धि. ६. V. भूमिवर्धन. ७. C. देव जगन्नाथेर्मेना. ८. A.B. जगदेश्वरम्. ९. A.B.C. चित्यो.

भक्तानुकम्पिनं देवं प्रजानिर्माणकारकम् ।
एहि देव प्रजाध्यक्ष [1]प्रजानिर्माणकारक ॥ ४५ ॥

त्वयि देव समायत्तं प्रजानामभवोद्भवम् ।
[2]सौरिमावाहयिष्यामि [3]शनैश्चारिणमच्युतम् ॥ ४६ ॥

तपस्विन[4]मनाधृष्यं भक्तानामभयप्रदम् ।
एहि तीक्ष्णांशुजाचिन्त्य भावाभावप्रदर्शक ॥ ४७ ॥

त्वयि सर्वं समायत्तं राज्ञां भूमौ शुभाशुभम् ।
आवाहयाम्यहं देवं गजवक्त्रं गणेश्वरम् ॥ ४८ ॥

विघ्नेशं [5]विघ्नहर्तारं पार्वतीहृदयप्रियम् ।
एहि देव गणाध्यक्ष लम्बोदर महाभुज ॥ ४९ ॥

कार्यसिद्धिः समायत्ता त्वयि सर्वेश देहिनाम् ।
राहुमावाहयिष्यामि दैत्येन्द्रं ग्रहतां गतम् ॥ ५० ॥

केशवासवरं वीरं तपसा दग्धकिल्बिषम् ।
एह्येहि दैत्यप्रवर वरदाचिन्त्य[6]विक्रम ॥ ५१ ॥

[7]तमोमूर्ते दुराधर्ष विपरीताम्ब[8]राम्बर ।
आवाहयाम्यहं देवं विश्वकर्माणमच्युतम् ॥ ५२ ॥

सर्वासां देवतानां तु [9]सर्वशिल्पप्रवर्तकम् ।
एहि देववराचिन्त्य [10]सदा शिल्पप्रवर्तक ॥ ५३ ॥

त्वयि सर्वेश सर्वेषां कर्मणामाश्रिता गतिः ॥ ५४ ॥

केतुमावाहयिष्यामि केतुं सर्वदिवौकसाम् ।
[11]ब्रह्मज्ञं सर्वधर्मज्ञं भक्तानामभयप्रदम् ॥ ५५ ॥

---

१. C. प्रजानिर्वाणकारक. B. प्रजानिर्माणकारकं. २. A.B. सौर–. ३. B. शनेश्वारण–. ४. A.B. –मनादश्यं. ५. C. विध्नकर्तारं. ६. B. –विक्रमम्. ७. A.B. तमोमूर्ति दुरादर्श. ८. B.C. –राम्बरे. ९. V. सदा. १०. V. सर्व. ११. V. ब्राह्मण्यं सर्वधर्मज्ञं. C. ब्रह्मज्ञं धर्मधर्मज्ञ. B. ब्रह्मण्यं सर्ववर्मज्ञं.

धूमकेतो इहाभ्येहि हुताशनसमप्रभ ।
शिखाकरालविकच [1]पूजिताघविनाशन ॥ ५६ ॥

आवाहयिष्यामि शुभां कृत्तिकां देवपूजिताम् ।
एहि साधारणे देवि ज्येष्ठे दक्षसुते शुभे ॥ ५७ ॥

आवाहयामि वरदां रोहिणीं [2]चन्द्रवल्लभाम् ।
एहि रोहिणि धर्मज्ञे ध्रुवकर्मसुशोभने ॥ ५८ ॥

आवाहयामि [3]वरदामिल्विलां शशिवल्लभाम् ।
एहि [4]मे इल्विले देवि मृदुकर्मसुशोभने ॥ ५९ ॥

रुद्रमावाहयिष्यामि त्रिनेत्रं शूलपाणिनम् ।
एहि शङ्कर सर्वात्मन् महागणगणेश्वर ॥ ६० ॥

आर्द्रामावाहयिष्यामि नक्षत्रं [5]बाहुसंज्ञितम् ।
एह्यार्द्रे चारुसर्वाङ्गि [6]दारुणे रुद्रसम्मिते ॥ ६१ ॥

आवाहयि[7]ष्याम्यदितिं तपसा दग्धकिल्बिषाम् ।
आदित्यारणि धर्मज्ञे एहि देवि महाव्रते ॥ ६२ ॥

ऋक्षमावाहयिष्यामि धर्मज्ञं तु पुनर्वसुम् ।
पुनर्वसो इहागच्छ चरकर्मप्रसाधक ॥ ६३ ॥

[8]पुष्यमावाहयिष्यामि नक्षत्रं क्षिप्रसंज्ञितम् ।
एहि पुष्य महाभाग पोषं वर्धय सर्वतः ॥ ६४ ॥

सर्पानावाहयिष्यामि त्रैलोक्यानन्तगोचरान् ।
आयान्तु सर्वतः सर्पाः सौम्यरूपा भवन्तु ते ॥ ६५ ॥

आवाहयामि चाश्लेषां भक्तानां श्रीविवर्धिनीम् ।
[9]आश्लेषे त्वमिहाभ्येहि दारुणे विजयप्रदे ॥ ६६ ॥

पितॄनावाहयिष्यामि [10]मूर्त्यमूर्तिधरानहम् ।
आयान्तु पितरः शीघ्रं सुधाकव्यभुजोऽव्ययाः ॥ ६७ ॥

---

१. V. पूजकार्तिविनाशन. २. V.B.C. चंद्रावल्लभाम्. ३. A.B. वरदां इन्विकां. C. वरदां इन्वकां. ४. A.B. मे इन्विके C. मे इन्वके. ५. C. बाहुसंज्ञकम्. ६. A. वारुणे. ७. V.C. –ष्यामि दितिं. ८. A.B.V. तिष्यमा–. ९. A.B.C. अश्लेषे. १०. V. मर्त्यमूर्ति–.

मघामावाहयिष्यामि [1]उग्रनक्षत्रमञ्जसा ।
एहि मे सुभगे देवि सर्वाघविनिषूदनि ॥ ६८ ॥

भगमावाहयिष्यामि भक्तसौभाग्यवर्धनम् ।
एहि देववराचिन्त्य [2]एह्येहि भगवान् भग ॥ ६९ ॥

ऋक्षमावाहयिष्यामि [3]पूर्वफाल्गुणसंज्ञिकम् ।
[4]एहि भग महाभाग [5]ग्रहकर्मप्रसाधक ॥ ७० ॥

आवाहयिष्याम्यर्यमणमादित्यं तेजसां निधिम् ।
[6]अर्यमंस्त्वं समभ्येहि [7]भक्तपातकनाशन ॥ ७१ ॥

ऋक्षमावाहयिष्यामि उत्तराफाल्गुनीं शुभाम् ।
एहि त्वं सुभगे देवि ध्रुवे सर्वाङ्गसुन्दरि ॥ ७२ ॥

हस्तमावाहयिष्यामि सावित्रं क्षिप्रमञ्जसा ।
एहि सावित्र धर्मज्ञ भक्तानां [8]पापनाशन ॥ ७३ ॥

आवाहयाम्यहं देवं [9]त्वष्टारमसितद्युतिम् ।
एहि मे भगवंस्त्वष्टः प्रजापालन[10]तत्पर ॥ ७४ ॥

चित्रामावाहयिष्यामि [11]चित्ररूपां मनोहराम् ।
एहि मे वरदे [12]चित्रे मृदुकर्मप्रसाधकि ॥ ७५ ॥

वायुमावाहयिष्यामि सर्वगं [13]दीप्ततेजसम् ।
देव वायो त्वमभ्येहि सर्वभूतजगत्प्रिय ॥ ७६ ॥

[14]स्वातिमावाहयिष्यामि [15]नित्यमुत्तरतेजसम् ।
[16]देवि स्वाति त्वमभ्येहि चरकर्मसु शोभने ॥ ७७ ॥

आवाहयिष्यामीन्द्राग्नी सहितौ दीप्ततेजसौ ।
[17]इन्द्राग्नेहि जगन्नाथ एह्यग्ने विजयप्रद ॥ ७८ ॥

---

१. A.B.C. उग्रं. २. V. भक्तसंकटनाशक. ३. V.C. पूर्वफल्गुनसंज्ञकम् ४. V. एहि भागि. C. एहि भाग. ५. V.C. उग्र. ६. A B. अर्यमास्त्वं समाभ्येहि. C. अर्यमंस्त्वं समाभ्येहि. ७. V. भक्तसङ्कटनाशन. ८. V. पापनाशक. ९. B. त्वष्टारममितद्युतिम्. १०. B. –तत्परः. ११. V. चित्रमूर्ति. १२. V. देविमृदुकर्मप्रसाधके. १३. C. दीप्ततेजसाम्. १४. B. omits स्वाति... विजयप्रद. १५. V.C. नित्यमुत्तरसर्वगाम्. १६. C. देहि. १७ A. इन्द्राभ्येहि.

[1]ऋक्षमावाहयिष्यामि [2]विशाखामुग्रतेजसम्।
विशाखे [3]त्वमिहाभ्येहि देवि साधारणे शुभे ॥ ७९ ॥

मित्रमावाहयिष्यामि देवं दीप्तांशुतेजसम्।
एहि मित्र महाभाग [4]भक्ताघप्रलयं कुरु ॥ ८० ॥

ऋक्षमावाहयिष्यामि [5]त्वनुराधां वरप्रदाम्।
अनुराधे त्वमभ्येहि मृदुकर्मसुशोभने ॥ ८१ ॥

[6]शक्रस्यावाहनं प्रोक्तं ज्येष्ठायाः शृणु पार्थिव।
[7]ज्येष्ठामावाहयिष्यामि नक्षत्रं शक्रदैवतम् ॥ ८२ ॥

ज्येष्ठे देवि त्वमभ्येहि दारुणे चारुलोचने।
देवमावाहयिष्यामि [8]निर्ऋतिं वीरवन्दितम् ॥ ८३ ॥

एहि देव विरूपाक्ष महाबल[9]पराक्रम।
मूलमावाहयिष्यामि नक्षत्रं दारुणं महत् ॥ ८४ ॥

एहि मूल महाभाग भक्तानामभयप्रद।
आपस्त्वावाहयिष्यामि सर्वगा वरदाः शुभाः ॥ ८५ ॥

[10]आपस्त्वावाहयिष्यामि पूर्वाषाढेति संज्ञिते।
एहि [11]त्वमुग्रे वरदे [12]आषाढे पूर्वसंज्ञिते ॥ ८६ ॥

[13]ऋक्षमावाहयिष्यामि यत्तदभिजिदुच्यते।
एहि धिष्ण्यवरिष्ठाद्य क्षिप्रकर्मप्रसाधक ॥ ८७ ॥

ऋक्षमावाहयिष्यामि श्रवणं सर्वकामदम्।
[14]अश्वत्थ त्वं समभ्येहि चरकर्म[15]प्रसाधक ॥ ८८ ॥

[16]धिष्ण्यमावाहयिष्यामि नक्षत्रं [17]शशिवल्लभम्।
धनिष्ठे त्वमिहाभ्येहि चरकर्म[18]प्रसाधिके ॥ ८९ ॥

---

१. B. स्वातिमाह–. २. V. विशाखामग्रतेजसम्. C. विशाखामुग्रतेजसाम्. ३. C. त्वमिहाभ्यैति. ४. V. भक्तानामभयं कुरु. ५. C. अनुराधां. ६. V. शक्रोस्यावाहनं. ७. C. ज्येष्ठायां. B. ज्येष्ठमावाह–. ८. A.B. निर्नृतं. ९. V. सदाश्रय. १०. B. आपस्सावा–. ११. A. त्वमुग्र. B. त्वमग्रे. १२. V. पूर्वाषाढेति संज्ञिते. १३. A.B. omit ऋक्षमा... प्रसाधक. १४. A. प्रसन्नत्वं. १५. A. –प्रसादकां. १६. V. omits धिष्ण्यमा... वल्लभम्. १७. A. शिशावल्लभम्. १८. A.B.C. –प्रसाधकि.

ऋक्षमावाहयिष्यामि नाम्ना [1]शतभिषां शुभाम् ।
आगच्छ त्वं शतभिषे चरकर्मसु शोभने ॥ ९० ॥

अजैकपादं वरदं रुद्रमावाहयाम्यहम् ।
[2]आगच्छ रुद्र वरद त्रिशूलपरमायुध ॥ ९१ ॥

ऋक्षमावाहयिष्यामि पूर्वभद्रपदामहम् ।
एहि भद्रपदे पूर्वे उग्रकर्मप्रसाधनि ॥ ९२ ॥

[3]आहिर्बुध्न्यं महाभागं रुद्रमावाहयाम्यहम् ।
[4]आहिर्बुध्न्य [5]समभ्येहि जटाजूटोपशोभित ॥ ९३ ॥

ध्रुवमावाहयिष्यामि देशे भद्रपदोत्तराम् ।
एहि त्वं सुमहाभागे मम भद्रपदोत्तरे ॥ ९४ ॥

आवाहयाम्यहं देवं [6]पूषणं [7]पापनाशनम् ।
पूषन् सम्यगि[8]हाभ्येहि [9]सर्वकल्मशनाशन ॥ ९५ ॥

ऋक्षमावाहयिष्यामि [10]रेवतीं [11]चारुदर्शनि ।
एहि रेवति धर्मज्ञे मृदुकर्म[12]प्रसाधकि ॥ ९६ ॥

ऋक्षमावाहयिष्यामि [13]क्षिप्रमश्विनिसंज्ञकम् ।
एह्यश्विनि महाभागे वरदे कामदायिनि ॥ ९७ ॥

यममावाहयिष्यामि [14]धर्मराजमथाच्युतम् ।
एहि धर्मभृतां श्रेष्ठ वैवस्वत महाभुज ॥ ९८ ॥

ऋक्षमावाहयिष्यामि उग्रं भरणि[15]संज्ञकम् ।
एहि त्वं देवि भरणि सुभगे [16]चारुदर्शनि ॥ ९९ ॥

प्राचीमावाहयिष्यामि सूर्योदयविभूषणाम् ।
एहि त्वं वरदे पूर्वे शुभकर्म[17]प्रसाधनि ॥ १०० ॥

---

१. A.B. शतभिषं. २. A.B C. आगच्छाज महाभाग त्रिशूल. ३. A. अहिर्बुध्न्यं ४. A.B. अहिर्बुध्न्य ५. C. समाभ्येहि. ६. A. पूषांणं. ७. V. पापनाशकम्. ८. C. –हाभ्येति. ९. V. सर्वकल्मषनाशक. १०. A. रेवते. ११. V. भीरुदर्शनम्. १२. V. –प्रसाधके. १३. C. क्षिप्रमश्विनसंज्ञकम्. १४. A.B.C. धर्मराजानमच्युतम्. १५. C. संज्ञिकम्. १६. V. चारुदर्शने. १७. C. प्रसाधकि.

दिशमावाहयिष्यामि[1] वरदां पूर्वदक्षिणाम् ।
वह्निप्रिये समभ्येहि वरदे पूर्वदक्षिणे ॥ १०१ ॥

अहमावाहयिष्यामि दक्षिणां दक्षिणां दिशम् ।
दक्षिणे त्वं समभ्येहि सर्वकर्म सुदक्षिणे ॥ १०२ ॥

[2]दिशमावाहयिष्यामि शुभां दक्षिणपश्चिमाम् ।
एहि त्वं नैर्ऋते देवि सततं भूतिवर्धिनि ॥ १०३ ॥

दिशमावाहयिष्यामि वारुणीं वरदां सदा ।
आगच्छ पश्चिमे देवि वरदे वरुणप्रिये ॥ १०४ ॥

आवाहयिष्यामि दिशं [3]वायव्यां पश्चिमोत्तराम् ।
वरदे त्वं समभ्येहि वायव्ये पश्चिमोत्तरे ॥ १०५ ॥

आवाहयामि धनदं देवं वैश्रवणं प्रभुम् ।
राजराज [4]समभ्येहि [5]सर्वयज्ञेश्वराधिप ॥ १०६ ॥

दिशमावाहयिष्यामि सौम्यां धनदपालिताम् ।
उत्तरे त्वं [6]समभ्येहि [7]सर्वधर्मफलप्रदे ॥ १०७ ॥

दिशमावाहयिष्यामि [8]सेशां प्रागुत्तरामहम् ।
एहि त्वं सुभगे देवि सततं शिवपालिते ॥ १०८ ॥

सर्वानावाहयिष्यामि पूर्णकुम्भेषु [9]सागरान् ।
रत्नाध्यक्षाः समायान्तु [10]चत्वार इह सागराः ॥ १०९ ॥

ऐशान्यां दिशि यः कुम्भः [11]पूर्वस्तस्यां तु सागरः ।
आयातु शीघ्रमेवेह तरंगोर्मिसमाकुलः ॥ ११० ॥

शीघ्रमभ्येहि [12]निलय यादसां पूर्वसागर ।
तरङ्गशतसंक्रान्त [13]बालभास्करमण्डल ॥ १११ ॥

---

१. V. शुभप्रदे. २. A.B. omit दिश . . भूतिवर्धिनि. ३ V. वायवीं. A.B. वायव्यं. ४ A.B. समाभ्येहि. ५ सर्वयज्ञेश्वराधिप. ६. A B ममाभ्येहि. ७. A.B.C. सर्वकर्मस्वथोत्तरे. ८. V.C. शुभां. ९. A.B. सागरम्. १०. C. चत्वारा, ११. A.B. पूर्वस्तस्या तु. १२. A.B. निलयं. १३. A. बारभास्कर.

आग्नेये च [1]समायात दक्षिणे दक्षिणः शिवः ।
बहुरत्नप्रभापुञ्जविमिश्र सलिलाशय ॥ ११२ ॥

यादसां निलयाभ्येहि [2]क्षिप्रं दक्षिणसागर ।
[3]तरङ्गधौतपादाग्र त्रिकूट[4]शिखराच्युत ॥ ११३ ॥

[5]पश्चिमश्च [6]समायातु कुम्भे दक्षिणपश्चिमे ।
रत्नपुञ्जमहाज्वालाविराजितमहोदक ॥ ११४ ॥

तरङ्गमण्डिताभ्येहि क्षिप्रं [7]पश्चिमसागर ।
अस्तार्कबिम्बसंक्रान्तगतमण्डलदुर्दश ॥ ११५ ॥

उत्तरश्च तथाभ्येतु कुम्भे वै [8]पश्चिमोत्तरे ।
हिमाद्रिशिखरच्छायाक्षीरोदसदृशः प्रभुः ॥ ११६ ॥

महापवित्रसलिल शीघ्रमुत्तरसागर ।
इहाभ्येहि महाभाग यजमानाभिवृद्धये ॥ ११७ ॥

आवाहितानां कर्तव्यं भूमौ कृत्वा [9]ततः शिरः ।
प्रणामम[10]भिवादं च ततो मन्त्रमुदीरयेत् ॥ ११८ ॥

भवतां हि प्रसादेन भवतां प्रतिपूजने ।
प्रयतिष्ये यथाशक्त्या तन्मेऽनु[11]ज्ञातुमर्हथ ॥ ११९ ॥

[12]युष्माकं पूजनं कर्तुं केन शक्यं यथाविधि ।
युष्मत् पूजाविहीनेन केन लभ्यं महत् फलम् ॥ १२० ॥

ततः कर्तुं यथाशक्त्या भवतां प्रतिपूजनम् ।
वरदाः प्रयतिष्यामि तन्मेऽनुज्ञातुमर्हथ ॥ १२१ ॥

स्वां स्वां दिशमधिष्ठाय दिक्पाला दीप्ततेजसः ।
[13]उत्सादयन्तु सकलान् विघ्नान् यान् समुपस्थितान् ॥ १२२ ॥

---

१. A.B.C. समायान्तु २. B. क्षिप्रं. ३. A.B. तरंगाधौत. ४. A.B. त्रिशिराच्युत. ५. A.V. पश्चिमायाः. ६. A.B समायान्तु. ७. B. पश्चिम सागराः ८. A. पंचमोत्तरे. ९. V. ततश्चिरः. १०. A.B.C. -त्रिवाद्यं. ११. B. ज्ञातमर्हथ. १२. B. omits युष्माकं...यथाविधि. १३. A. उत्सेतुनात.

[1]विनायका विघ्नकराः समोग्रा
यज्ञद्विषो ये [2]पिशिताशनाश्च ।
सिद्धार्थकैर्वज्रसमानकल्पैः
मया निरस्ता [3]विदिशः प्रयान्तु ॥ १२३ ॥

**इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे [4]देवदिशामावाहनं नाम ॥ १०४ ॥**

---

१. C. विनाशका. २. B. पिशताशनाश्च. ३. C. निदिश. ४. V. ब्रह्मादिदेवाह्वानवर्णनो.

## पञ्चोत्तरशततमोऽध्यायः ।

मार्कण्डेय उवाच– [1]लोकानावाहयिष्यामि [2]हंसरूपान् मनोहरान् ।
आयान्तु वाहनत्वेन ये स्थिताः [3]परमेष्ठिनः ॥ १ ॥

[4]वृषमावाहयिष्यामि चतुष्पादं ककुद्मिनम् ।
वृषाभ्येहि महाभाग धर्ममूर्ते वरप्रद ॥ २ ॥

शूलमावाहयिष्यामि गुणाधारं [5]महाव्रतम् ।
एहि शूल महाभाग दैत्यनाथगणान्तक ॥ ३ ॥

अहमावाहयिष्यामि [6]देवं [7]नन्दीश्वरं प्रभुम् ।
अभ्येहि नन्दिन् भगवन् सर्वलोक[8]नमस्कृत ॥ ४ ॥

आवाहयामि वरदं वीरभद्रं महाबलम् ।
अभ्येहि वीरभद्राद्यमहागगणेश्वर ॥ ५ ॥

ज्वरमावाहयिष्यामि [9]त्रिपादं त्रिभुजं प्रभुम् ।
ज्वराभ्येहि महाभाग [10]सहस्रकिरणोज्ज्वल ॥ ६ ॥

देवीमावाहयिष्यामि भद्रकालीं सुखप्रदाम् ।
आगच्छ वरदे दुर्गे सर्वलोकनमस्कृते ॥ ७ ॥

[11]देवीमावाहयिष्यामि पौलोमीं वरदां शचीम् ।
शक्रपत्नि त्वमभ्येहि वरदे कामरूपिणि ॥ ८ ॥

नागमावाहयिष्यामि तथैरावण[12]संज्ञितम् ।
इहाभ्येहि महाभाग शक्रनाग जयावह ॥ ९ ॥

वज्रमावाहयिष्यामि [13]सर्वभेदकमाशुगम् ।
शीघ्रं वज्र त्वमभ्येहि सर्वदुष्टनिबर्हण ॥ १० ॥

---

१. B. omits लोकाना ..परमेष्ठिनः. A. लोकमावा–. २. A. हंसरूपं मनोहरम्. ३. C. परमेष्ठिनाः. ४. B. लोकानावाहयिष्यामि. ५. V.C महाद्युतिम्. ६. A.B. देवे. ७. B. नंदीश्वरां. ८. B. –नमस्कृतः. ९. A. त्रिपदं. १०. V. सततं चरणोज्ज्वल, ११. V. आवाहयामि पौलोमीं वरदां नित्यनन्दिनीम्. १२. B. –संज्ञिताम्. १३. A.C. सर्वभेदनमाशुगम्.

हयानावाहयिष्यामि छन्दो[1]रूपान् मनोहरान् ।
आगच्छन्तु [2]ममाद्येह तुरगा व्योमगोचराः ॥ ११ ॥

अहमावाहयिष्यामि [3]दण्डसंज्ञं बलोत्कटम् ।
[4]दण्ड [5]शीघ्रमिहाभ्येहि महाबलपराक्रम ॥ १२ ॥

अहमावाहयिष्यामि पिङ्गलं सुमहाबलम् ।
लोकसाक्षिंस्त्वमभ्येहि [6]पिङ्गलादिमहाबल ॥ १३ ॥

ध्वजमावाहयिष्यामि [7]सिंहं सूर्यसमप्रभम् ।
धर्मं शीघ्रं त्वमभ्येहि सूर्यध्वजगताच्युत ॥ १४ ॥

देवीमावाहयिष्यामि [8]निक्षुभां कामरूपिणीम् ।
[9]निक्षुभे त्वमिहाभ्येहि सर्वलोकनमस्कृते ॥ १५ ॥

राज्ञीमावाहयिष्यामि सूर्यपत्नीं सुरूपिणीम् ।
आगच्छ वरदे राज्ञि [10]जगद्धारणि पूजिते ॥ १६ ॥

[11]अहमावाहयिष्यामि सूर्यपत्नीं सुवर्चसाम् ।
[12]सुवर्चसे समभ्येहि सूर्यपत्नि महाप्रभे ॥ १७ ॥

छायामावाहयिष्यामि सूर्यपत्नीं महाप्रभाम् ।
[13]छाये देवि त्वमागच्छ कृताकृतविचारिणि ॥ १८ ॥

अहमावाहयिष्यामि दश चन्द्रमसो हयान् ।
सर्वे शीघ्रमिहायान्तु चन्द्राश्वाः कामरूपिणः ॥ १९ ॥

अहमावाहयिष्यामि कान्तिं त्रिदशवल्लभाम् ।
[14]कान्ते शीघ्रं त्वमभ्येहि शशाङ्कदयिते शुभे ॥ २० ॥

शोभामावाहयिष्यामि काङ्क्षितां [15]भुवनेश्वरैः ।
शोभे शीघ्रं त्वमभ्येहि सर्वलोकैकसुन्दरि ॥ २१ ॥

---

१. A.B.C. रूपान्हं खेः. २. B. ममाभ्येहि. ३. A.B. चंडसंज्ञं. ४. B. चंड. ५. C. शीघ्रमिहाभ्येतु. ६. A.B.V. पिङ्गलाय. ७. V. चित्रं. ८. V. सूर्यभां. ९. V. देवि त्वं तूर्णमागच्छ सर्वलोक-. १०. V. जगद्धारिणी. ११. B. omits अहमा...विचारिणि । १२. C.V. omit सुवर्चसे...महाप्रभाम्. १३. B.V. छाये. १४. C. कान्ति. १५. V. भुवनेश्वरीम्.

दिनमावाहयिष्यामि समस्त[1]ध्वान्तनाशकम् ।
दिन शीघ्रं त्वमभ्येहि दर्शिताखिलमण्डल ॥ २२ ॥

रात्रिमावाहयिष्यामि सर्वभूतसुखावहाम् ।
रात्रिदेवि त्वमभ्येहि सर्वभूतवरप्रदे ॥ २३ ॥

सन्ध्यामावाहयिष्यामि देवीं ब्राह्मणपूजिताम् ।
आगच्छ वरदे सन्ध्ये सर्वभूतनमस्कृते ॥ २४ ॥

स्वाहामावाहयिष्यामि [2]देवीं ब्राह्मणपूजिताम् ।
स्वाहेऽभ्येहि महाभागे वरदे कामरूपिणि ॥ २५ ॥

वेदानावाहयिष्यामि [3]शुक्ररूपधरानहम् ।
आयान्तु वाहनत्वेन [4]धूम्रकेतुव्यवस्थिताः ॥ २६ ॥

आवाहयिष्ये महिषं महाबलपराक्रमम् ।
[5]एह्येहि शीघ्रमद्येह सर्वदुष्टनिबर्हण ॥ २७ ॥

दण्डमावाहयिष्यामि [6]सर्वत्राहतपूजितम् ।
एहि दण्ड महाभाग सर्वसत्त्वविनाशन ॥ २८ ॥

देवीमावाहयिष्यामि धूम्रोर्णां चारुलोचनाम् ।
आगच्छ देवि धूम्रोर्णे सर्वलोकनमस्कृते ॥ २९ ॥

कालमावाहयिष्यामि सर्वत्राहतपूजितम् ।
कालाभ्येहि महाभाग [7]सर्वसत्त्ववशङ्कर ॥ ३० ॥

मृत्युमावाहयिष्यामि देवीं सर्वहरामहम् ।
देवि मृत्यो त्वमभ्येहि सर्वगे कामरूपिणि ॥ ३१ ॥

आवाहयामि वरदं चित्रगुप्तं [8]सुखप्रदम् ।
चित्रगुप्त समभ्येहि सर्वत्र [9]समदर्शन ॥ ३२ ॥

---

१. A. भ्रांतनाशनम्. B. –ध्वान्तनाशनम्. २. V. वह्नेर्भार्गं विभावरीम्. B. वह्नेर्भार्यां विभावरीम्. ३. A.B.V. शुभरूप. ४. A.B.C. धूमकेतो. ५. V. आगच्छेह महाभाग सर्वदुष्ट–. B. आयांतु शीघ्रमद्येह सर्वदुष्ट–. C. आयान्ति शीघ्रमत्येह सर्वदुष्ट–. ६. V. सर्ववाहन. ७. V.C. सर्वसत्त्वभयङ्कर. ८. A. समप्रदं. ९. A. समदर्शनम्.

अहमावाहयिष्यामि विरूपाक्षं महाबलम्।
विरूपाक्ष समभ्येहि निशाचरगणेश्वर॥ ३३॥

उष्ट्रमावाहयिष्यामि महामोहमिति श्रुतम्।
उष्ट्राभ्येहि [1]महाकाय महाग्रीव महागते॥ ३४॥

गौरीमावाहयिष्यामि जलाधिपतिसुन्दरीम्।
एहि गौरि महादेवि वरदे कामरूपिणि॥ ३५॥

हंसानावाहयिष्यामि [2]समुद्रेण सुपूजितान्।
आयान्तु वरदा हंसा रसाचारा विहङ्गमाः॥ ३६॥

पाशमावाहयिष्यामि सर्वाकर्षणतत्परम्।
पाशाभ्येहि महाभाग सर्वसत्त्ववशङ्कर॥ ३७॥

गङ्गामावाहयिष्यामि सर्वकल्मष[3]नाशिनीम्।
गङ्गे शीघ्रं त्वमभ्येहि पीयूषसदृशोदके॥ ३८॥

अहमावाहयिष्यामि यमुनां च [4]यमानुजाम्।
आगच्छ यमुने देवि सर्वकल्मष[5]नाशिनि॥ ३९॥

शिवामावाहयिष्यामि वायोः पत्नीं प्रभावतीम्।
शिवेऽभ्येहि महाभागे वरदे कामरूपिणि॥ ४०॥

[6]ऋद्धिमावाहयिष्यामि [7]जनमोहप्रवर्तिनीम्।
[8]ऋद्धे शीघ्रमिहाभ्येहि वरदे कामरूपिणि॥ ४१॥

अहमावाहयिष्यामि शिबिकां [9]परमायताम्।
शिबिके त्वमिहाभ्येहि सर्वसत्त्वसुखङ्करि॥ ४२॥

नरमावाहयिष्यामि नराधिपतिवाहनम्।
नर शीघ्रं त्वमभ्येहि तथा नृपतिनायक॥ ४३॥

---

१. V.C. महाभाग. २. A.B.C. समुद्रांल्लोकपूजितान्. ३. A.B.C. –नाशनम्.
४. A.B. च यमस्वसां. ५. B. नाशने. C. नाशनि. ६. V. omits ऋद्धिमा... कामरूपिणि.
७. B. जनमोहध्रुवर्द्धिनीम्. C. जनमोहप्रवर्धनीम्. ८. B.C.V. ऋद्धि. ९. C. परामायुधाम्.

शङ्खमावाहयिष्यामि निधिप्रवरमुत्तमम् ।
शीघ्रं शङ्ख त्वमभ्येहि धनाधिपतिवल्लभ ॥ ४४ ॥

पद्ममावाहयिष्यामि निधिप्रवरमुत्तमम् ।
पद्म शीघ्रं त्वमभ्येहि महाविभवकारक ॥ ४५ ॥

देवीमावाहयिष्यामि पार्वतीं हरवल्लभाम् ।
देवि शीघ्रं त्वमभ्येहि [१]सर्वकाम[२]वरप्रदे ॥ ४६ ॥

अहमावाहयिष्यामि जयन्तं शक्रनन्दनम् ।
जयन्त शीघ्रमभ्येहि सर्वासुरविमर्दन ॥ ४७ ॥

आवाहयिष्ये [३]वरदं श्रीकरं पुष्करं प्रभुम् ।
पुष्कर त्वमिहाभ्येहि सर्वज्ञानप्रकाशक ॥ ४८ ॥

ज्योत्स्नामावाहयिष्यामि त्रैलोक्यस्यैक[४]सुन्दरीम् ।
आगच्छ वरदे ज्योत्स्ने सर्वभूतसुखङ्करि ॥ ४९ ॥

अहमावाहयिष्यामि [५]तथैव नडकूबरम् ।
समभ्येहि महाभाग धनदस्यात्मसम्भव ॥ ५० ॥

[६]अहमावाहयिष्यामि पुरोजव[७]समञ्जसा ।
समभ्येहि महाभाग वायुपुत्रमहाबल ॥ ५१ ॥

[८]आवाहयिष्यामि तथा [९]रैवन्दमपराजितम् ।
सूर्यपुत्र समभ्येहि भक्तिकल्याणकारक ॥ ५२ ॥

धर्ममावाहयिष्यामि सर्वलोकसुखावहम् ।
[१०]धर्माभ्येहि महाभाग [११]जगतां परिपालक ॥ ५३ ॥

[१२]अर्थमावाहयिष्यामि सर्वलोकसुखावहम् ।
अर्थाभ्येहि महाभाग सर्वबाधाविनाशक ॥ ५४ ॥

---

१. V. महाविभवकारिके २. A.C. वरप्रद. ३. V. वरदं पुष्करं कामगं शुभम्. ४. V. –सुन्दरि. ५. V. त्वामेव नलकूबरम्. ६. V. omits अहमा.... महाबल. ७. C. समञ्जसः. ८. A.B.C. omit आवाहयिष्यामि.... पराजितम्. ९. V. रविपुत्रं यमाग्रजम्. १०. B. omits धर्माभ्येहि...सुखावहम्. ११. A. सर्वबाधाविनाशन. १२. A. omits अर्थ...विनाशक.

काममावाहयिष्यामि फलं सर्वस्य [1]कर्मणः ।
काम शीघ्रं त्वमभ्येहि सर्वप्राणिहृदि[2]स्थित ॥ ५५ ॥

[3]रतिमावाहयिष्यामि देवीं सर्वजगत्प्रियाम् ।
अभ्येहि वरदे देवि रति त्वमपराजिते ॥ ५६ ॥

निद्रामावाहयिष्यामि सर्वलोकसुखप्रदाम् ।
आगच्छ वरदे निद्रे त्रैलोक्य[4]परिमोहिनि ॥ ५७ ॥

आवाहयिष्ये वरदां महादेवीं सरस्वतीम् ।
शीघ्रं देवि त्वमभ्येहि सर्वकामवरप्रदे ॥ ५८ ॥

अहमावाहयिष्यामि तथा [5]धन्वतरिं प्रभुम् ।
[6]धन्वन्तरे त्वमभ्येहि [7]सर्वामयविनाशन ॥ ५९ ॥

अहमावाहयिष्यामि उच्चैः[8]श्रवसमश्वपम् ।
हयराज [9]समभ्येहि क्षीरोदार्णवसंभव ॥ ६० ॥

येषामावाहनं [10]प्रोक्तं तेषां मन्त्रमिदं पठेत् ।
[11]अश्विनौ [12]प्रणतः स्तौमि दर्भपाणिरतन्द्रितः ॥ ६१ ॥

आवाहनानां [13]च गणं तथोक्तं
महाशुभं पापहरं पवित्रम् ।
आवाहितास्सन्निहितास्त्ववश्यं
देवा भवन्त्युत्तमवंशजाताः ॥ ६२ ॥

इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे [14]लोकाद्यावाहनवर्णनो नाम ॥ १०५ ॥

---

१. V. कारण. C. कारणः. २. B. स्थिति. ३. V.A.B. रात्रिमा–. ४. C. –परिमोहनि. ५. A.B. धान्वंन्तरिं. ६. A.B. धान्वंतरे. C. धन्वन्तरि. ७. V. क्षीरोदार्णवसम्भव. ८. B. श्रमसमश्वपन्. ९. C. त्वमभ्येहि. १०. C. चोक्तं. ११. A. आश्विनो. B. अश्विनो. १२. A.B.C. प्राणस्तौतींति. १३. C. तु. १४. A.B.C. अत्युत्तमध्यायः.

## षडुत्तरशततमोऽध्यायः ।

मार्कण्डेयः—

आवाहनान्यतो [1]वच्मि यान्यहं यदुनन्दन ।
तेषामन्ते पठेच्छ्लोकं प्रत्येकस्य महाभुज ॥ १ ॥

याजकं यजमानं च श्रेयसाभ्येत्य योजय ।
इदमर्घ्यमिदं पाद्यं धूपोऽयं प्रतिगृह्यताम् ॥ २ ॥

आवाहयाम्यहं देवं वासुदेवं [2]जगत्पतिम् ।
अमृताध्मातमेघाभं [3]विद्युत्सदृशवाससम् ॥ ३ ॥

चतुर्वक्त्रं महाबाहुं चतुर्वेदधरं प्रभुम् ।
चतुराश्रमगोप्तारं चातुर्वर्ण्यधरं तथा ॥ ४ ॥

चतुर्युगं चतुष्केतुं चतुर्मूर्तिधरं परम् ।
[4]चतुरङ्घ्रितनुं नाथं चतुर्विधविभावनम् ॥ ५ ॥

[5]जरायुजस्य [6]जगतस्तथा चाण्डोद्भवस्य [7]च ।
[8]भावनं सर्वदेवेशं स्वेदजोद्भिदजस्य च ॥ ६ ॥

सर्वगं वरदं नित्यं सूक्ष्मं स्थूलमजं विभुम् ।
[9]आत्मस्थं च बहिस्थं च दूरस्थं [10]चान्तिकं च तम् ॥ ७ ॥

गुणाधारं गुणैर्हीनं गुणातीतं गुणोत्तरम् ।
सगुणं [11]निर्गुणात्मानं [12]चाजेयं [13]जगताम्पतिम् ॥ ८ ॥

एहि मे पुण्डरीकाक्ष शरणागत वत्सल ।
[14]क्षुरपर्यन्तवक्रान्तर् निर[15]स्तासुरमण्डल ॥ ९ ॥

गदावेगनिरस्तोऽग्रदैत्यनाथगणेश्वर ।
उत्फुल्लचारुकमलविराजितकराम्बुज ॥ १० ॥

---

१. A.B. वश्मि. २. B. जगत्पति. ३. V. विद्युद्दशवसाससम्. V. (f.) विद्युद्दशभा. स्वंरारम्. ४. A. चतुरंग्नितनुं. ५. A. जरायुगस्य. ६. V. कर्तव्यं तथा. ७. C. तु. ८. V. omits भावनं... च. ९. B. आत्मस्थे चावहिस्थं च. १०. चान्तिके. ११. C. निर्गुणात्मानम-जेयं. १२. B. –चाजोयं. १३. V.C. जगतः परम्. १४. A. क्षुरपर्यंक वक्रांत. B. क्षुरपर्यंत चक्रांत. १५. A.B. –स्ताम्बर मण्डल.

शंखनादोद्भव[1]त्रासमूढी[2]कृतमहासुर ।
महीकराम्बुजन्यस्तचरणद्वयराजित ॥ ११ ॥

कौस्तुभोद्भूतगोजाल[3]हतासुरविलोचन ।
वनमा[4]लाङ्कितोरस्क किरीटोद्भासिताानन ॥ १२ ॥

यज्ञ [5]यज्ञोपयज्ञाङ्ग यज्ञयोने जगद्गुरो ।
सर्वकामप्रदाचिन्त्य [6]सर्वशक्ते महाबल ॥ १३ ॥

आवाहयाम्यहं देवं सङ्कर्षणमयोनिजम् ।
शशाङ्कशतसङ्काशं [7]सतोयाम्बुदवाससम् ॥ १४ ॥

क्रोधाग्निशमिताशेषकल्पांतभुवनत्रयम् ।
[8]वाङ्मनःकायसम्भूतमलत्रितयनाशनम् ॥ १५ ॥

एहि सङ्कर्षणाचिन्त्य देव भक्तजनप्रिय ।
[9]लाङ्गूलाकृष्टदैत्येन्द्र [10]दीनेक्षणनिरीक्षण ॥ १६ ॥

[11]मुसलाग्रविनिर्भिन्नतमोमूर्तिविनाशन ।
हार्दमूर्ते [12]निशीथस्य तमसश्च विनाशक ॥ १७ ॥

देवमावाहयिष्यामि प्रद्युम्नमपराजितम् ।
दूर्वाङ्कुरदलश्यामं शशाङ्कांशुसमाम्बरम् ॥ १८ ॥

कामं कामप्रदं शान्तं कमनीयं [13]कलोत्तरम् ।
[14]सर्वप्राणभृतां देहे मनोविषयगोचरम् ॥ १९ ॥

प्रद्युम्नाभ्येहि देवेश प्रद्योतितचराचर ।
तेजोमूर्ते दुराधर्ष सूर्यकोटिसमप्रभ ॥ २० ॥

अज्ञातमध्यपर्यन्त देवारिगणनाशन ।
[15]चापयष्टिविनिर्मुक्तशराहतजगत्त्रय ॥ २१ ॥

---

१. V. –श्वास. २. B. –कृतमहाम्बर. ३. B. –हतांबरविलोचन. ४. A.C. –ऽाङ्कतो–. B. -लाकतो-. ५. A.C. –यज्ञप–. ६. V. सर्वशक्तिबलान्वित. B. सर्वशक्तो महाबल. ७. V. सजलाम्बुद. ८. C. वाङ्मयस्काय– ९. A. लांगलाकृष्टदैत्येन्द्र. B. लांगल्यकृष्टदैत्येन्द्र. C. लाङ्गूलाकृष्णदैत्येन्द्र. १०. A. दीनक्षण–. ११. A. समलाग्र–. १२. A.B. निशीत्थस्य. C. निशोथस्य. १३. A.B. कलोत्तरम्. V. सुशोभितम्. १४. V. सर्वमानभृतां देवं. १५. V. C. चापकृष्टि.

आवाहयाम्यहं देवं चानिरुद्धं जगद्गुरुम् ।
पद्मपत्राग्रसङ्काशं रक्ताम्बरविभूषणम् ॥ २२ ॥

[1]अरुद्धमार्गं सर्वत्र दीप्तानलसमप्रभम् ।
कार्यं परममीशानं जगत्कारणकारणम् ॥ २३ ॥

अनिरुद्ध त्वमभ्येहि व्याप्ताशेषचराचर ।
आकाशतुल्य [2]सत्खड्गविदारितसुराहित ॥ २४ ॥

चर्मसंछादिताशेष[3]भुवनादित्यविक्रम ।
[4]तेजोमृते(? त)महाचर्म संसारपरिपालक ॥ २५ ॥

आवाहयिष्ये वरदं चानन्तं [5]दीप्ततेजसम् ।
[6]नागानामीश्वरं शेषं महीमण्डलधारिणम् ॥ २६ ॥

लाङ्गला[7]लिङ्गितकरं [8]मुसलोद्योतहस्तकम् ।
[9]महोच्छ्रितेन तालेन तथा चिह्नेन राजितम् ॥ २७ ॥

एह्यनन्त महाभाग [10]शेषाहे धरणीधर ।
शशाङ्कशतसङ्काश [11]तथाम्बरनिभाम्बर ॥ २८ ॥

आधारः सर्वभूतानां त्वमेको भूतभावनः ।
त्वयेदं धार्यते [12]कृत्स्नं त्रैलोक्यं जगताम्पते ॥ २९ ॥

लक्ष्मीमावाहयिष्यामि विष्णोर्वक्षसि संस्थिताम् ।
पद्माननां पद्मकरां शशाङ्कसदृशाम्बराम् ॥ ३० ॥

हितस्थां सर्वलोकस्य वरदां कामरूपिणीम् ।
सर्वगां सर्वजननीं देवीं त्रिभुवनेश्वरीम् ॥ ३१ ॥

आगच्छ वरदे लक्ष्मि दुर्धरे भूतभावने ।
हरिप्रिये [13]विशालाक्षि सर्वलोकनमस्कृते ॥ ३२ ॥

---

१. C. अरुद्धमात्रं. २. V. सद्वज्रविदा-. ३. B. भुवनाचिंत्य. B.C. omit भुवना ...परिपालक. ४. V. सर्वेषां प्राणिनां कर्म्म संसारपरिपालक. ५. C. दीप्तितेजसम्. ६. B.C. drop नागाना. V. फणावलिगताशीर्षमही-. ७. V. -लिंगतकरं. ८. V.C. मुसलासक्तविग्रहम्. ९. A.B. महिच्छ्रितेन. १०. A. निःशेष. ११. V. तथाम्बरसुशोभित. १२. V. विश्वं त्रैलोक्यं च जगत्पते. B. कृत्स्नं त्रैलोक्यं जगतः पते. C. कृत्स्नं त्रैलोक्यं जगत्पते. १३. C. विशालाक्षे.

यत्र त्वं तत्र सकलं त्रैलोक्यं वरवर्णिनि ।
[1]युनक्षि भोगैः सकलं [2]स्मृतिप्राप्तं जनं शुभे ॥ ३३ ॥

तार्क्ष्यमावाहयिष्यामि मनोमारुतरंहसम् ।
पक्षवातसमुद्धृतसमस्तभुवनत्रयम् ॥ ३४ ॥

[3]गरुडेह समभ्येहि दीप्तानलचयोपम ।
महाविषतमोग्रस्तनिर्विषीकरणाच्युत ॥ ३५ ॥

तालमावाहयिष्यामि केतुं सङ्कर्षणस्य तु ।
एहि मे भगवंस्ताल समस्तभुवनेश्वर ॥ ३६ ॥

[4]झषमावाहयिष्यामि कामकेतुं वरप्रदम् ।
एहि मे मकराङ्गेह समस्तभुवनेश्वर ॥ ३७ ॥

ऋष्यमावाहयिष्यामि [5]मृगराजं महाबलम् ।
एहि ऋष्य महाभाग कर्ममूर्ते दुरासद ॥ ३८ ॥

देवमावाहयिष्यामि नृसिंहं ज्ञानरूपिणम् ।
दंष्ट्राकरालवदन[6]मलातप्रतिमेक्षणम् ॥ ३९ ॥

सहस्रयमसक्रोधं सहस्रेन्द्रपराक्रमम् ।
सहस्रधनदस्फीतं मनसोऽप्यतिशीघ्रगम् ॥ ४० ॥

विद्युज्जिह्वं [7]व्यावृतास्यं भ्रुकुटीकुटिलाननम् ।
वह्निज्वालावलीपुञ्जदुर्निरीक्ष्यमुखश्रियम् ॥ ४१ ॥

आगच्छेह नृसिंहाद्य महाबलपराक्रम ।
वज्रतीक्ष्ण[8]नखाक्रान्तमहादैत्येन्द्रजीवित ॥ ४२ ॥

अज्ञानध्वान्तमातङ्गभङ्ग[9]विस्पष्टकेसर ।
[10]महायन्त्रक वातोग्रदारुणाचिन्त्यविक्रम ॥ ४३ ॥

---

१. A.B.C. युनक्सि. २. C. स्मृतं प्राप्तं जने शुभे. V. स्मृतिप्राप्तं जनं शुभम्. ३. V.C. गरुडैर्हि. ४. A. omits झषमा... भुवनेश्वर. ५. C.V. ऋषिराजं. ६. V. –मलातमसितेक्षणम्. ७. V. व्यादितास्यं. B. व्यापृतस्यं. C. व्याधितास्यं. ८. C. –नखक्रांत–. ९. A.C. –विस्फोटकेसर. १०. V. महामन्त्रकपाटोग्रदा–.

देवमावाहयिष्यामि कापिलीं [1]तनुमास्थितम् ।
तेजोनिधानमजितं [2]सागरात्मजवाडवम् ॥ ४४ ॥

एहि मे कपिलाद्येह परमात्मन् सनातन ।
[3]ध्यानसंलग्नचित्तौघ सांख्यमार्गप्रवर्तक ॥ ४५ ॥

देवमावाहयिष्यामि नृवराहं महाबलम् ।
[4]भिन्नाञ्जनचयश्याम [5]लीलोद्धृतवसुन्धर ॥ ४६ ॥

[6]अनैश्वर्यमहामोहतमोनाशनभास्करम् ।
भक्तमुष्टभवत्रासनिहतासुरनायकम् ॥ ४७ ॥

आगच्छ नृवराहेह हिरण्याक्षविनाशन ।
[7]शेषाभभोगविन्यस्तमहाचरणपङ्कज ॥ ४८ ॥

शङ्खनादोद्भव त्राहि नियन्ता सुरनायकम् ।
देवमावाहयिष्यामि वराहं वरदर्पितम् ॥ ४९ ॥

[8]शशाङ्कलेखादंष्ट्राग्रविभासितजगत्त्रय ।
विस्मयोत्फुल्लनयनभूमिवीक्षितविग्रह ॥ ५० ॥

बालेन्दुतुल्यदंष्ट्राग्र [9]लीलोद्धृतवसुन्धर ।
एहि मे भगवन् देव वराहामितविक्रम ॥ ५१ ॥

निरस्ताशेषदैत्येन्द्र [10]दीनेक्षणनिरीक्षत ।
धर्ममावाहयिष्यामि सर्वभूतसुखावहम् ॥ ५२ ॥

दुर्विज्ञेयं बहुद्वारं [11]फलमूर्तिदुरासदम् ।
एहि धर्म [12]ममाभ्येहि भुवनत्रय[13]पालक ॥ ५३ ॥

समस्तपापशमन सर्वबाधाविनाशन ।
रुद्रमावाहयिष्यामि तेजोमूर्तिं दुरासदम् ॥ ५४ ॥

---

१. V. तनुमाश्रितम्. २. A.B.C. सगरात्मज–. ३. V.C. ध्यानवीक्षितसद्भाव सांख्य–. ४. A. स्थिरीकृताशेषधर्म लीलो–. ५. C. नीलोद्धृत वसुंधरम्. A.B. लीलोद्धृत वसुंदरम्. ६. V. omits अनैश्वर्य...नायकम्. ७. A. omits शेषाभ...वरदर्पितम्. ८. V. बालेन्दुलेखा–. ९. C. नीलोद्धृत–. १०. V. दीनभक्तजनोद्धर. A. दीनेक्षणनिरीक्षित. ११. V. खलमूर्ति–. B.C. बलमूर्ति–. १२. A.B. समाभ्येहि. १३. B. –पालकम्.

ऐश्वर्यमतिगम्भीरं सर्वसंहारकारकम् ।
एहि मे भगवन् रुद्र जटामण्डलदुर्दृश ॥ ५५ ॥

निर्दग्धाशेषभुवन तृतीयेक्षणतेजसा ।
देवमावाहयिष्यामि [1]ब्रह्माणं दीप्ततेजसम् ॥ ५६ ॥

चतुर्मुखं चतुर्बाहुं [2]गुणातीतं गुणोत्तरम् ।
देवदेव त्वमभ्येहि पितामह सुरेश्वर ॥ ५७ ॥

समस्तभुवनाध्यक्ष जगत्कारणकारण ।
भूमिमावाहयिष्यामि धारिणीं सर्वदेहिनाम् ॥ ५८ ॥

सर्वभूतप्रतिष्ठां च क्षितिं क्षोणीं सरस्वतीम् ।
एहि मे वरदे देवि वसुधे [3]भूतभाविनि ॥ ५९ ॥

सर्वाश्रये महाभागे [4]देववद्भयहारिणि ।
शङ्खमावाहयिष्यामि नभोमूर्तिमथाव्ययम् ॥ ६० ॥

[5]शब्दयोनिं निरालम्बं समस्तभुवनाश्रयम् ।
एह्येहि शङ्खप्रवर पाञ्चजन्य महास्वन ॥ ६१ ॥

शब्दमात्रहताशेषमहादानवमण्डल ।
पद्ममावाहयिष्यामि समस्त[6]भुवनाश्रयम् ॥ ६२ ॥

[7]अपां मूर्तिमयं सौम्यं [8]पुण्डरीकेतिसंज्ञितम् ।
एहि पद्म महाभाग भूतभव्यभवप्रभो ॥ ६३ ॥

लक्ष्मी[9]निलय विस्तीर्ण ब्रह्मयोने जगन्मय ।
चक्रमावाहयिष्यामि [10]क्षरत्पर्यन्तमण्डलम् ॥ ६४ ॥

[11]वज्रनाभं विशालाक्षं [12]वायुमूर्तिमनव्ययम् ।
कालचक्रं जगच्चक्रं धर्मचक्रं सुदर्शनम् ॥ ६५ ॥

---

१. V. ब्राह्मणं. २. V. गुणाधीनं. ३. B.C. भूतभावनि. ४. V. देववद्भयहारीणि. ५. B. शद्बयोपि. ६. A. –भुवनाशनम्. ७. C. आपो. ८. V. पुण्डरीकमिति स्मृतम्. ९. A.B. –विलय. १०. A.B. क्षुरपर्यंतमंण्डलम्. ११. C. वज्रनाभिं विशालाख्यं. १२. V.B. वायुमूर्जितमव्ययम्.

नित्यं सततगं देवं [१]तृप्तं दानवशोणितैः ।
[२]एहि चक्राभिघातारिमण्डलामितविक्रम ॥ ६६ ॥

देवेन्द्रहृदयत्रासतमो[३]नाशनभास्कर ।
गदामावाहयिष्यामि तेजोमूर्तिं [४]दुरासदम् ॥ ६७ ॥

गायत्रीं देवजननीं कालरात्रिं भयङ्करीम् ।
एहि कौमोदकि गदे समस्ता[५]सुरनाशिनि ॥ ६८ ॥

यासां त्वं [६]गह्वरी प्रोक्ता वैष्णवी तु [७]सुपूजिता ।
अहमावाहयिष्यामि [८]सांप्रतं नाम [९]लाङ्गलम् ॥ ६९ ॥

आगच्छ [१०]लाङ्गलचेह व्याहतिं घातकासुर ।
अहमावाहयिष्यामि [११]सौनन्दं मुसलं प्रभुम् ॥ ७० ॥

आगच्छ मुसलाचेह देवारिगणसूदन ।
चापमावाहयिष्यामि शार्ङ्गं रिपुनिषूदनम् ॥ ७१ ॥

आगच्छ चाप वरद देवासुरगणप्रिय ।
शरमावाहयिष्यामि मोहनं [१२]रिपुमोहनम् ॥ ७२ ॥

एहि [१३]विद्धारिबल[१४]जगच्छारिस्त्रिभुवनेश्वर ।
[१५]चर्म चावाहयिष्यामि ख्यातमावरणेति यत् ॥ ७३ ॥

चर्माभ्येहि विशाल त्वं सर्वस्यावरणं स्मृतम् ।
खड्गमावाहयिष्यामि नन्दकं नाम नामतः ॥ ७४ ॥

एहि खड्ग [१६]ममाशेषदैत्यनाथकुलान्तक ।
अहमावाहयिष्यामि वनमालां सुखावहाम् ॥ ७५ ॥

वनमाले त्वमभ्येहि [१७]बद्धाशेषजगत्त्रये ।
मणिमावाहयिष्यामि कौस्तुभं [१८]केशवाङ्गदम् ॥ ७६ ॥

---

१. A.B. मृतं. २. V.C. एहि चक्रामितशित जगत्पालनतत्पर. ३. V. -नाशनतत्पर. ४. V. दुरासदाम्. ५. B.C. –सुरनाशनि. ६. V. गह्वरा. ७. V.C. सुदुर्धरा. ८. V. सावन्तं. A. सांवर्तं. B. सांवर्तुं. ९. A.B. मंगलम्. १०. V.C. लाङ्गलास्येह व्याहतिं भुवनत्रयम्. ११. V. सौधन्वं मुसलं. १२. B.C. रिपुसूदनम्. १३. A.C. विद्धाखिलज- १४. A.B. –जगच्छत्रिभुवनेश्वर. १५. A. चर्ममावाहयिष्यामि. १६. A. समाशेष. १७. V. बुद्धा–. १८. V.C. केशवाङ्गगम्.

कौस्तुभ त्वमिहाभ्येहि मरीचि[1]विकचोद्भव ।
देवमावाहयिष्यामि हरिं हयशिरोधरम् ॥ ७७ ॥

शशाङ्क[2]शतसङ्काश [3]वेदोद्धरण[4]निश्चित ।
हयग्रीव त्वमभ्येहि शङ्खचक्रगदाधर ॥ ७८ ॥

वेदाहरण[5]दुःखार्तसमाश्वासितपद्मज ।
अहमावाहयिष्यामि ऋग्वेदं पदभूषितम् ॥ ७९ ॥

ऋग्वेद त्वमिहाभ्येहि ब्रह्ममूर्ते वरप्रद ।
अहमावाहयिष्यामि यजुर्वेदं[6]मतिप्रियम् ॥ ८० ॥

यजुर्वेद त्वमभ्येहि देवेशगणनायक ।
अहमावाहयिष्यामि देवमाथर्वणं शुभम् ॥ ८१ ॥

आगच्छा[7]थर्ववेदेह [8]सर्वकृत्यकराच्युत ।
देवमावाहयिष्यामि भोगिभोगासनस्थितम् ॥ ८२ ॥

भोगिभोगासनासीन समागच्छ जगद्गुरो ।
देवमावाहयिष्यामि भोगिभोगशयं प्रभुम् ॥ ८३ ॥

लक्ष्मीसहायं वरदं [9]लोकसाक्षिणमव्ययम् ।
एह्येहि [10]पुण्डरीकाक्ष भोगिभोगाशयाच्युत ॥ ८४ ॥

त्रैलोक्यनाथ गोविन्द मधुकैटभसूदन ।
देवमावाहयिष्यामि [11]देवं विष्णुं त्रिविक्रमम् ॥ ८५ ॥

समस्तभुवनातीत [12]पादाक्रान्तजगत्त्रय ।
त्रिविक्रम त्वमभ्येहि [13]दैत्यदीनाक्षिवीक्षित ॥ ८६ ॥

विकचोत्फुल्लनयन [14]त्रिदशेश तथेक्षित ।
[15]देवमावाहयिष्यामि विश्वरूपधरं [16]विभुम् ॥ ८७ ॥

---

१. V. –विकचोद्भव. २. B. शतसंकशे. ३. C. देवोद्धरण–. ४. B. निश्चितम्ः ५. C. –दुःखान्त–. ६. A.B. –मतिश्रियम्. ७. A.B. –थर्वदेवेह. ८. V. सर्वकर्मफलप्रद. ९. A. लोकसाक्षणमव्ययम्. १०. B. पुण्डरीकाक्षो. ११. V. विष्णुदेवं. १२. A.B. पापाक्रांत. १३. A. दैत्यदेनाक्षिवीक्षित. C. दैत्यदीनाक्षवीक्षितम्. १४. V.C. त्रिदशैः शतमीक्षित. १५. V.B. अहमावाहयिष्यामि. १६. C. हरिम्.

[1]सर्वाधारधरं देवं शत्रुनाशमशेषतः ।
[2]सृजन्तमिच्छयैवेह सर्वभूतान्यनेकशः ॥ ८८ ॥

[3]धारयन्तं शरीरेण सर्वं जगदिदं तथा ।
विश्वरूप त्वमभ्येहि [4]सर्वायुधविभूषित ॥ ८९ ॥

[5]सर्वालङ्कारभूषाङ्गनानावर्णधराधर ।
[6]देहस्थाशेषभुवन [7]जगत्कारणकारक ॥ ९० ॥

[8]नानावर्णधराचिन्त्य [9]मायादार्शितविग्रह ।
देवमावाहयिष्यामि मत्स्यं [10]सागरगोचरम् ॥ ९१ ॥

मत्स्यदेव त्वमभ्येहि [11]लोकजीवधराच्युत ।
हंसमावाहयिष्यामि देवं ज्ञानप्रदं [12]प्रभुम् ॥ ९२ ॥

[13]देवमावाहयिष्यामि [14]सर्वाज्ञानविनाशन ।
हंस शीघ्रं त्वमभ्येहि सर्वाज्ञानविनाशन ॥ ९३ ॥

कूर्ममावाहयिष्यामि [15]धृतमन्दरपर्वतम् ।
एह्येहि भगवन् कूर्म श्यामोत्पत्तिकराच्युत ॥ ९४ ॥

देवमावाहयिष्यामि [16]स्त्रीरूपधरमुत्तमम् ।
स्त्रीरूपधारिन्नभ्येहि सुरसोमप्रदायक ॥ ९५ ॥

नरमावाहयिष्यामि देवं तपसि [17]निष्ठितम् ।
नराभ्येहि महाभाग धर्ममूर्ते जगत्पते ॥ ९६ ॥

देवमावाहयिष्यामि तथा नारायणं प्रभुम् ।
नारायण [18]समभ्येहि [19]परदर्पविनाशन ॥ ९७ ॥

---

१. B. drops सर्वाधारधरं...... –न्यनेकशः. C. drops सर्वाधारधरं...... –शेषतः. V. श्वसन्तमनिशं वक्त्रैर्भूतग्राममशेषतः. २. V. सृजंति च महाराज. C. सृजंति च महादेवं. ३. A.B. धारयाणं. ४. C. सर्वायुधविभूषण. B. सर्वायुधविभूषत. ५. B. drops सर्वालङ्कार... धराधर. V.C. सर्वभूतेन तातेन नानावर्ण धरापह. ६. B. देहस्तशेषभुवन. ७. V.C. जगत्कारणकारण. ८. B. drops नानावर्ण... चिन्त्य. V. दुर्निरीक्ष्यातिगम्भीर माया–. ९. B. मायार्धितविग्रह. १०. V.B.C. सलिलगोचरम्. ११. A. लोकदेवधराच्युत. १२. V.B. विभुम्. १३. V. drops देव...विनाशन. १४. A.B.C. सर्वज्ञानविनाशन. १५. A.B. धृतमन्दारपर्वतम्. १६. V. स्त्रीरूपं धर्ममीश्वरम्. १७. A. तिष्ठितम्. १८. A. ममाभ्येहि. १९. A.B. परदर्पविनाशक. V. सर्वपापहराव्यय.

हरिमावाहयिष्यामि देवेशं कनकप्रभम् ।
हरे देव त्वमभ्येहि परदर्पविनाशक ॥ ९८ ॥

कृष्णमावाहयिष्यामि सजलाम्बुदसन्निभम् ।
[1]कृष्णाभ्येहि महाभाग देवदेव जगत्प्रिय ॥ ९९ ॥

देवमावाहयिष्यामि दत्तात्रेयं तपोन्वितम् ।
दत्तात्रेय त्वमभ्येहि वेदोद्धरणतत्पर ॥ १०० ॥

अहमावाहयिष्यामि वाल्मीकिं [2]तपसां निधिम् ।
[3]वाल्मीके त्वमिहाभ्येहि [4]स्वकर्माख्यापकाच्युत ॥ १०१ ॥

राममावाहयिष्यामि हतक्षत्रियमण्डलम् ।
भार्गवाभ्येहि मे नाथ जटामण्डलदुर्दृश ॥ १०२ ॥

आवाहनं करिष्यामि [5]परशुं दीप्ततेजसम् ।
आगच्छ परशो शीघ्रं [6]लघ्वीकृतवसुन्धर ॥ १०३ ॥

पृथुमावाहयिष्यामि [7]चक्रवर्तिनमूर्जितम् ।
पृथो शीघ्रं त्वमभ्येहि पृथ्वीनाथ महाबल ॥ १०४ ॥

राममावाहयिष्यामि कृतराक्षस[8]निग्रहम् ।
राम शीघ्रं त्वमभ्येहि [9]धर्मसेतो दुरासद ॥ १०५ ॥

अहमावाहयिष्यामि प्रद्युम्नं भरतं [10]विभुम् ।
भरत त्वमिहाभ्येहि कृतगन्धर्वनिग्रह ॥ १०६ ॥

अहमावाहयिष्यामि लक्ष्मणं रिपुनाशनम् ।
लक्ष्मण त्वमिहाभ्येहि मेघनादास्त्र[11]तस्कर ॥ १०७ ॥

अहमावाहयिष्यामि शत्रुघ्नं दीप्ततेजसम् ।
शत्रुघ्न शीघ्रमभ्येहि [12]लवणघ्नारिमर्दन ॥ १०८ ॥

---

१. B. omits कृष्णाभ्येहि... तपोन्वितम. २. B. तपसा. ३. B. वाल्मीकि. ४. B. सुकर्मा-. V. वेदोद्धरणतत्पर. ५. A.B.C. परशोर्दीप्ततेजसः. ६. V. लक्षीकृत-. ७. A.B. चक्रमूर्तिनमूर्जितम्. ८. A. -विग्रहम्. ९. B. धर्मसीतो. १०. C. प्रभुम्. ११. C.V. -भास्कर. १२. V.C. लवणासुरमर्दन.

व्यासमावाहयिष्यामि वेदव्यासं जगद्गुरुम् ।
वेदव्यास त्वमभ्येहि सर्वधर्मप्रदर्शक ॥ १०९ ॥

अहमावाहयिष्यामि धर्मपुत्रं युधिष्ठिरम् ।
युधिष्ठिर त्वमभ्येहि सर्वधर्मभृतांवर ॥ ११० ॥

अहमावाहयिष्यामि [1]भीमं राक्षसकण्टकम् ।
भीमसेन त्वमभ्येहि शत्रुनाश तमोहर ॥ १११ ॥

अहमावाहयिष्यामि पार्थं रिपुनिषूदनम् ।
अर्जुनाभ्येहि मे शीघ्रं लब्धीकृतवसुन्धर ॥ ११२ ॥

[2]आवाहयिष्ये नकुलं रूपेणाप्रतिमं भुवि ।
नकुल त्वमिहाभ्येहि [3]खड्गचर्मधराच्युत ॥ ११३ ॥

अहमावाहयिष्यामि सहदेवं रणप्रियम् ।
सहदेव त्वमभ्येहि रूपद्रविणसंयुत ॥ ११४ ॥

कृष्णामावाहयिष्यामि स्वर्गलक्ष्मीं मनोहराम् ।
याज्ञसेनि त्वमभ्येहि [4]लब्धीकृतवसुन्धरे ॥ ११५ ॥

सीतामावाहयिष्यामि रामपत्नीं यशस्विनीम् ।
सीते देवि त्वमभ्येहि महीतल[5]समुत्थिते ॥ ११६ ॥

अहमावाहयिष्यामि देवकीं [6]कृष्णमातरम् ।
देवकि [7]त्वमिहाभ्येहि देवमातर्जगत्प्रिये ॥ ११७ ॥

अहमावाहयिष्यामि यशोदां जगतः प्रियाम् ।
यशोदे त्वमिहाभ्येहि [8]संवर्धितजनार्दने ॥ ११८ ॥

देवीमावाहयिष्यामि [9]एकानंशेति विश्रुताम् ।
[10]एकानंशे त्वमभ्येहि कृष्णरक्षार्थमुद्यते ॥ ११९ ॥

---

१. भीमं मारुतपुत्रकम्. B. भीमं राक्षसकाण्डकम्. २. V. अहमावाहयिष्यामि नकुलं रूपशोभितम्. C. आवाहयिष्ये नकुलं रूपेणाप्रतिमाभुवि. ३. V.C. शंखचर्म. ४. V. लक्षीकृत–. ५. V.C. –समुक्षिते. ६. A.B.C. केशवारणिम्. ७. V.C. त्वं समभ्येहि. ८. A. संवर्धित जगत्प्रिये. ९. V. एकानाशीति–. A. एकानंशिति–. १०. V.C. एकानाशे. B. एकानंत्वे.

देवीमावाहयिष्यामि रुक्मिणीं कृष्णवल्लभाम् ।
रुक्मिणि त्वमिहाभ्येहि जगतामेकसुन्दरि ॥ १२० ॥

देवीमावाहयिष्यामि सत्यभामां [1]मनोहराम् ।
सत्यभामे त्वमभ्येहि [2]देवि केशववल्लभे ॥ १२१ ॥

[3]देवीस्त्वावाहयिष्यामि कृष्णपत्नीरहं शुभाः ।
देव्यः सर्वाः समायान्तु गान्धारीप्रमुखास्त्विह ॥ १२२ ॥

राममावाहयिष्यामि मदविभ्रान्तलोचनम् ।
कुण्डलैकधरं [4]शान्तं वनमालाविभूषितम् ॥ १२३ ॥

एहि राम महाभाग रेवतीदयिताच्युत ।
हतप्रलम्ब सीराग्र[5]व्याकृष्ट[6]यमुनोदक ॥ १२४ ॥

कृष्णमावाहयिष्यामि तोयपूर्णाम्बुदच्छविम् ।
चाणूरबलदर्पघ्नं कंसासुर[7]विनाशनम् ॥ १२५ ॥

एहि कृष्ण महाभाग [8]लघ्वीकृतवसुन्धर ।
निरस्तदानवश्रेष्ठ [9]धृतगोवर्धनाचल ॥ १२६ ॥

अहमावाहयिष्यामि प्रद्युम्नं मकरच्छविम् ।
देवारिशम्बरप्राणतस्करं रतिवल्लभम् ॥ १२७ ॥

प्रद्युम्न त्वमिहाभ्येहि परसैन्यविनाशन ।
[10]सायकोत्कृत्तदैत्येश[11]मूर्धमण्डितभूतल ॥ १२८ ॥

अहमावाहयिष्यामि अनिरुद्धं जगद्गुरुम् ।
बाणासुरमहासैन्यसमुद्रवडवानल ॥ १२९ ॥

अनिरुद्ध त्वमभ्येहि महाबलपराक्रम ।
खड्गपाणे महाभाग [12]ऊषाहृदयवर्धन ॥ १३० ॥

---

१. C. मनोरमाम्. २. A. देवकि शिववल्लभे. ३. A. देवीमावाहयिष्यामि कृष्णपत्नी हरशुभाम्. ४. A.B. मत्तं. ५. B.C. –व्याकृष्ण–. ६. A.B. –यमनोदक. ७. A.B. –विनाशन. ८. V. लक्ष्मीकृत–. ९. C. हतगोवर्धना–. १०. V. omits सायकोत्कृत... भूतल. ११. C. पूर्वमण्डित–. १२. C. तथा हृदयवर्धन. V. ऊषाहृदयवर्द्धन.

[1]साम्बमावाहयिष्यामि गदापाणिं महाबलम् ।
एहि साम्ब [2]महासत्त्व नाशिताशेषदानव ॥ १३१ ॥

अहमावाहयिष्यामि युयुधानं बलोत्कटम् ।
युयुधान त्वमभ्येहि दीर्घबाहोऽरिमर्दन ॥ १३२ ॥

अहमावाहयिष्यामि सौभद्रमपराजितम् ।
वसुभद्रं च धर्मज्ञं नीलाम्बरधरावुभौ ॥ १३३ ॥

वासुदेवप्रतीहारौ प्रासहस्तौ सुलोचनौ ।
तप्तजाम्बूनदाकारौ महाबलपराक्रमौ ॥ १३४ ॥

सुभद्र शीघ्रमागच्छ पूर्वद्वारस्य वामतः ।
गणैः [3]सानुचरैस्सार्द्धं भवसन्निहितस्सदा ॥ १३५ ॥

अहमावाहयिष्यामि तथाषाढं बलान्वितम् ।
यज्ञतातं च धर्मज्ञं पीताम्बरधरावुभौ ॥ १३६ ॥

नीलजीमूतसङ्काशौ तथा मुद्गरधारिणौ ।
सङ्कर्षणप्रतीहारौ चारुरूपौ मनोहरौ ॥ १३७ ॥

आषाढ त्वमिहागच्छ दक्षिणद्वारवामतः ।
गणैः सानुचरैः सार्धं भव [4]सन्निहितः सदा ॥ १३८ ॥

यज्ञतात त्वमभ्येहि द्वारदक्षिणतो भव ।
गणैः सानुचरैः सार्धं भव सन्निहितः सदा ॥ १३९ ॥

जयमावाहयिष्यामि दीप्ततेजसमच्युतम् ।
विजयं च विशालं च पाटलाम्बरधारिणौ ॥ १४० ॥

शशांकांशुप्रतीकाशौ तथोभौ खड्गधारिणौ ।
प्रद्युम्नस्य प्रतीहारौ कामदेवौ सुवर्चसौ ॥ १४१ ॥

जय शीघ्रं त्वमभ्येहि पश्चिमद्वारवामतः ।
गणैः सानुचरैः सार्धं भव सन्निहितः सदा ॥ १४२ ॥

---

१. C. omits साम्ब... महाबलम्. २. V. महाभाग. ३. A.B. सानुचरैस्सार्कं
४. B. सन्निहिता.

विजय त्वमिहाभ्येहि द्वारदक्षिणतो भव ।
गणैः सानुचरैः सार्धं भव सन्निहितः सदा ॥ १४३ ॥

अहमावाहयिष्यामि तथामोदं जगत्प्रियम् ।
प्रमोदं च महावीर्यं श्वेताम्बरधरावुभौ ॥ १४४ ॥

सिन्दूरारुणसङ्काशौ शक्तिहस्तौ बलोत्कटौ ।
अनिरुद्धप्रतीहारौ महाबलपराक्रमौ ॥ १४५ ॥

आमोद शीघ्रमभ्येहि द्वारदक्षिणतो भव ।
गणैः सानुचरैः सार्धं भव सन्निहितः सदा ॥ १४६ ॥

सर्वानावाहयिष्यामि वासुदेवगणानहम् ।
वासुदेवसमाकारान् वासुदेवपराक्रमान् ॥ १४७ ॥

[1]प्रद्युम्नस्य समाकारान् प्रद्युम्नाभपराक्रमान् ।
प्रद्युम्नस्य गणाः शीघ्रमायान्तु भुवनेश्वराः ॥ १४८ ॥

[2]वासुदेवगणाः शीघ्रमायान्तु भुवनेश्वराः ।
सर्वकामप्रदा वीराः सर्वेशाः सर्वशक्तयः ॥ १४९ ॥

सर्वानावाहयिष्यामि [3]अनिरुद्धगणानहम् ।
अनिरुद्धसमाकारानिरुद्ध[4]पराक्रमान् ॥ १५० ॥

अनिरुद्धगणाः शीघ्रमायान्तु भुवनेश्वराः ।
सर्वकामप्रदा वीराः सर्वेशाः सर्वशक्तयः ॥ १५१ ॥

प्रादुर्भाव[5]गतस्येह विष्णोरमिततेजसः ।
नोक्तमावाहनं यत्र वासुदेवोक्तमञ्जसा ॥ १५२ ॥

कार्यमावाहनं तत्र सर्वगस्य महात्मनः ।
अथ वा [6]विश्वरूपोक्तमेतत् सारं तवेरितम् ॥ १५३ ॥

---

१. B. omits प्रद्युम्नस्य...पराक्रमान्. २. V. omits वासुदेव...भुवनेश्वराः.
३. C. प्रद्युम्नस्य गणानहम्. ४. A. पराक्रमान्. ५. V. –गतस्येव. ६. V.C. विष्णुरूपोक्तं.

आवाहने ये कथितास्तु मन्त्रा
ज्ञेयास्त एवेह [1]विबोधनेऽपि ।
आवाहने तत्र [2]विबोधने तु
बुधैः प्रयोज्यं [3]यदुवंशनाथ ॥ १५४ ॥

इति श्रीविष्णुधर्मोत्तरे मार्कण्डेयवज्रसंवादे शेषसर्वदेवावाहनवर्णनो नाम ॥ १०६ ॥

---

१. C. -निबोधने-. २. C, निबोधनं. ३. C. यदुवंशनाथेति.

## सप्तोत्तरशततमोऽध्यायः ।

मार्कण्डेय :— [1]प्रोक्तो विबोधने वीर मन्त्रो हि न( ? हीन ) दिवौकसाम् ।
[2]वासुदेवस्य वक्ष्यामि तव [3]राजन् विबोधनम् ॥ १ ॥

देवं विबोधयिष्यामि वासुदेवमजं विभुम् ।
अनादिमध्यपर्यन्तं महाबलपराक्रमम् ॥ २ ॥

अनन्तं सर्वगं नाथं महद्भ्योऽपि महत्तरम् ।
सूक्ष्मातिसूक्ष्मं दूरस्थं सन्निकर्षगतं तथा ॥ ३ ॥

नारायणं [4]सुदुष्पारं देवं शार्ङ्गधनुर्धरम् ।
अतसीकुसुमश्यामं पीतवाससमच्युतम् ॥ ४ ॥

[5]विबुद्धः पुण्डरीकाक्षः शरणागतवत्सलः ।
संसारसरसीमग्नभग्ननागकृतकृप ॥ ५ ॥

चक्रपर्यन्तच्छिन्नाग्रदुःस्वप्नग्राहदुर्धर ।
संसेवितमहायोगनिद्रा[6]संमीलितेक्षण ॥ ६ ॥

शेषाहि[7]भोगपर्यन्तविस्तीर्णशयनाच्युत ।
तत्फणावलिरत्नांशुवितानकृतोत्तर ॥ ७ ॥

लक्ष्मीसंवाह्यमानाङ्घ्रिकमलद्वयराजित ।
निर्णाशितमहादैत्य कृतक्षेमजगत्त्रय ॥ ८ ॥

शीतांशुरश्मिजालाभदुग्धाम्भोधिशयाच्युत ।
भक्तानां नरक[8]श्वभ्रनिपातभयनाशन ॥ ९ ॥

तेषां स्वर्लोकगमनदत्तहस्तावलम्बन ।
संसारसागरोत्तारमहापोत जनार्दन ॥ १० ॥

---

१. B.C. प्रोक्तं. २. B. वसुदेवस्य. ३. V.B.C. राजन्विबोधनम्. ४. V. मृदुकरं.
५. A.B. विबुधः. ६. B, –संमीलितेक्षणः. ७. C. भोगपर्यंक. ८. A.B. शुभ्र.

नामग्रहणमात्रेण [1]घनाघक्षयकारक ।
[2]स्तुतिमात्रकृताशेषमनोरथ [3]महाबल ॥ ११ ॥

त्रिविक्रमक्रमाक्रान्तब्रह्माण्डोत्तर[4]मण्डप ।
[5]बालेन्दुतुल्यदंष्ट्राग्रलीलोद्धृतवसुन्धर ॥ १२ ॥

एते विबोधयन्ति त्वां देवाः सेन्द्रपुरोगमाः ।
ऋषयश्च महाभागास्त्रैलोक्यामलदर्शिनः ॥ १३ ॥

विबोधयति देव [6]त्वां ब्रह्मा शुभ[7]चतुर्मुखः ।
[8]चतुर्वेदोगदा( ? द्गता )भिस्तु गीर्भिर्देववराच्युत ॥ १४ ॥

त्यज विबुधगणारि[9]सूदनाद्य निद्रां
भव [10]भुवनपतेऽघ[11]संचयापहो मे ।
त्वयि भवति हि यस्य नाथ भक्तिरग्र्या
गतिरतिशयनी तु तस्य दैवतेभ्यः ॥ १५ ॥

**इति श्रीविष्णुधर्मोत्तरेषु मार्कण्डेयवज्रसंवादे वासुदेवविबोधनो नाम ॥ १०७ ॥**

---

१. A.B.V. घनावक्षयकारक. २. V. स्वति–. ३. V. महाफल. ४. A.B. –मण्डल. ५. V.C. बालेन्दुकल्पदंष्ट्राग्र. ६. B. त्वं. ७. A.B. –चतुर्मुखाः. ८. A. चतुर्वेदो हृताभिस्तु. B. चतुर्वेदोद्गाताभिस्तु. V. यजुर्वेदो गताभिस्तु. ९. C. –सूदनाद्रि. १०. B. भवन.– ११. B.C. –संचयापहामे.

## अष्टोत्तरशततमोऽध्यायः ।

वज्र :— भगवन् सर्वदेवानां मूर्तयः [१]परिपिण्डिताः ।
पञ्चभूतयुता यस्मात्तस्मात्तेषां भृगूत्तम ॥ १ ॥

आवाहनविधिः[२]प्रोक्तो यत्तद्युक्ततमं मतम् ।
आवाहितास्समायान्ति यत्र [३]कामावसायिताम् ॥ २ ॥

आश्रित्य महिमां प्राप्तिं [४]लघिमां च तथा सुराः ।
विष्णुः [५]सर्वगतो देवो महद्भ्योऽपि महत्तरः ॥ ३ ॥

सूक्ष्मेभ्यश्चातिसूक्ष्मश्च सर्वव्यापी जगन्मयः ।
नास्ति किञ्चिज्जगद् यस्मिन् यत्र नास्ति जनार्दनः ॥ ४ ॥

सदसच्च महाभाग तेन व्याप्तं महात्मना ।
आवाहनेन किं कार्यं तस्य सर्वगतस्य तु ॥ ५ ॥

[६]सेंद्रेन्द्रियमहाशक्तिः( ? सर्वेन्द्रियमनःशक्तिः )* सर्वत्र [७]परिपठ्यते ।
एतन्मे संशयं छिन्धि त्वं हि सर्वविदुच्यसे ॥ ६ ॥

मार्कण्डेय :— सर्वदेवगणा यद्वद् वज्र पिण्डितमूर्तयः ।
[८]प्रादुर्भावगतोऽप्येवं देवो मधुनिसूदनः ॥ ७ ॥

पञ्चभूतयुता मूर्तिः सर्वा भवति [९]पिण्डिता ।
आद्यन्तमध्यसंयुक्ता सर्वस्यैव यदूत्तम ॥ ८ ॥

प्रादुर्भावगतो विष्णुर्यथा देवगणास्तथा ।
[१०]आवाहितः सन्निहितो भवतीति [११]विनिश्चयः ॥ ९ ॥

देवस्य द्विविधा मूर्तिः परा चैव तथापरा ।
परायाः( ? परा या ) [१२]पौरुषी मूर्तिः पञ्चभूत[१३]विवर्जिता ॥ १० ॥

---

१. V. परिकीर्तिताः. २. A.B.C. प्रोक्ता. ३. B. कामायसीचिताम् .· ४. B. लघिशं. ५. A. संसर्वतो. ६. V. महेंद्रिय महाभाग. ७. V.C. परिपच्यते. ८. B. प्रादुर्भाविगतो–. ९. V. C. मण्डिता. १०. V. आहितः. ११. C. विनिश्चयम्. V. विनश्चयः. १२. B. पौरुषे. १३. C.V. –विराजिता. *cf. Ślo. 12.

[1]तया समूर्तिर्भवति सर्वगः परमेश्वरः ।
पुरुषेण [2]विना लोके न किञ्चिदिह विद्यते ॥ ११ ॥

अनादिमध्यनिधनस्त्वप्रमेयतनुस्तथा ।
[3]सर्वेन्द्रियमनःशक्तिः सर्वतः स तथा नृप ॥ १२ ॥

प्रादुर्भावगतस्यापि तस्य या [4]सर्वशक्तिता ।
इच्छतस्सा विनिर्दिष्टा न [5]त्वेषानिच्छतो नृप ॥ १३ ॥

पुरुषत्वे ह्यनन्तस्य या राजन् सर्वशक्तिता ।
निसर्गसिद्धा सा ज्ञेया सदा सर्वत्र यादव ॥ १४ ॥

आवाहनमथात्रापि क्रियते यज्जगत्पतेः ।
[6]नित्यं सन्निहितस्यापि सर्वत्र परमेष्ठिनः ॥ १५ ॥

केवलं कारणं तत्र मनसस्तुष्टिकारणम् ।
आवाहितो मया देवः स्थाने सन्निहितोऽपि च ॥ १६ ॥

आवाहनं [7]स( ? स्व )तुष्ट्यर्थं पुरुषस्य यथा स्थितम् ।
तथाप्यर्चा महाभाग स्वतुष्ट्यर्थं( ? र्थं )[8]प्रयोजना ॥ १७ ॥

नित्यतृप्तस्य किं तस्य कार्यं भवति चार्चया ।
केवलं भक्तितुष्ट्यर्थं [9]अर्चां तेभ्यः प्रतीच्छति ॥ १८ ॥

योऽसावर्चयते देवो यत्र [10]देवोऽर्च्यते बुधैः ।
अभ्यर्चते च यैर्भावैः [11]सर्वं तद् विद्धि तन्मयम् ॥ १९ ॥

तस्यार्चाकरणं विद्धि कर्तृप्रीतिप्रयोजनम् ।
ज्ञेयं तथैव चात्मानं( ? त्मत्वं ) तस्य सर्वगतस्य तु ॥ २० ॥

अनादिकारणं( ? अर्चादिकरणं ) तेन नित्यतृप्तेन यादव ।
अनुग्रहार्थं भक्तानां चात्मनः संप्रवर्तितम् ॥ २१ ॥

---

१. A.B. तथासमूर्त्यर्भिवति. २. A. समालोके. ३. C.V. सर्वेंद्रियमनाः. ४. B. सर्वशक्तितः. ५. A. त्वेवानिच्छतो. ६. A B. नित्य. ७. V.C. स्वतृप्त्यर्थं. ८. V. प्रयोजनम्. ९. V. स भक्तेभ्यः. १०. A. दैवार्च्यते. ११. V. सर्वे.

अशरीरः शरीरस्थो यथा भवति भूपते ।
भक्तलक्षण[1]बन्धार्थं तथैवावाह्यते त्वसौ ॥ २२ ॥

[2]अनाकारे महाराज [3]लक्ष्यबन्धस्तु दुष्करः ।
[4]साकारैर्लक्ष्यबन्धस्तु कर्तुं वै शक्यते [5]सुखम् ॥ २३ ॥

विधिवच्च तथाकारः प्रादुर्भावगतस्य [6]च ।
मयोक्तो राजशार्दूल पुरस्तादेव शास्त्रतः ॥ २४ ॥

भावो भवतु यो यस्मिन् भावनायां भवेन्नरः ।
तत्रैव भावनानेन कार्या चार्चा च यादव ॥ २५ ॥

आदौ कृत्वा महाभाग साकारे [7]लक्ष्यबन्धनम् ।
ततः समर्थो भवति शून्ये ध्याने नरोत्तम ॥ २६ ॥

[8]एवमावाहनं तस्य तथा पूजा च यादव ।
प्रबुद्धैः क्रियते यत्ना[9]दात्मानुग्रहकारणात् ॥ २७ ॥

नित्यतृप्तो न तृप्त्यर्थमुपहारं प्रय(? ती)च्छति ।
प्रतीच्छति महाराज भक्तानु[10]ग्रहकारणात् ॥ २८ ॥

मोक्षप्राप्तावुभावेतौ त्वया ज्ञेयौ महाभुज ।
ज्ञानमार्गः क्रियामार्गः कृतो यश्च निराशिषः ॥ २९ ॥

वज्र बन्धाय भवति सकामेन क्रिया कृता ।
निष्कामेन कृता सैव [11]मोक्षाय तु विधीयते ॥ ३० ॥

आवाहिताः [12]सन्निहितास्तु देवा [13]भवन्त्यवश्यं नृप [14]मन्त्रयुक्त्या ।
स्वतुष्टये देववरस्य विष्णोरावाहनं वज्र बुधैः प्रदिष्टम् ॥ ३१ ॥

इति श्रीविष्णुधर्मोत्तरेषु मार्कण्डेयवज्रसंवादे आवाहनप्रयोजनं नाम ॥ १०८ ॥

---

१. V. –बोधार्थं. २. V. अनाकारं. B. अनाकारो. ३. A.C. लक्षबंधस्तु. ४. A. C. साकारे लक्ष–. V. –र्लक्ष. ५. B. मुखम्. ६. V. हि. B. तु. ७. C.V. लक्षबंधनम्. ८. A.B. एवमावाहने. ९. B. –भक्तानुग्रहकारणात्. V. –नुग्रहकारणम्. १०. V. –नुग्रह-कारकः. ११. V. मोक्षायैव विधीयते. १२. V. सन्निहितास्तदेव. १३. A.B. भवंत्यवश्यं. १४. V. मंत्रयुक्ताः. C. मंत्रशक्त्या.

## नवोत्तरशततमोऽध्यायः ।

वज्र उवाच — भगवन् होमविधिमाचक्ष्व ।

तमुवाच भगवान् मार्कण्डेयः-[१]अधिवासितो भगवान् अग्निं प्रज्वाल्य [२]परिसमूह्याज्येन [३]विलीनेनोत्प्लुतेन रक्षोघ्न[४]मन्त्रमाज्यभागान्तरं प्रागुक्तं हुत्वा वक्ष्यमाणैर्नामभिः स्वाहान्तै[५]श्चतुर्थ्या प्रयुक्तैः यवतिलसिद्धार्थनिकैकेन नाम्ना अष्टौ वाष्टविंश[६]त्यपि वाष्टोत्तरशतं [७]वाज्याहुतीर्जुहुयात् । ॐ नमो भगवते वासुदेवाय । ॐ नमो भगवते सङ्कर्षणाय । ॐ नमो भगवते प्रद्युम्नाय । ॐ नमो भगवते अनिरुद्धाय । ॐ नमो भगवते पुरुषाय । ॐ नमो भगवते सत्याय । ॐ नमो भगवते अच्युताय । ॐ नमः श्रियै । ॐ नमः कालरात्र्यै । [८]ॐ नमो रात्र्यै । ॐ नमः सृष्ट्यै । ॐ नमो गरुडाय । ॐ नमस्तालाय । ॐ नमो मकराय । ॐ नमो ऋश्याय । ॐ नमोऽनन्ताय । ॐ नमः कौस्तुभाय । ॐ नमो [९]वनमालायै । ॐ नमः पृथिव्यै । ॐ नमः शङ्खाय । ॐ नमः पद्माय । ॐ नमो [१०]गदायै । ॐ नमश्चक्राय । ॐ नमो हलाय । ॐ नमो मुसलाय । ॐ नमश्चापाय । ॐ नमश्चर्मणे । ॐ नमः खड्गाय । ॐ नमः सुभद्राय । ॐ नमो वसुभद्राय । ॐ नमः आषाढाय । ॐ नमो यज्ञताताय । [११]ॐ नमो जयाय । ॐ नमो विजयाय । ॐ नम आमोदाय । ॐ नमः प्रमोदाय । [१२]ॐ ततो व्याहृतिहोमः कार्यः । ततो [१३]गायत्रीहोमं कुर्यात् । [१४]ततः तद्विष्णोः परमं पदमित्यनया । ततो वैष्णवगायत्र्या । ततो युञ्जते मन इति अनुवाकेन । ततः पुरुषसूक्तेन । ततो रथो[१५] अक्षेष्विति ऋक्चतुष्टयेन । ततश्चमक[१६]षट्केन । ततस्त्वाज्येन । [१७]संवत्सर-

---

१. B. अधिवासिता. २. B. परिममाह्याजेन. ३. V. विलीनेनोत्सवेन. A. विलीनेनोत्पूतेन. ४. V.C. मंत्राज्य. ५. V. चतुर्थीप्रयुक्तैः. C. चतुर्थ्यप्रयुक्तैः. ६. V. drops अपि. ७. A. वाज्याहुतीनां जुहुयात्. ८. V.C. drop ॐ नमो रात्र्यै. ९. C. वनमालाय. A. वनमालिन्यै. १०. A. गदाय. ११. A. drops ॐ नमो जयाय. १२. V. drops ॐ. C. ॐ ततो व्याहृति होमं कुर्यात्. १३. V. गायत्र्या. १४. A. ततस्तद्विष्णुः. १५. A.B. अक्षेष्वित्यृकच–. १६. A. –कर्षकेन. १७. V. संवत्सरा.

[1]देवतादिहोमपूर्वकेण [2]कर्मणोत्तरतन्त्रं समापयेत् ।

श्रीविष्णोः प्रतिष्ठाकरणे होम एष प्रकीर्तितः ।
अन्यासां देवतानां [3]च तल्लिङ्गैर्जुहुयाद्धविः ॥ १ ॥

इति श्रीविष्णुधर्मोत्तरेषु मार्कण्डेयवज्रसंवादे वैष्णवहोमविधिर्नाम ॥ १०९ ॥

---

१. V. देवादि. २. C. कर्मणात्तर. ३. A. drops च.

## दशोत्तरशततमोऽध्यायः ।

मार्कण्डेय :— अथ [1]प्रतिष्ठादिवसे प्राप्ते शङ्खपटहतूर्यैः श्रीभगवन्तं विबोधयेत्। विबोधनमन्त्रं पठेत् । ततः कल्प[2]को मूर्तिधरोर्ध्वबाहुः कलशधरस्थपतिश्चात्र भगवान् [3]यश्चेह भगवन्निति भगवन्निति मन्त्रेण देवागारं [4]प्रविशेयुः । ततः पञ्चगव्य[5]मिश्रसर्वौषधिः [6]सर्वान् गन्धान् सर्वरत्नानि सुवर्णं च पिण्डिकाश्वभ्रे निखनेत् । तत्र च मन्त्रा भवन्ति । महाभागः । [7]भासः । [8]त्रिसुपर्णः । भारुण्डम् । [9]मृत्युलाङ्गलम् । स्वस्ति न इन्द्रः । द्वादशाध्यात्मम् । आत्मव्यूहं च । ततः सांवत्सरोद्दिष्टे काले श्रीभगवन्तं । [10]सुसमं स(? सु)दृष्टिपीठिकायां ध्रुवा द्यौरिति [11]निश्चलमनेनैव मन्त्रेण कुर्यात् । नाम चास्योदीरयेत् । प्रतिष्ठासाम च पठेत् । सर्वश्च जनो लाजाकुसुमोत्करेण जयशब्देन कोलाहलं कुर्यात् । वादित्राणि वादयेत् । ॐ नमो भगवते वासुदेवायेत्युदीरयेत् । [12]ब्रह्मसूक्तं च पठेत् । अग्नेरायुरसीति जीवादा(? धा)नं कुर्यात् । कल्पकश्च कलशपाणिः पठेत् ।

ॐ[13]प्रतिष्ठितोऽसि भगवन् सुप्रतिष्ठा भवत्वियम् ।
सान्निध्यं प्रतिपद्यस्व [14]यजमानाभिवृद्धये ॥ १ ॥
शन्नोऽस्तु द्विपदे नित्यं शन्नश्चास्तु चतुष्पदे ।
शन्नोऽस्तु सर्वलोकस्य शन्नो राज्ञस्तथैव च ॥ २ ॥
[15]यजमानः सभृत्योऽयं सपुत्रपशुबान्धवः ।
[16]रक्ष्यो भगवता नित्यं देशश्चायं नमोऽस्तु ते ॥ ३ ॥

॥ इति श्रीविष्णुधर्मोत्तरेषु मार्कण्डेयवज्रसंवादे [17]प्रतिष्ठाध्यायो नाम ॥ ११० ॥

---

१. V.B.C. प्रतिष्ठादि दिवसे. २. A.B.V. –कोटिमूर्तिधरोर्ध–. ३. B. यश्चेय. V. भगवानिति. & drops भगवन्निति . ४ A. प्रवेशेयुः. ५. A. मिश्रासर्वौषधीः. V. मिश्रसर्वौषधिः. ६. V. सर्वगन्धान् . ७. B. भामः. ८. A.B.C. त्रिसुवर्णः. ९. V. मृत्युलांगूलम् . १०. A. ससमं. ११. A.B.C. निश्चल- मनेन. १२. A. ब्रह्मशुक्रं. १३. A.B. प्रतिष्ठितासि. C. प्रतिष्ठासि. १४. A.B. यजमानादि वृद्धये. १५. A. यजमाना सभ्यतोयं सपुत्र–. १६. A. रक्षो. १७. V. भगवद्विबोधनमन्त्रवर्णनो.

# एकादशोत्तरशततमोऽध्यायः ।

मार्कण्डेयः— अथ प्रतिष्ठितस्य [1]श्रीभगवतो बृहत्स्नपनमारभेत् । ततो गायत्रीं पठेत् । इषे त्वेत्यनेन [2]पतद्ग्रहं दद्यात् । वैष्णवगायत्र्या पादुके । [3]भूम्या वृत्वा-य नोऽसी( ? ब्रूही )ति मृदम् । शन्न आप इत्यर्हणम् । देवेभ्यो [4]वनस्पत इति दन्तकाष्ठम् । यामालिखेति जिह्वानिर्लेखनम् । आपो हि ष्ठेत्याचमनम् । पात्रेणार्घ्यम् । [5]युवा सुवासा इति स्नान[6]शाटकम् । ध्रुवा द्यौरित्यासनम् । प्रतिष्ठासाम्ना पादपीठम् । कनिक्रदेति [7]बीजपात्रम् । तेजोऽसि [8]शुक्रमिति दीपम् । मुखादिन्द्रेत्यादर्शम् । तथैव मुखालेपः । रोध्रम्, त्व(? ध्रत्व)क्, कोलमज्जा, [9]वचा, कुष्ठं, नीलोत्पलानि, कुङ्कुमं, चेति मुखालेपः । सहस्रशीर्षेति तैलम् । [10]भद्रं कर्णेनोद्वर्तनम् । सुप्रतीकेन [11]चमसा स्नानम् । ऋषभेन (?)[12]निष्पुंसनस्नानम् । [13]घृतवतीति घृतस्नानम् । दधिक्राव्णेति दध्ना । [14]पयस्वतीति [15]पयसा । गंधद्वारेति गोमयेन । गायत्र्या गोमूत्रेण । अघमर्षणेन पञ्चगव्येन । ध्रुवा द्यौरिति ध्रुवं(?) निष्पुंसनेन । [16]मधु वाता ऋतायतेति मधुना । सुप्रती[17]केनेति इक्षुरसेन । भौमेन गुडोदकेन । अथर्वशिरसा शर्करोदकेन । वामदेवेनेति नद्युभयकूलमृदा । शान्ता [18]द्यौरिति संगममृदा । प्राणसूक्तेन सरोमृदा । वाराहेणेति वराहोद्धृतमृदा । वामदेवेनेति गजदन्तमृदा । वृषभेणेति [19]वृषभशृङ्गोद्धवमृदा । अश्वक्रान्तेति सर्वाभिः । [20]भारुण्डेनामलकैः । विकर्णेनेति रोध्रेण । [21]ज्येष्ठसाम्नेति कालेयकेन । बृहत्साम्नेति बीजपूरकेण । कृष्णाजि-

---

१.-B.C.V. omit श्री. २. C. पतद्ग्रहणं. ३. A. भूम्याधृत्वा यनोऽसीती मृदम्. C. भूम्यायत्वायनोमीति मृदम्. B. भूम्यावृत्वा यनोवीति मृदम्. ४. A.B. वनस्पतय इदं न काष्ठं. ५. A. वायुवास. B. युवास. ६. A. –शकटं. ७. A.B.C. बीजमात्रं. ८. V. तेजोशुक्रमसीति. ९. A. वाचा. १०. V. कर्णेलनेनोद्वर्तनम्. ११. B.C. चमसी. १२. A. निः पुजनस्नानं. B.C. निष्पुञ्छनस्नानम्. १३. A.B. घृतवाती घृतं–. १४. A. पयस्वेति. १५. A.B. पयसां. १६. A.B. मधुवात. १७. C. सुप्रतिकेन इक्षुरसेन. १८. C. द्याविति. १९. A.B. –श्रृंगोद्धतमृदा. २०. V. भारुण्देनेत्या. २१. A B. ज्येष्ठसामिति कालेयकेन.

नेनेति वर्णकस्नानीयेन। [१]अग्नेरायुरसीति तगरेण। श्रीसूक्तेनेति प्रियङ्गुना। विष्णो रराटमिति सिद्धार्थकैः। [२]कुष्टमणिनेति कुष्टेन। शिरिंभिटेनेति कुशोदकेन। या ओषधय इति सर्वौषधीभिः। आ ब्रह्मन् ब्राह्मणो इति बीजैः। पुष्पवतीति पुष्पैः। [३]वनस्पते वीड्वङ्ग इति वनस्पतिकलापैः। पुष्पवतीति फलैः। आशुः शिशानेति रत्नैः। गन्धद्वारेति गन्धैः। ॐकारनमस्कारपवित्रैः शिरःस्नानौषधीभिः। यथा कुष्ठम् सरोध्रम्, मुस्ता, वचा, सर्षपाः, जयन्ती, विजयन्ती, विष्णुक्रान्ता, पुनर्नवा, [४]ब्राह्मी, तगरम्, [५]बला, अतिबला नवबला, नागबलात्वक्पत्रम्, [६]अगुरुबालुकम्, हरेणुकम्, लवङ्गम्, [७]अगुरुम्, [८]तगरम्, उशीरम्, नालिकाचूरकम्, द्वे [९]हरिद्रे चेति। एवं स्नानस्य कलशदानं भवति। तत्रादावेवॐङ्कारनमस्कारपवित्राभिज्ञीत्वा [१०]द्वादशाध्यात्ममृत्पिण्डमाधुरैः सात्त्वतो दद्यात्। ततः [११]सामविन्महावामदेवलक्षरथन्तरशाकरभारुण्डबृहत्सामभिः। अथर्वविदथर्वशिरःप्रत्यङ्गिरःशङ्खमणिप्राणसूक्तमणिप्रतिसरमणिभिः। ऋग्वेदविद् गायत्रीसावित्रीगोसूक्त[१२]सूर्यसूक्तनवोनवोपुरुषसूक्तश्रीसूक्तैः। यजुर्वेदवित् कृष्णाजिनचमकषट्कषड्ऋतुकूष्माण्डरुद्रद्रविणैः। ततः स्वशक्त्या कलशसहस्रं कलशाष्टशतं पञ्च वा शतानि चत्वारि वा शतमष्टाधिकं वा अष्टविंशतिर्वाष्टौ वा स्वर्चिता वनस्पति[१३]कलापगर्भशङ्खध्वनिस्वनेन वाद्यशब्देन [१४]जयत्कारवंदिशब्देन प्रसुभगानर्तितेन देयाः। ततः पवित्रेणोप[१५]कलशं विश्राम्य वेद्यां क्षिपेत्। घृतवतीति [१६]घृतापेक्षं दर्शयेत्। सहस्रशीर्षेण शिखण्डोद्ग्रहणशाटकं दद्यात्। युवा सुवास इति प्रतिनिर्वसनशाटकम्। इदमापः [१७]इति प्रवाहत इत्याचमनीयं ततो जानुभ्यां पाणिभ्यां शिरसा च नमस्कारं कुर्यात्।

---

१. V. अग्न आयुरसीति. C. अग्नेरायरसीति. २. V. कृष्णमणिनेति कुष्टेन. B. कुष्टमणिनेति कुष्टेन. ३. A.B.C. वनस्पतेवीन्त्वंग. ४. A.B. omit ब्राह्मी तगरम्. ५. V. omits बला. ६. V. अगुरुवालकम्. ७. V. अगुरम्. ८. V. omits तरजम्. B. तगरं. ९. C. हरेद्रे. १०. V. दशाध्यात्म–. ११. A.B. सामविन्महादेवलक्षरथंतरशाकर–. १२. V. सूर्यसूक्तपुरुषसूक्त–. १३. V. कालाप. १४. V. जयजयकारवंदि–. १५. C. –कलश विश्राम्य विद्यां–. V. कलशान्विश्राम्य. १६. A.V. घृतावेक्षं. १७. V.B.C. इदमापः प्रवहत–.

[1]बृहत्स्नपनमेतद्धि यः करोति [2]नरो हरेः ।
सर्वपापविनिर्मुक्तो विष्णुलोके महीयते ॥ १ ॥

न केवलं प्रतिष्ठायां सर्वदैवं समाचरेत् ।
शान्तिदं पौष्टिकं काम्यं बृहत्स्नपनमुत्तमम् ॥ २ ॥

दिव्यान्तरिक्षभौमानामुत्पातानां समुद्भवे ।
देवदेवस्य राजेन्द्र बृहत्स्नपनमाचरेत् ॥ ३ ॥

नास्ति लोके समुत्पातो यो ह्यनेन न शाम्यति ।
आरोग्यकामः श्रीकामो मोक्षकामश्च बन्धनात् ॥ ४ ॥

सौभाग्यशान्तिकामश्च बृहत्स्नपनमाचरेत् ।
विद्यार्थी प्राप्नुयाद्विद्यां पुत्रकाम[3]स्तथा सुतान् ॥ ५ ॥

[4]स्त्रियश्च मुख्याः प्राप्नोति याश्च कामयते य(? हृ)दि ।
अकामकामः प्राप्नोति तद्विष्णोः परमं पदम् ॥ ६ ॥

इति श्रीविष्णुधर्मोत्तरेषु मार्कण्डेयवज्रसंवादे [5]श्रीविष्णुबृहत्स्नपनं नाम ॥ १११ ॥

---

१. B. महत्स्वपनमेतद्धि. २. B. नरो हरौ. ३. V. –स्तथाऽस्मजान्. ४. A.B.V. प्रिया.
५. V. बृहत्स्नपनप्रशंसावर्णनो.

## द्वादशोत्तरशततमोऽध्यायः ।

श्री मार्कण्डेयः— [1]ॐ [2]स्नातं ॐ श्रीभगवन्तं भोगैस्समभ्यर्चयेत् । चन्दन[3]बकुलनिर्यास-जातीफलमृगमदकर्पूराणि समस्तानि व्यस्तानि वानुलेपनं [4]दद्यात् । गन्ध-द्वारेति श्रीभगवन्तमनुलिम्पेत् । [5]वायुरग्रेगा इति तालवृन्तं निवेदयेत् । वात आ वातु भेषजमिति वीजयेत् । सावित्राणि सावित्रस्येति चामरं निवेदयेत् । श्रीविष्णुगायत्र्या बीजानि निवेदयेत् । युवा सुवास इति महार्हैर्वस्त्रैः श्रीभगवन्तमाच्छादयेत् । [6]नोपभुक्तैर्नं नीलैर्हिरण्यवर्णै-राभरणैरर्चयेत् । कङ्कतो न कङ्कत इति [7]कङ्कतेन । इन्द्राविश्वे(? श्विने)ति कङ्कतेन [8]दूष्यादूपिरसि प्रतिशंख्या अञ्जनमणिना [9]अञ्जनेन आत्मव्यूहेन कूर्चप्रसादनेन पुष्पवतीति पुष्पैः [10]ग्रथितैरग्रथितैश्च । प्रजापते न हि त्वदेतान्यन्य इति [11]पटवासेन । [12]अग्निमूर्धेति दीपेन । धूरसि धूर्वमिति धूपेन । अभि त्वा शूर नोनुम इति छत्रेण । विष्णुगायत्र्या [13]उपा-नद्भ्याम् । इदं विष्णुर्विचक्रमे इति यानेन । तेनैव प्रवहणेन । केतुं कृण्वन्निति ध्वजैः । तेनैव [14]पताकादिभिः । ततः स्तोत्रैः श्रीभगवन्तमर्चयेत् । ततोऽग्निर्मूर्धेति सर्वभोगपूरणार्थीयमात्रया । ततस्तन्त्रीवाद्यैः ततः शङ्खपटहभेरीनिनादैः [15]सुभगागीतेन वेति ।

अनेन विधिना भोगैः [16]समभ्यर्च्य जनार्दनम् ।<br>
[17]सर्वान् कामानवाप्नोति विष्णुलोकं [18]स गच्छति ॥ १ ॥

इति श्रीविष्णुधर्मोत्तरेषु मार्कण्डेयवज्रसंवादे भोगदानाध्यायो नाम ॥ ११२ ॥

---

१. V.B.C. omit. ॐ. २. B.C. स्नानं. V. स्नातं श्रीभगवंतं समर्चयेत्. ३. V. –बहुल–. ४. V. कुर्यात्. ५. V. वायुरग्रेगा. ६. A.B. नापभुक्तै–. C. नोपभुक्तैर्नं नीलरक्तै-हिरण्यवातैराभरणै–. ७. A.B. कंकते–. ८. A.B. दूषा–. ९. V. ग्रैजनेन. १०. V. ग्रथितै-रग्रास्थितैश्च. C. ग्रथितैरग्रथितैश्च. ११. C. पाटवासैः. १२. B. अग्निर्दूरेति. १३. B. उपनद्भ्यां. १४. A.B. पताकाभिः. १५. C. सुभगातेनचेति. १६. C. समभ्यर्च. १७. A.B. सर्वकामान–. १८. V.C. च.

## त्रयोदशोत्तरशततमोऽध्यायः ।

मार्कण्डेय:— अथ मधुपर्केण [1]श्रीभगवन्तमर्चयेत् । हिरण्यवर्णेत्यर्हणां दद्यात् । दधिक्राव्णेति दधि । घृतवतीति घृतम् । [2]मधु वाता ऋतायते इति मधु । त्रिसुवर्णेन संयोज्य सावित्रेण [3]निवेदयेत् । आपो हि ष्ठेति तर्पणं दद्यात् । [4]वात आ वातु भेषजमिति (?)निष्पुंसनम् । शन्न आप इत्याचमनीयम् । [5]अष्टकविधिना पशुम् । हिरण्यवर्णेति वा मात्राम् । [6]तेनैव बिम्बशङ्खपद्माद्यानि [7]मङ्गल्यानि निवेदयेत् ।

[8]मधुपर्कविधिः सौम्य कथितस्ते मयानघ ।
एतत्कृत्वा महाराज विष्णुलोके महीयते ॥ १ ॥

इति श्रीविष्णुधर्मोत्तरेषु मार्कण्डेयवज्रसंवादे मधुपर्काध्यायो नाम ॥ ११३ ॥

---

१. V. श्रीभगवंतमभ्यर्चयेत्. २. A.B.C. मधुवात ऋतायते. A.B. मधुवात रितायते. C. मधुवात ऋतायत. ३. V. नियोजयेत्. ४. V. वाता. A.B.C. आवात. ५. A.B. अष्टका–. ६. V. तेन. ७. A.B. मंगलानि. ८. V.B.C. विधिस्त्वेष.

## चतुर्दशोत्तरशततमोऽध्यायः ।

मार्कण्डेयः— हिरण्यवर्णेत्यर्हणां दद्यात् । ततः सभक्ष्यं सव्यञ्जनं सहचरितकं [1]सावदंशं सफलं सावित्रेण निवेदयेत् । शक्त्या सुगन्धीनि [2]सुस्वादूनि अम्बुपानानि च आपो हि ष्ठेति च तर्पणेन, [3]वात आ वातु [4]भेषजमिति (?)निष्पुंसनेन, शन्न आप इत्याचमनीयेन, अग्निर्मूर्धेति [5]मात्रया पुनरनेनैव विधानेन, संविभागार्थीयेन अन्नयज्ञेन श्रीभगवन्तमर्चयेत् । मुखादिन्द्रश्चेति ताम्बूलं दद्यात् । तेनैव सुगन्धीनि मुखवासांसि, तेनैव दर्पणम् । पुनरपि श्रीभगवन्तं [6]गीतवाद्यनृत्तैस्समभ्यर्चयेत् ।

अन्नयज्ञेन संपूज्य देवदेवं सनातनम् ।
सर्वान् कामानवाप्नोति विष्णुलोकं च गच्छति ॥

**इति श्रीविष्णुधर्मोत्तरेषु मार्कण्डेयवज्रसंवादे इज्याध्यायो नाम ॥ ११४ ॥**

---

१. A. सादंशं. २. A.B. सुसादूनि अन्नपानानि च. C. सुस्वादूनि अन्नपानानि च. ३. V. C. वात आवतु. ४. A.B. भीषजमिति. ५. A.B.C. माया. ६. V. गीतवादित्रनृत्तैः

## पञ्चदशोत्तरशततमोऽध्यायः ।

मार्कण्डेयः— ततः शङ्करगीतोक्तेन विधानेनेज्यां सात्त्वतः कुर्यात् । कारिणश्च [1]भोगैः संविभजेत् । देवपुरत एव ऋत्विजां प्रत्येकं [2]सुवर्णमहतं वासो गां च सक्(? घृ)तं [3]कांस्यं दद्यात् । स्वशक्त्या च [4]तानभ्यर्चयेत् । ततो ब्राह्मणान् भोजयेत् । भुञ्जानांश्च श्रीभगवन्माहात्म्यं श्रावयेत् । ततो [5]हविष्यं यजमानस्तु अश्नीयात् । ततो देवागारे गीत[6]नृत्तवाद्य-पुस्तकश्रवणे तिष्ठेत् ।

अनेन विधिना कृत्वा प्रतिष्ठां शार्ङ्गिणो नरः ।
सर्वान् कामानवाप्नोति विष्णुलोकं [7]स गच्छति ॥

इति श्रीविष्णुधर्मोत्तरेषु मार्कण्डेयवज्रसंवादे सात्त्वतेज्याध्यायो नाम ॥ ११५ ॥

---

१. V. भोगैः शचिं भजेत्. V.(f.) भोगैः रात्रिं भजेत्. २. A.B.C. सुवर्णं महतं वासो V. –महत्वं वासो गोवत्. ३. V. कास्यं. B. काम्यं. ४. C. तानर्चयेत्. ५. A. हविषं. ६. V. गीतनृत्य–. ७. V. च.

## षोडशोत्तरशततमोऽध्यायः ।

मार्कण्डेयः— वैदिकेनेज्याविधानेन सात्त्वतोक्तेन [1]दर्शितविधिहोमेन सप्ताहं प्रत्यहमर्चां कुर्यात् । ततः सप्तमेऽह्नि बृहत्स्नपनं कृत्वा कल्पकः कलशपाणिः या ओषधय इति [2]तोरणान्यभिषिञ्चेत् । [3]गन्धद्वारेणेत्यनुलेपनेनार्चयेत् । पुष्पवतीति पुष्पैः । अग्निर्मूर्धेति दीपेन । [4]धूरसीति धूपेन । [5]सावित्राणि सावित्रस्येति नैवेद्येन । ततः [6]आदावुत्तरं ततः पूर्वं ततो [7]दक्षिणं ततः पश्चिमं श्रीविष्णुगायत्र्या तोरणान्युद्धरेत् । सर्वे [8]एवर्त्विजस्तोरणान्यादाय गजपृष्ठगा अश्वरथपृष्ठगा गोरथपृष्ठगाः शिबिकागता वा नदीं गच्छेयुः । तत्र च स्वस्ति न इन्द्र इति मन्त्रेणाक्षिपेयुः । भद्रं कर्णेति श्रीदेवतागृहं व्रजेयुः । यश्चेह भगवानिति [9]प्रविशेयुः । ततो भोगविधिपूर्वकेण सर्वेण प्रतिष्ठोक्तेन विधिना श्रीभगवन्तमन्वर्चयेयुः । ततो भुक्तवत्सु विप्रेषु मुञ्चामि त्वेति मन्त्रेण यजमानस्य [10]दीक्षाकङ्कणबन्धं मुञ्चेत् । कवचेन च रक्षणं कुर्यात् । तोरणोद्धरणवर्जं मासि मासि सप्ताहोक्तं विधिं कुर्यात् । यावत्संवत्सरं नित्यमेवं सर्वकामदं कर्म तत् ।

प्रतिष्ठाकल्पमेतत्ते मयोक्तं पार्थिवोत्तम ।
सर्वपापहरं ज्ञेयमायुष्यमपराजितम् ॥ १ ॥

अनेन विधिना कृत्वा स्थापनं शार्ङ्गिणो नरः ।
सर्वकामानवाप्नोति विष्णुलोकं च गच्छति ॥ २ ॥

ओषध्यः [11]पावनं वृक्षा [12]यत्किञ्चिदुपजायते ।
प्रतिष्ठायां हि तत्सर्वं विष्णुलोके महीयते ॥ ३ ॥

---

१. V. दर्शनविधिहोमेन. २. A.B.C. तोरणान्यभिसिंचेत्. ३. A.B. गन्धद्वारेत्यनु-. ४. B. धूरमीति. ५. C. सावित्रेण नैवेद्येन. ६. V. प्रागुत्तरं. ७. V. दक्षिणतः पश्चिमे. ८. V. एष ऋत्विज-. ९. A.B. प्रवेशेयुः. १०. V.C. दीक्षाकरणं बद्धं. ११. V. पवनं. १२. V.B.C. यत्किंचिदुपयुज्यते.

प्रतिष्ठां येऽपि पश्यन्ति क्रियमाणां नराधिप ।
[1]अभिनन्दन्ति ये भक्तास्तेऽपि [2]स्वर्गार्जिनो नराः ॥ ४ ॥

[3]सात्त्वतोक्तेन विधिना नित्यमेव प्रतिष्ठितम् ।
पूजयेद् देवदेवेशं च इच्छेच्छाश्वतं पदम् ॥ ५ ॥

इति श्रीविष्णुधर्मोत्तरेषु मार्कण्डेयवज्रसंवादे तोरणोच्छ्रायविधिर्नामः ॥ ११६ ॥

---

१. A.B.C. अभ्यनन्दन्ति. २. B. स्वर्गजीतो. ३. B. सांत्वतोक्तेन.

# सप्तदशोत्तरशततमोऽध्यायः ।

मार्कण्डेय :— अथ देवयात्राविधिर्भवति । यस्य देवस्य या तिथिः स्वकीया उक्ता तस्य तस्यां तिथौ यात्रां कुर्यात् । यस्य तिथिर्न ज्ञायते तस्य पौर्णमास्यां कुर्यात् । श्रीभगवतो वासुदेवस्य सर्वा एव [1]तिथयः, नास्य तिथिर्नाम । तत्रादावेव सुधावदातं सुचित्रितं देवकुलं कृत्वा शुभेऽह्नि विनायकपूजनं कुर्यात् । [2]द्वितीयेऽह्नि ग्रहर्क्षपूजनं, तृतीयेऽह्नि नागपूजनम्, चतुर्थेऽह्नि प्रमथपूजनम्, पञ्चमेऽह्नि ब्राह्मणपूजनं दीनानाथ[3]दानं च, षष्ठेऽह्नि स्नपनम् । तत्र बृहत्स्नपनं कृत्वा [4]सर्वे एव [5]नागरा जनाः सुशुक्लवा[ स ]सः पवित्र[6]कृतपाणयः महता वाद्यघोषेण सुभगा[7]नर्तितेन सरस्सरित्प्रस्रवणागारं नगरसन्निकर्षमास[8]न्नतमं गच्छेयुः । तस्मादुदककलशानादाय गजपृष्ठगतान् वा वाससा शुभेनाच्छादितान् प्रवेशयेत् । प्रवेश्य श्रीभगवन्तं स्नापयेत् । भोगविधिपूर्वकेन प्रतिष्ठोक्तेन विधिना पूजयेत् । [9]नृत्तवाद्यगीतैश्च श्रीभगवन्तमर्चयेत् । ततो यात्रादिने प्राप्ते स्वल्पार्चां प्रतिमाख्यां कूटागारे मनोहरे नानाप्रकारवसनाच्छादिते सकिङ्किणीके रत्नमाल्यपताकोपशोभिते [10]रथे दृढीकृत्वा अश्वैर्दान्तै[11]र्व्यायतैर्वा पुरुषै[12]र्नगरं भ्रामयेत् । नागरेण च जनेन सुवेशेन चापमात्रपाणिना कूटागारस्य [13]पुरस्ताद्गमनं कर्तव्यम् । अन्यैश्च कुसुममाला[14]विकिरणं कर्तव्यम् । स्तुतीश्च कुर्युः । वन्दिनो मङ्गलपाठकाश्च पुरतो भवेयुः । वादित्राणि [15]वादयंश्चतुरङ्गबलानुयातो राजा चानुगमनं कुर्यात् । नगराधिकृतो वा तदधिकृतो वा गजपृष्ठगतश्च [16]सांवत्सरेणानुगमनं कुर्यात् । निमित्तानि च पश्येत् ।

---

१. C. तिथिः. २. A. omits द्वितीयेऽह्नि ग्रहर्क्षपूजनं तृतीयेऽह्नि नागपूजनम्. ३. A. दाने. ४. A.B.C. सर्व. ५. V. नागरजनाः सुशुक्लवाससः. C. नागरजनः शुक्लवासाः. ६. C, –कृतपाणिः, ७. A. सुभगानर्न्तितेन. B. सुभगानंतितेन. ८. A.B.C. अन्यतम. ९. V. नृत्यवाद्यगीतैश्च. १० A. drops रथे. ११. A.B. –र्ध्यायतैर्वा. १२. B. –र्नगरे. १३. V. पुरस्ताद्भ्रमणं. १४. A.B.C. –मालाविकरणं कर्तव्यम् । स्तुतयश्च कुर्युः । १५. A.B. वादयेत् चतुरङ्ग. १६. C. सांवत्सरोनुगमनं.

विनावातं ध्वजभङ्गे [1]राज्ञां मरणमादिशेत्। छत्रभङ्गे [2]च चक्रभङ्गे [च] जनपदविनाशः। [3]ईषाभङ्गे राजपत्नीमरणम्। रज्जुच्छेदे बालपीडा। अश्वदान्त[4]नरविपत्तौ जनपदपीडा। [5]मातृकाच्छेदे राजमातुः पीडा। अर्चाभङ्गपतने लोकनाशः। समग्रकूटागारस्य पतने सराजकस्य राष्ट्रस्य विनाशः। विस्वरेषु वादित्रेषु [6]परचक्रागमः। ध्वजस्थगव्यादेः [पतने] समरभयम्। अपृष्ठजनपदे दुर्भिक्षभयम्। [7]शुभमशुभं बालका यत्र कुर्युः तत् तथाविधमेव भवति। यस्य च पुरुषस्य तस्मिन्नहनि यादृशे [8]सुखदुःखे भवेतां तादृशे अपि संवत्सरे तस्य [9]ज्ञेये। तस्मात्तत्राह्नि स्वाशितेन सुवाससा प्रहृष्टेन नागरेण [10]जनेन [11]भवितव्यम्। एवं नगरे [12]संभ्राम्य [13]चिह्नागमं ज्ञात्वा प्रतिष्ठायां प्रतिमार्चायां [14]महदुत्सवं कुर्यात्। द्वितीयदिवसादारभ्य यावत् सामर्थ्यं प्रत्यहं नटनर्तकनर्तकीमल्लैन्द्रजालिकादीनां प्रेक्षापूर्वकं धनं दद्यात्। प्रेक्षाकाले च प्रेक्षकं जनं माल्यताम्बूलानुलेपनादिदानेनार्चयेत्। अदृश्यानां प्रेक्षकाणां भूतानां रङ्गादिदिग्विदिक्षु सोदकमन्नाद्यं फलानि पुष्पाणि पललोल्लापिकामोदकानि विकिरेत्। प्रेक्षकाणां यथागतानां च श्रेयश्चा[15]स्तीत्युदीरयेत्। यथागताः च प्रेक्षका आगामिनीं यात्रां पश्यन्त्वित्युदीरयेत्। अशुभ[16]निमित्तोत्पत्तौ तदुपशमनायानेन विधिना पुनर्यात्रां सम्यक् कुर्यात्।

अनेन विधिना यस्तु यात्रां कुर्यात् सुरालये।
स सर्वकामानाप्नोति विष्णुलोकं च गच्छति ॥ १ ॥

धन्यं यशस्यमायुष्यं राज्ञां च [17]विजयप्रदम्।
नागराणां हितकरं यात्राकर्म प्रकीर्तितम् ॥ २ ॥

---

१. B. रक्षो. २. V. omits च चक्रभंगे. ३. V. ईर्षद्भंगे. ४. A.B. नरविपत्तयो जनपीडा. ५. B. मात्रकाच्छेदे. ६. A B. omit from परचक्रागमः to अपृष्ठजनपदे. ७. V. शुभभे शुभं. ८. A.B. सुखदुःख भवतां C. सुखदुःख भवतः ९. C. ज्ञेयो. १०. V. omits जनेन. ११. A B. भ०तव्यं. १२. C. भ्राम्य A. संभ्रामि. १३. V. चिह्नागसं. १४. C. महानुत्सवं. १५. A.B.C. –स्त्विवत्युदयेत्. १६. B. अशुभनिमित्ते स्तदु– A. अशुभनिमित्तैरतदु–. १७. C. विजयावहम्.

तुष्ट्यर्थं त्रिदशेन्द्राणां हितार्थं नगरस्य [1]तु ।
जनस्य [2]राजन् कर्तव्यं यात्राकर्म जयावहम् ॥ ३ ॥

[3]अतिवृष्टिहरं प्रोक्तं त्वनावृष्टिविनाशनम् ।
[4]नागरस्य जनस्यापि तथा व्याधिविनाशनम् ॥ ४ ॥

ईतीनां शमनं ज्ञेयं सौभाग्यजननं स्मृतम् ।
मङ्गल्यं च परं प्रोक्तं सर्वकर्मप्रसिद्धिदम् ॥ ५ ॥

दिव्यान्तरिक्षभौमानामुत्पातानां विनाशनम् ।
[5]यात्राकर्म त्विदं कार्यं देवतायतने सदा ।
[6]प्रतिसंवत्सरं [7]राजन् राज्ञा विजयमिच्छता ॥ ६ ॥

इति श्रीविष्णुधर्मोत्तरेषु मार्कण्डेयवज्रसंवादे यात्राविधिर्नाम ॥ ११७ ॥

---

१. V. च. २. A. राज कर्तव्यं. ३. V.C. अतिवृष्टिकरं. ४. V. omits नागरस्य... उत्पातानां विनाशनम्. ५. C. यात्राकर्ममिदं. ६. V. प्रतिसंवत्सरे. ७. C. राजन राजां.

## अष्टादशोत्तरशततमोऽध्यायः ।

वज्रः—
कां कां विष्णोस्तनुं भक्तः केन कामेन पूजयेत् ।
एतन्मे संशयं छिन्धि त्वं हि [1]सर्वविदुच्यसे ॥ १ ॥

मार्कण्डेयः—
सर्वकामप्रदं देवं चतुर्मूर्तिं तु पूजयेत् ।
[2]पूजयेदनिरुद्धं तु धर्मकामो नरः सदा ॥ २ ॥

तथा सङ्कर्षणं देवमर्थकामस्तु पूजयेत् ।
कामकामोऽपि राजेन्द्र प्रद्युम्नं पूजयेद्विभुम् ॥ ३ ॥

पूजयेन्मोक्षकामस्तु वासुदेवं जगत्प्रभुम् ।
पुत्रकामस्तथा [3]राजन् पद्मनाभं च पूजयेत् ॥ ४ ॥

तथाश्वशिरसं देवं विद्याकामस्तु पूजयेत् ।
[4]भोगानामाप्त( ? नवाप्तु ) कामस्तु पूजयेद् भोगशायिनम् ॥ ५ ॥

भोगिभोगासनासीनं स्थानकामस्तु पूजयेत् ।
मत्स्यं संपूजयेद् देवं धान्यकामो नरः सदा ॥ ६ ॥

तथैवारोग्यकामस्तु [5]कूर्मरूपं च पूजयेत् ।
ज्ञानकामस्तथा हंसं नृसिंहमथ वा विभुम् ॥ ७ ॥

विद्याकामोऽथ वाल्मीकिं व्यासं वाप्यथ पूजयेत् ।
सांख्यज्ञानपरिज्ञानहेतवे कपिलं तथा ॥ ८ ॥

भूतिकामो वराहं तु नृवराहमथार्चयेत् ।
[6]व्यवहारे रणे द्यूते जयकामस्तथा [7]पृथक् ॥ ९ ॥

धर्मकामस्तथा धर्मं [8]ब्रह्माणं चापि पूजयेत् ।
[9]शत्रूणां नाशकामस्तु महादेवं तु पूजयेत् ॥ १० ॥

---

१. C. सर्वविदुध्यसे. V. सर्वं विजानसे. २. C. पूजयेदनिरुद्धस्तु. ३. C. राजन्पद्मनाभमथार्चयेत्. ४. A. omits भोगा... पूजयेत्. C. भोगानां चापकामस्तु. ५. V. कूर्मदेवं ६. A.B. विवहारे. ७. B.C. पृथम्. ८. A.B. ब्राह्मणं वापि. ९. A.B. शत्रुनाशनकामस्तु.

पूजयेद् भार्गवं रामं प्रतिज्ञापारणेच्छया ।
अथ वा राजशार्दूलं रामं दशरथात्मजम् ॥ ११ ॥

श्रीकामस्तु महाराज [1]श्रीसहायं तु पूजयेत् ।
बलकामस्तथा देवं बलभद्रं [2]प्रपूजयेत् ॥ १२ ॥

तमेव राजशार्दूलं कृषिकर्मप्रसिद्धये ।
सर्वकामप्रदं देवं [3]यथेष्टां तनुमास्थितम् ।
पूजयेत् सर्वशक्तित्वात् सर्वकाम[4]फलप्रदम् ॥ १३ ॥

निराशिषः [5]पूजयतो वरेण्यं
देवेश्वरं वासुदेवं पुराणम् ।
यथेष्टदेहोपगतं नृवीरं
स्थानं तदुक्तं परमं हि [6]यत्स्यात् ॥ १४ ॥

इति श्रीविष्णुधर्मोत्तरेषु मार्कण्डेयवज्रसंवादे प्रादुर्भावपूजनाध्यायो नाम ॥ ११८ ॥

*
* *

१. V. श्रीसह्यायं च. C. श्रीसहायस्तु. २. C. तु पूजयेत्. ३. V.C. यथेष्टीं ४. V. –फलप्रदान्. ५. V. पूजयितो. ६. B. बस्यात्.

## Variant Readings of Ms. F

( In Śāradā Script )

MS. F.

Substance—Paper.

Folios—from 257 b to 346 a—( 342 to 346 torn Pages ) *i.e.* 89 folios.

Size—14″ × 9·45″.

Extent—1 to 120 adhyāyas.

Written Space—6″ × 9″.

Appearance—fifty years old.

Ms. is in good condition with fairly good handwritings.

Character—Śāradā Script.

Place of deposit—Central Archaeological Library, Government of India, New Delhi.

पाठान्तराणि

### अ॰ १

Begins – ॐ श्री नारायणाय । ॐ वज्र उवाच । ॐ किं कर्तव्यं मनुष्येण किं कुर्वन् सुखमेधते । अस्मिल्लोके परे चैव केनाप्नोति महत् सुखम् ॥

6 d देवान्मनुजसत्तम

इति श्रीविष्णुधर्मोत्तरेषु मार्कण्डेयवज्रसंवादे तृतीये काण्डे चित्रसूत्रे प्रथमोध्यायः ॥

### अ॰ २

ॐ वज्रः– देवतारूप etc.

7 c आतोद्यं वेत्सि वेत्सित्थं नृत्तं–

11 c गीतपाठ°

d तच्च पाठं द्विधा मतम्

13 a गद्यपद्यानुभावेव ज्ञेयौ°

d तत्र सुवर्तयति जन्तकम्

14 b सुपः सुप्तृतं संस्मृतम्

18 b स्यादौ वचनमन्त्रके

20 a चतुर्थी संप्रदाने स्या then omits upto रिपुसूदन

22 b धातुमुषन्ति

d गद्यमधियद्य पद्य°

इति श्रीविष्णुधर्मोत्तरेषु तृतीयकाण्डे शब्दाध्यायो द्वितीयः ॥

### अ॰ ३

ॐ श्री मार्कण्डेयः—षडक्षरेण etc.

3 b तदेव हि

5 d वृत्तिसंज्ञं

6 a तथातिवृत्तिसंज्ञं

14 b गुरवो नृप

15 b नृपमुख्ये

15 c एतमेवं विधं

16 ab पूरयेदसकृत्तावत्कुर्यादेतन्नृपोत्तम

17 b °न्दांस्तदेव हि

18 b निवृत्संज्ञमधिकेन तु ऋक्तथा

इति श्रीविष्णुधर्मोत्तरेषु मार्कण्डेयवज्रसंवादे तृतीये काण्डे च्छन्दोविधिर्नामाध्यायः ॥

### अ॰ ४

ॐ मार्कण्डेयः–तत्राज्ञा etc.

4 d °विकुत्सनम्

